४ तत्र स्नान तु कुर्वीत त्रिरात्रोपोषितो नर ।
त्र्याणामपि रात्रीणा फल प्राप्नोति निष्फलम् ।।५८
अथ व मुञ्चते प्राणान् मुक्तसङ्गो गतक्लम ।
अतिरात्रफल भुक्त्वा मम लोक च गच्छति ।।५९
तत्र कालीह्रद नाम गुह्य क्षेत्र पर मम ।
अत्र चैकोद्भव स्रोतो बदरीवृक्षनि सृत ।।६०
तत्र स्नान तु कुर्वीत षष्ठकालोषितो नर ।
नरमेधस्य यज्ञस्य फल प्राप्नोति मानव ।।६१
अयात्र मुञ्चते प्राणान् मुक्तरागो गतक्लम ।
नरमेधफल भुक्त्वा मम लोके च मोदते ।।६२
अन्यच्च ते प्रवक्ष्यामि आश्चर्याणि वसुधरे ।
तत्र शखप्रभ नाम गुह्य क्षेत्र पर मम ।
शखशब्द श्रृणोद्भीम मम रात्रे तु द्वादशीम ।।६३
गदाकुण्डमिति ख्यात तस्मिन् क्षेत्रे पर मम ।
यत्र वै कम्पते स्रोतो दक्षिणा दिशमाश्रितम् ।।६४
तत्र स्नान तु कुर्वीत त्रिरात्रोपोषितो नर ।
वेदान्तगाना विप्राणा फल प्राप्नोति मानव ।।६५
अथ वै मुञ्चते प्राणान् कृतकृत्यो गुणान्वित ।
गदापाणिर्महाकायो मम लोक प्रपद्यते ।।६६
पुनश्चाग्निप्रभ नाम गुह्य क्षेत्र पर मम ।
धारा पतति तत्रैका पूर्वोत्तरसमाश्रिता ।।६७
यस्तत्र कुरुते स्नान चतुर्भक्तोषितो नर ।
अग्निष्टोमात् पञ्चगुण फल प्राप्नोति मानव ।।६८
अथात्र मुञ्चते प्राणान् मम कर्मसु निष्ठित ।

---

५८ दे3 4 / 10 ○, दे1 cd○ -a) बा 2 तत्र स्नान प्रकुरुते, दे1 तत्र स्नान प्रकुर्वीत -b) बा 2 अहोरात्रापितो नर -c) बा 2 त्रयाणामतिरात्राणा -d) ब2 पुष्कल(→निष्कल)

५९ दे1 3 4 ○ -a) दे2 5 9 मुवे ते1 तथव (→अथ वै), ब2 दे10 मुञ्चति (→मुञ्चते) -b) बा 2 दे3 10 मुक्तरागा, दे6 त्यक्तामगा (→मुक्तसगो) -c) दे8 अनिशी (→अतिरात्र-), ते1 त्यक्त्वा (→भुक्त्वा) -d) दे10 तु (→च), दे5 9 11 मुवे मम लोके महीयते

६० दे1 ab○ -a) बा कालह्रद, दे6 कालेह्रदो, दे7 कालीह्रदा (→कालीह्रद) -c) बा 2 दे10 यत्र (→अत्र), बा चैत्रोद्भवा, ब2 चैत्रोद्भव, दे6 चव भुव, दे5 / 8 9 मुवे चैवह्रद, दे7 दैवह्रद, ते1 चव स्रव (→चैकोद्भव)

६१ -a) बा 2 दे1 3 4 प्रकुर्वीत (→तु कुर्वीत) -b) मुवे षष्टि° (→षष्ठ°), दे6 7 त्रिरात्रोपोषितो नर -c) दे4 नरमध्यस्य, दे5 नामेधस्य (→नरमेधस्य), दे6 7 नरमेघसम (दे7 °शत) पुण्य

६२ दे5 8 ६२a 'प्राणान् ६६a मुञ्चते' यावत○ (दृ स) -a) बा 2 दे10 अ(ब2 त) त्राथ मुञ्चति प्राणान् -b) दे4 6 °रोगो(→°रागो) -d) बा 2 मम लोक प्रपद्यते, दे10 मम लोक स गच्छति

६३ दे5 6 8 ○ -a) बा 2 दे10 अन्य च (→अन्यच्च) -b) बा 2 दे10 आश्चर्य तु, दे3 4 7 9 11 मुवे महाश्चर्य (→आश्चर्याणि) -c) बा 2 शस्य° (→शङ्ख°) -c) दे3 4 क्षेत्रे (→क्षेत्र), दे7 इम (→पर). -e) बा 2 दे5-11 मुवे श्रूयते शखशब्द तु, (दे5-9 11 मुवे शब्दश्च), दे2ते1 शखशब्द श्रृणो हि मम् -f) बा 2दे2 10 अथ- (→मम), दे5 9 11मुवे द्वादश्यामद्धरात्रके, ते1 अद्धरात्रोपिता नर

बा 2 दे10 ६३ b चरणानन्तरमधिकम—
*लभमानो नरस्तत्र श्रद्दधानो न सशय ।

६४ दे5 8 ○ -c) बा 2 दे10 यत्र पतति स्नाता, दे1 1 यत्र चक पतत स्नातो, दे6 7 यत्र चैक पतत स्नातो -d) ब2 दे3 10ते1 दिशि (→दिशम), दे4 9ते1 आश्रित , दे6 7 आस्थितम, दे10 आश्रिता (→आश्रितम)

६५ -a) बा 2 दे1 3 4 9 प्रकुर्वीत (→तु कुर्वीत) -b) बा 2 अहोरात्रापितो नर -c) दे6 वेदाङ्गनाना, दे7 वेदाङ्गगाना (→वेदान्तगाना) -d) दे9 मानवा (→मानव)

६६ दे5 8 a ○ -a) बा अथवा, दे7 अथात्र (→अथ वै), बा 2 दे10 मुञ्चति, दे4 मुञ्चेत (→मुञ्चते)

६७ -a) दे1 मम चाग्नि°, दे6 मन चाग्न्य° (→पुनश्चाग्नि°) -b) दे1 4 5 ते1 क्षेत्रे (→क्षेत्र) -c) दे2 ते1 चैका तु (→तत्रैका), बा 2 दे10 तत्र धारा पतत्येका

६८ दे1 3 4 cd ○ -b) दे4 6 9 चतुभुक्तो°, मुवे चतुरात्रो° (→चतुर्भक्तो°) -c) दे2ते1 अग्निष्टोम (→अग्निष्टोमात्)

६९ दे1 3 4 ab ○ -a) दे10 तत्राथ (→अथात्र), ब2 दे10 मुञ्चति (→मुञ्चते) -b) बा 2 दे10 सवशुद्धात्मक शुचि -c) ते1 अग्निष्टोम (→अग्निष्टोम-)

दे7 ६९ d 'कर्म' शब्दात्परमधिकम—
व्यवस्थित ।
अश्वमेधफल भुक्त्वा भूमे मत्समतां व्रजेत् ।
अन्यच्च ते प्रवक्ष्यामि गुह्य क्षेत्र पर मम ।

अग्निष्टोमफल भुक्त्वा मम लोक प्रपद्यते ।।६९
तत्राश्चर्यं महाभागे कथ्यमान मया शृणु ।
हेमन्ते चोदकमुष्ण ग्रीष्मे भवति शीतलम् ।।७०
गुह्य सर्वायुध नाम तत्र क्षेत्रे पर मम ।
पतन्ति सप्त स्रोतासि हिमवन्तविनि सृता ।।७१
तत्र स्नान यदा कुर्यात् पञ्चकालोषितो नर ।
राजा भवति सुश्रोणि सर्वायुधकलान्वित ।।७२
अथ व मुञ्चते प्राणान् मम कर्मविनिश्चित ।
स भुक्त्वा राज्यभोगानि मम लोक च गच्छति ।।७३
तत्र देवप्रभ नाम गुह्य क्षेत्र पर मम ।
धारा पञ्चमुखास्तत्र पतन्त्यो गिरिसंश्रिता ।।७४
तत्र स्नान तु कुर्वीत षष्ठकालोषितो नर ।
चतुर्णामपि वेदाना याति पार न सशय ।।७५
अथात्र मुञ्चते प्राणान् लोभमोहविवर्जित ।
वेदकर्म समुत्सृज्य मम लोके महीयते ।।७६
गुह्य विद्याधर नाम तत्र क्षेत्रे पर मम ।
पञ्चधारा पतन्त्यत्र हिमकूटविनि सृता ।।७७
यस्तत्र कुरुते स्नानमेकरात्रोषितो नर ।
याति वैद्याधर लोक कृतकृत्यो न सशय ।।७८
अथात्र मुञ्चते प्राणान् वीतरागो गतक्लम ।
भुक्त्वा वैद्याधरान् भोगान् मम लोकाय गच्छति ।।७९
तत्र पुण्यनदी नाम गुह्य क्षेत्र पर मम । वे १४५

---

सभेदो देवनद्योस्तु समस्तसुरदुलभ ।
दिवोवतीय तिष्ठन्ति देवा यत्र सह प्रिया ।
गन्धर्वाप्सरसश्चैव नागक यास्महोरग ।
देवपयश्च मुनयस्समस्तसुरनायका ।
सिद्धाश्च किन्नराश्चैव स्वर्गादवनरन्ति हि ।
नेपाले यच्छिव स्थान समस्तसुरदुलभम ।
तेभ्यस्तेभ्यश्च स्थानेभ्यस्तीर्थेभ्यश्च विशेषत ।
महादेवजटाजूट नीलकण्ठशिवप्रिया ।
श्वेतगङ्गेति च प्रोक्ता तया सभूय सादरम ।
नानानद्यस्समा ख्याता दश्यादश्यतया स्थिता ।
गण्डक्या कृष्ण यो चैव या कृष्णस्य तनूद्भवा ।
तया सभेदमापन्ना या सा शिवतनूद्भवा ।
त्रिशूलगगेत्याख्याता सापि तत्र महानदी ।
एव नदी समुद्भेद सवतीथकदम्बकम ।
तत्र स्नान तु कुर्वीत मम कम ।

७० –c) दे1 हिमते (→हेमन्ते), ब1 2 हेमते च भवेदुष्ण, दे10 हेमते च भवत्युष्ण, मुवे हेमन्ते चोष्णक तीथ –d) ब1 2 ग्रीष्मकाले च शीतलम, दे10 ग्रीष्मे स च निशीतलम

७१ –b) दे10 11 क्षेत्र (→क्षेत्रे), द3 4 तत्क्षेत्र परम मम –c) दे1 3-6 9 10 श्रोतासि (→स्रोतासि) –d) दे1 4 हिमवन्ते (दे4 ° त) समाश्रिता, दे2 10ते1 हिमवन्तो विनि सृता, दे5-9 11 मुवे हिमवनि सृतानि व

७२ ब1 ○ –a) दे2 ते1 यदा (ते1 °था) कृत्वा, दे5-9 11 मुवे प्रकुर्वीत (→यदा कुर्यात), ब2 दे10 यस्तत्र कुरुते स्नान –b) दे5-9 11 मुवे सप्तरात्रोषितो नर –d) मुवे सर्वायुधि° (→सर्वायुध°), दे5 °कलान्विते (→°कलान्वित )

७३ ब1 2 ○ –a) दे6 7 10 अथवा (→अथ वै) –b) दे10 सर्वधमविनिश्चित, ते1 सवकमविवर्जित –c) दे6 7 राज– (→राज्य–), द2 –भोग्यानि दे5 8 9 –भोगादि दे6 7 11 मुवे –भाज्यानि (→–भोगानि)

७४ ब1 2 ○ –b) दे1 3 4 क्षेत्र गुह्य, दे5 गुह्य क्षेत्रे (→गुह्य क्षेत्र) –c) दे1 3 4 यत्र (→तत्र) –d) दे1 4 पतते, मुवे पतन्ति (→पतन्त्यो)

७५ ब1 2 ○ –a) दे1 4 प्रकुवन्ति, दे10 प्रकुर्वीत (→तु कुर्वीत) –b) मुवे त्वष्ट° (→षष्ठ°) –c) दे1 5 8 देवाना, दे10 वर्णा*(→वेदाना) –d) दे1 3 4 यान्ति पार, दे7 पार याति (→याति पार)

७६ ब1 दे6 ○ –a) दे10 तत्राथ, ते1 अथवा (→अथात्र), ब2 दे10 मुञ्चति (→मुञ्चते) –b) ब2 दे10 लाभालाभ° (→लोभमोह°), दे1 3 4 °समन्वित (→°विवर्जित ) –c) दे1 देवकम ब2 वेदलोके, दे10 देवलोके (→वेदकम), दे7 –समुद्भूत (→–समुत्सृज्य) –d) ब2 दे10 मम लोक प्रपद्यते

७७ ब2 दे6 ○ –a) दे5 8 9 गुह्य विद्याधरो नाम, ते1 गुह्य****** –b) दे1-3 मुवे क्षेत्र(→क्षेत्रे) –c) ते1 धा* (→धारा ), ब2 दे10 पतति धारा पञ्चैव –d) दे2 10 ते1 हेम° (→हिम°), ब2 तत्र हेमनिधि सृता

७८ दे6 ab ○ –b) ब1 दे10 चतू° (→एक°) –c) ते1 यान्ति (→याति), ब2 दे1 3 4 7 10 विद्याधर (→वैद्याधर), दे7 स्थान (→लोक), दे6 याति वैद्यापरम स्थान

७९ दे1 d ○ –a) ब2 दे10 तत्राथ (→अथात्र), ब1 2 दे10 मुञ्चति (→मुञ्चते) –b) दे1 °रोगो (→°रागो) –c) दे1 4 मुक्तो, दे3 भुक्तो, दे10 भुक्ता (→भुक्त्वा), ब1 दे1 3 4 10 विद्याधरान (→वैद्याधरान), ब1 2 दे1 3 4 10 लोकान् (→भोगान) –d) ब1 2 दे10 लोक हि, दे6 7 लोक च, मुवे लोक स (→लोकाय)

१ शिलाकुण्डलताकीर्णं गन्धर्वाप्सरसेवितम् ।।८०
तत्र स्नान तु कुर्वीत अष्टभक्तोषितो नर ।
भ्रमते सप्तद्वीपानि स्वच्छन्दगमनालय ।।८१
अथात्र मुञ्चते प्राणान् मम मार्गानुसारिण ।
सप्तद्वीपान् समुत्सृज्य मम लोकाय गच्छति ।।८२
गन्धर्वेति च विख्यात तस्मिन् क्षेत्रे पर मम ।
एकधारा पतत्यत्र पश्चिमा दिशमाश्रिता ।।८३
[तत्र स्नान प्रकुर्वीत षष्ठकालोषितो नर ।
गन्धर्वनगर प्राप्य मोदते विगतज्वर ।।८४
अथात्र मुञ्चते प्राणान् मम कर्मसु निश्चित ।
ब्रह्मलोकमतिक्रम्य मम लोक प्रपद्यते ।।८५
तत्राश्चर्यं महाभागे कथ्यमान मया शृणु ।
श्रूयते ब्रह्मनिर्घोषो अर्द्धरात्रे तु द्वादशीम् ।।८६
चतुर्णां लोकपालानामस्ति गुह्य पर मम ।
धारा पतन्ति चत्वारि चत्वारो दिशिमाश्रिता ।।८७]
तत्र स्नान प्रकुर्वीत चतूरात्रोषितो नर ।
मोदते लोकपालेषु स्वच्छन्दगमनालय ।।८८
अथात्र मुञ्चते प्राणान् मम भक्त्या व्यवस्थित ।
लोकपालान् समुत्सृज्य मम लोकाय गच्छति ।।८९

८० –a) ब2 पुण्या, दे10 पुण्य (→पुण्य–) –b) दे1 गहन* न, मवे गुहचक्षेत्रे (→गुह्य क्षेत्र) –c) ब1 दे9 शिला (→शिला–), ब1–कुल–, दे1 3 4-7 10 मुवे –कुञ्ज–(→–कुण्ड–) न1 –नता (→–लता–), ब1 2 –कीर्णे, दे7 9 11 मुवे –कीर्णा(→–कीर्ण) –d) ब1 2 °सेविते दे2 -9 11 मुवे ते1 °सेविता (→°सेवित)

८१ –a) ब1 2 दे1 4 प्रकुर्वीत (→तु कुर्वीत) –b) दे6 3 9 11 ते1 °भुक्तो°, मुवे °रात्रा° (→°भक्तो ) –c) दे5-9 11 °द्वीपेषु (→°द्वीपानि), मुवे सप्तद्वीपेषु भ्रमति –d) ब1 2 स्वच्छन्दगमरालय

पूर्वार्धोत्तरार्धयोमध्ये दे1 ७२ c–७९ यावच्छलोका आवृत्ता

८२ –a) ब1 दे10 तत्राथ (→अथात्र), ब1 2 दे10 मुञ्चति (→मञ्चते) –b) ब1 2 दे10 मम कर्मपरायण , दे2 6 ते1 मम गर्भा (दे6 ते1 कर्मा) नुसारिण , दे5 7 9 11 मुवे मम धर्मानुसारक –c) ब1 2 दे10 परित्यज्य (→समुत्सृज्य) –d) ब1 2 दे10 लोक च, दे2 5-9 11 मुवे लोक स (→लोकाय)

अत पर दे7 अधिकम—
*तत्र देवह्रद नाम मम क्षेत्र वसुन्धरे ।
यत्र कान्तासि भूमे ।

८३ ब2 bcd ○ –a) दे11 विख्याते (→विख्यात) –b) ब1 दे1 2 4 मुवे क्षेत्र (→क्षेत्रे) –c) ब1 दे10 य (दे10 त) त्रधारा पतत्येका, दे1 3 4 पञ्चधारा पतन्त्यत्र –d) दे5 6 ते1 दिशिम (→दिशम), ब1 आस्थिता , दे5 8 9 आश्रित , दे2 10 आश्रिता (→आश्रिता), दे1 3 4 हिमकूटविनि सृता

८४ ब2 abc ○ ब1 दे1 3 4 10 पुस्तकेष्वेव अस्ति –b) ब1 दे10 °भक्तो° (→°कालो°) –d) ब1 दे10 °क्लम (→°ज्वर )

८५ ब1 2 दे1 4 10 पुस्तकेष्वेव अस्ति –a) ब1 2 दे10 तत्राथ मुञ्चति प्राणान् –b) ब1 2 दे10 मम कर्मपथि स्थित दे3 4 मम कर्मपरायण –c) ब1 2 दे10 गान्धर्वनगर त्यक्त्वा

अत पर ब1 2 दे10 अधिकम्—
*तत्राश्चर्य महाभाग शृणुष्व विगतक्लम ।
अर्धरात्रे गीतशब्द मम कर्मसुखावहम ।
तत्र ब्रह्मह्रद नाम मनोज्ञ स तु शीतलम ।
योजनद्वयमात्र च तस्य वृक्षस्य चोत्तरे ।
तत्र स्नान प्रकुर्वीत दशरात्रोषितो नर । [ 5 ]
ब्रह्मलोक समासाद्य मत्प्रसादेन मोदते ।
अथवा मुञ्चति प्राणान् मम कर्मपथि स्थित ।
ब्रह्मलोकमतिक्रम्य मम लोक प्रपद्यते ।
[–1 दे10 विगतक्लमा (→विगतक्लम ) –4 ब1 तस्मिन (→तस्य) ]

८६ पाठान्तर नास्ति

८७ –b) ब1 चतुरो दिशमाश्रिता , ब2 चत्वारो दिशि आश्रिता , दे10 पश्चिमा दिशमाश्रिता

८८ –a) दे2 5-9 11 मुवे ते1 तु कुर्वीत (→प्रकुर्वीत) –b) ब1 2 दे8 10 11 मुवे चतू° (→चतु°) –c) ब1 2 दे10 मोदते लोकपालैस्तु

८९ –a)ब1 2 दे10 अथ वै (→अथात्र),ब2 दे10 मुञ्चति (→मुञ्चते) –b) ब1 2 दे10 कर्म–, दे6 7 लक्ष्य– (→भक्त्या), मुवे मम कर्मपरायण –c) मुवे परित्यज्य (→समुत्सृज्य) –d) ब1 2 दे10 मम लोक प्रपद्यते, दे6 7 मुवे मम लोक स (दे6 7च) गच्छति

**तत्र देवह्रद नाम मम क्षेत्रे वसुधरे ।**
**यत्र क्रान्ताऽसि मे भूमि बलियज्ञविनाशनात् ।।९०**
**स ह्रदो वरदे श्रेष्ठो मनोज्ञ सुखशीतल ।**
**अगाधश्च ह्रदो देवि देवानामपि दुर्लभ ।।९१**
**तस्मिन् ह्रदे महाभागे पदा मम कृतोदके ।**
**चक्राङ्कितानि मत्स्यानि पर्यटन्ति इतस्तत ।।९२**
**अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुधरे ।**
**महाश्चर्यं विशालाक्षि यत्र तत्परिवर्त्तते ।**
**श्रद्दधानापि पश्यन्ति न पश्येत्पापकर्मण ।।९३**
**तस्मिन् देवह्रदे भूमे चतुर्विशतिद्वादशीम् ।**
**सौवर्णानि च पद्मानि दृश्यन्त्युदितभास्करे ।**
**तावत् पश्यन्ति ते भूमि यावन्मध्यदिने स्थिने ।।९४**
**तत्र स्नान प्रकुर्वीत दशभक्तोषितो नर ।**
**दशानामश्वमेधाना फल प्राप्नोति मानव ।।९५**
**अथात्र मुञ्चते प्राणान् मम चित्तव्यवस्थित ।**
**अश्वमेधफल भुक्त्वा भूमे मत्समता व्रजेत् ।।९६** वे १४

९० -a) दे10 तत्तु (→तत्र) -b) मुवे क्षेत्र (→क्षेत्रे), ब1 2 दे1 3 4 10 यशस्विनि, ते1 वसुन्धरि (→वसुन्धरे) -c) दे1 3-10 मुवे भूमे (→भूमि), दे10 यत्राक्रान्तासि मे भूमे, ते1 यत्र कान्तासि मे भूमे -d) दे1 9 मुवे बलेर ते1 विलेर (→बलि–), दे2 ते1 यत्र (→–यज्ञ–)

९१ ब2 ab ○ -a) दे1 3 5 9 10 वरद–, दे6 वरदो, दे8 मुवे ते1 वरद (→वरदे) -b) दे4 °शीतले, दे9 °शीतल, (→°शीतल ) -c) ब1 2 ह्रदो भूमि, दे2 ते1 ह्रद देवि, दे10 ह्रदो भूमौ (→ह्रदो देवि) दे5 9 11 मुवे अगाध सौरयदग चापि (दे6 7 चैव) -d) ब1 दुलभम, दे6 दुलभा (→दुलभ )

९२ -a) दे2 ते1 तीर्थे (→ह्रदे), ब1 2 दे10 सारूप्य (ब2°पा) दश्यते तत्र -b) ब1 2 पादा, ते1 यथा (→पदा), दे5-9 11 मुवे मम वै नियमोदके -c) ब1 2 दे10 चक्राङ्किताश्च (दे10°थ)मत्स्या वै, दे5 9 11 मुवे मत्स्याश्चक्राङ्किताश्चैव -d) दे1 5-9 11 मुवे पयटन्ते (दे6 7°टन्त),दे10 पयटिति(→पयटन्ति)

९३ -a) दे10 अन्य च (→अन्यच्च) -b) दे2 ते1 तच्छणोहि (→तच्छृणुष्व) -e) दे5-9 11 श्रद्दधानास्तु पश्येत, मुवे पश्यन्ति श्रद्दधानास्तु -f) ब2°कमद , दे5-9 11 मुवे °पूरुष (→°कमण )

९४ दे10 ab ○ -a) ब1 2 दे2 भूमि, दे4 9 11 पुण्ये, मुवे पुण्य (→भूमे) -b) ब2 दे4 5 8 9 °द्वादशी, दे2 मुवे ते1 °द्वादश, दे7 °द्वादश्या, दे11 °द्वादशी (→°द्वादशी) -c) दे2 ते1 दिव्यानि (→पद्मानि) -d) दे5 9 11 मुवे दश्यन्ते भास्करोदये -e) दे1 4 ते भूमे, दे2 मे भूमि, ते1 मे भूमे, दे5 9 11 मुवे भूतानि (→ते भूमि), ब1 2 दे10 तावत्तु दश्यते भूमे (ब2 °मि) -f) दे1 3 4 स्थित (→स्थिते), ब1 2 यावन्मेदिनि सस्थिते, दे5-9 11 मुवे यावन्मध्य दिन भवेत

अत पर दे5-9 11 मुवे अधिकम—
*यत्र स्नाता दिव यान्ति शुद्धा वाक्कायजैर्मलै ।
[–1 दे6 तत्र (→यत्र), दे6 स्नानाद, दे7 स्नान (→स्नाता), दे6 जलै (→मलै ), दे7 शुद्धाया कायजे मले (→शुद्धा वाक्कायजैर्मलै ) ]

९५ -a) दे10 प्रकुर्वति (→प्रकुर्वीत) -b) ब1 2 दे10 मुवे दशरात्रो°, ते1 एकरात्रो° (→दशभक्तो°) -d) दे5 9 11 मुवे प्राप्नोति (दे5 11 मुवे °त्य) विकल फलम

९६ दे10 cd ○ -a) दे7 प्राणा (→प्राणान), ब1 2 दे10 तत्राथ मुञ्चति प्राणान -b) ब1 मम**, ब2 मम कम–, दे2 मम चित्त, दे6 7 मच्चिन्ताया, दे10 मम चिन्त–, मुवे ते1 मम चिन्ता– (→–मम चित्त–), दे10 –व्यवस्थिता (→–व्यवस्थित ) ते1 मम चित्त व्यवजयेत -d) ब1 2 मम लोक च गच्छति, दे2 तद भूमि** समितम, दे3 तद भूमे समता व्रजेत, दे4 त* धम सम भवेत, दे7 स्वगलोके महीयते, ते1 मम लोक स च व्रजेत

९६ श्लोकानन्तर दे5 9 11 मुवे अधिकम—
*अन्यच्च ते प्रविक्ष्यामि क्षेत्र गुह्य पर मम
सभेदो देवनद्योस्तु समस्तसुखवल्लभ
दिवोऽवतीय तिष्ठन्ति देवा यत्र सह प्रिया
गन्धर्वाप्सरसश्चव नागकन्या सहोरगै
देवषयश्च मुनय समस्तसुरनायका ।। [5]
सिद्धाश्च किन्नराश्चैव स्वर्गादवतरन्ति हि
नेपाले यच्छिवस्थान समस्तसुखवल्लभम
तेभ्यस्तेभ्यश्च स्थानेभ्यस्तीर्थेभ्यश्च विशेषत
महादेवजटाजूटान्नीलकण्ठाच्छिवालया
श्वतगङ्गेति या प्रोक्ता तया सभूय सादरम ।। [10]
नाना नद्य समायाता दश्यादृश्यतया स्थिता
गण्डक्या कृष्णया चैव या कृष्णस्य तनूद्भवा
तया सभेदमापन्ना या सा शिवतनूद्भवा
त्रिशूलगङ्गेत्यायाता सापि तत्र महानदी
एव नदीसमुद्भेद सवतीथकदम्बकम ।। [15]
मम क्षेत्रे समायात पुण्य परमपावनम्
वसुधे त्व विजानीहि देवानामपि दुलभम्
यच्च सिद्धाश्रम इति विख्यात पुण्यवद्धन
भृगोस्तपोवन तत्र सर्वाश्रमवर प्रति
नानापुण्यफलोपेत कदलीषण्डमण्डितम् ।। [20]

१०३ एते पञ्चदशा गुह्या शालग्रामे प्रकीर्त्तिता ।
शुद्धान् भागवतान् कृत्वा एतद् भूमि मया कृतम् ।।९७
पूर्वामुखमह तत्र शालग्रामे यशस्विनि ।
भविष्यामि न सदेहो भूमे भागवतप्रिय ।।९८
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुधरे ।
अन्तर्गुह्य पर श्रेष्ठ यन्न जानन्ति मोहिता ।।९९
शिवो मे दक्षिण स्थान तिष्ठते विगतज्वर ।
लोकाना प्रवरश्रेष्ठ सर्वलोकवरो हर ।।१००
त यो वन्दति हे भूमे वन्दितोऽह न सशय ।
वृथागमनमित्याह एवमेतन्न सशय ।।१०१

निचलैश्चव प नागै केसरैश्च विराजितम
मजूगशोकवकुलैश्चूतश्चव प्रियालकै
नारिकेलैश्च पूगैश्च चम्पकैजम्बुभिधवै
नारन्नवदगीभिश्च जम्बीरैर्मातुलुङ्गकै
केनकीमल्लिकाजातीयूथिकाराजिराजितम ।।
कु दै कुरवकैर्नागै कटजैर्दाडिमरपि
आगत्य यत्र क्रीड ति देवाना मिथुनानि च
तस्मिन ह्रदे महापुण्ये पुण्यनद्यास्तु सगमे
स्नानाच्छतारवमेधाना फल प्राप्नाति मानव
स्ना वा तत्र तु वैशाखे गोसहस्रफल भवेत ।।
माघमासे पुन स्नात्वा प्रयागस्नानज फलम
कार्तिके मासि य स्नाति तुलामस्थे दिवाकरे
विधिना नियत सोऽपि मुक्तिभागी न सशय
यस्त्रिरात्रमुषित्वा तु नियतो नियताशन
राजसूयफल प्राप्य मादते देववद्दिवि ।।
यज्ञस्तपोऽथवा दान श्राद्धमिष्टस्य पूजनम्
यत्किञ्चित क्रियते कर्म तदनन्तफल भवेत
भूमेस्तस्यापराधाश्च मवानेव क्षमाम्यहम
गङ्गायमुनयोयद्वत मगमो मत्यदुर्लभ
तथैवाय दवनद्यो सगम समुदाहृत

[–1 दे5 11 क्षेत्रगुह्य, दे6 गुह्य क्षेत्र (→क्षेत्र गुह्य) –2 दे6 °सुरदुर्लभ, दे11 °सुरवल्लभ (→°सुखवल्लभ) –7 दे6 नेपाले यच्छिव स्थान ममस्तसुरदुर्लभम –9 दे6 शिवास्तथा, दे7 9 11 मुवे शिवालय (→शिवालया) –15 दे6 नन्दी समुद्गीत (→नदीसमुद्भेद)

–18 दे5 6 8 9-11 यश्च (→यच्च) –19 मुवे शभोस (→भूगाम), दे6 7 °चर (→°वर) –20 दे6 कपिला° (→कदली°)

–21 दे5-9 11 निचोलैश् (→निचुलैश्) –23 दे11 नालिकेरैश्(→नारिकेलैश्), दे6 पदै, दे7 वटै (→धवै) –24 दे6 कुटजैश्चापि(→बदरीभिश्च),दे6 जभीरैर्(→जम्बीरैर्). –25 दे5 8 11 °राजिता (→°राजितम)

–26 दे6 दाडिमैस्तथा, दे7 दाडिमै शुभै (→दाडिमैरपि)

दे7 २६ पङ्क्त्यनन्तरमधिकम्–
नारङ्गै कुटिजैश्चापि क्रमुकै कुसुमै शुभै ।
दाडिमैबदरीभिश्च जम्बीरैर्मातुलिङ्गकै ।

–30 दे6 7 11 लभेत (→भवेत) –31 दे6 7 जल (→फल) –3 दे5 6 8 मुक्तिभागा (दे6°वा) (→मुक्तिभागी)

–36 भोजन(→पूजनम) –37 दे6 7 लभेत(→भवेत) – 9 दे6 7 नद्यो (→यद्वत)

९७ दे2 ते1 ○, दे1-9 11 मुवे cd ○ –b) ब1 **र्त्तिता (→प्रकीर्त्तिता) –ab) दे1-9 11 मुवे एतद गुह्य पर देवि मम क्षेत्रे वसुन्धरे

९८ –ab) दे5 9 11 मुवे अहमस्मिन महाक्षेत्रे धरे पूवमुख स्थित –c) दे5-9 11 मुवे शालग्रामे महाक्षेत्रे –d) दे2 भूमि (→भूमे), ब1 2 दे10 भागवता प्रिय, दे6 7 भागवताश्च य (→भागवतप्रिय)

९९ –b) दे2 ते1 तच्छृणोहि (→तच्छृणुष्व) –c) ब1 तत्र गुह्य, ब2 दे10 यत्र गुहृय, दे3 4 अत्र गुहृय (→अन्तगुहृय) दे5 8 11 क्षेत्र (→श्रेष्ठ) –d) ब1 2 दे1 , 4 10 न जानन्ति विमोहिता (दे10 °ते)

१०० –a) ब1 2 मुवे दक्षिणे (ब1 मुवे °ण–), दे4 दक्षण, द10 दक्षिणा– (→दक्षिण), ब1 2 दे10 मुवे स्थाने (→स्थान) –b) मुवे तिष्ठ वै (→तिष्ठते) –c) ब1दे6 मुवे प्रवर दे3 4 वरद (→प्रवर–) –d) ब1 2 दे10 सवलोके (दे10 °क) महेश्वर, दे6 स्वगलोकवरो हर

१०१ ब2 ○, ब1 cd ○ –a) दे3 वदति(→वदति), ब1 तव विन्दत मा विन्देद्, दे2 तम वदति मा वदे, दे5-9 11मुवे त ये (दे6 ते य) विदति (मुवे विन्दन्ति) ते (दे7 ये) देवि दे10 तमवदित मा वन्देद्, ते1 त वन्दति मा वदे –b) ब1 विमतोस्मि, दे2 ते1 वन्दितोऽस्मि, दे10 विगतोऽस्मि (→वन्दितोऽह), दे5-9 11 मुवे नून मामेव विन्दति –c) दे2 ते1 यद्यागमनमित्याह, दे3 4 वृ (दे4 व ?) त्यागमन मृत्प्राहु (दे4 टु), दे5-9 11 मुवे ये मा विन्दन्ति देवेशि –d) ते1 एकम् (→एवम्), दे5 9 11 मुवे ते विदन्ति शिव परम

अत पर दे5-9 11 मुवे अधिकम्—
*अह यत्र शिवस्तत्र शिवो यत्र वसुन्धरे ।
तत्राहमपि तिष्ठामि आवयोर्नान्तर क्वचित ।

**शिवाग्रे वन्दयित्वा तु भूमे मामेव वन्दति ।**
**लभते पुष्कला सिद्धि या मयात्र सुकीर्त्तिता ॥१०२**
**समन्ततो मम क्षेत्र दशयोजनविस्तरम् ।**
**मृताप्यत्र गति यान्ति मम कर्मानुसारिण ॥१०३**
**एतत् ते कथित भद्रे शालग्रामस्य निश्चयम् ।**
**यत्त्वया पृच्छित पूर्वं पुण्य भागवतप्रियम् ॥१०४**
**आख्यानाना महाख्यान द्युतीना परमा द्युति ।**
**पुण्याना परम पुण्य तपसा च महत्तप ॥१०५**

**गुह्याना परम गुह्य लाभाना लाभमुत्तमम् ।**
**शुद्धाना परम शुद्ध गतीना परमा गति ॥१०६**
**न एतत् पिशुने दद्यान्न पठेत् पापकर्मसु ।**
**ये च देवद्विषो मूढा लाभालाभेन मोहिता ॥१०७**
**कुशिष्याय न दातव्य न दद्याच्छास्त्रदूषके ।**
**नीचाय च न दातव्य ये न जानन्ति सेवितुम् ॥१०८**
**सुशिष्यायैव दातव्य धीराय गुणवत्यपि ।**
**गुरुशुश्रूषवे नित्य ब्रह्मण्ये शरणाय च ॥१०९** वे १४५

१०२ –a) बा1 2 दे10 शङ्कर, ते1 शिवोग्र (→शिवाग्रे), दे5 शिव शि*ते विदति, दे6 9 11 मुवे शिव यो वन्दते भूमे –b) बा1 2 दे2 ते1 विन्दति, दे5 9 11 मुवे वन्दते, दे10 सुन्दरि (→वन्दति) –c) दे10 लभता (→लभते), दे3 4 विपुल, दे6 पकला-(→पुष्कला) –d) दे2 ये (→या), बा1 2 मायया परिकीर्त्तिता, दे3 4 ये मयात्र प्रकीर्त्तिता, दे5 9 11 मुवे एव यो वेत्ति तत्त्वत (दे6 7 मानव ), दे10 ये मया परिकीर्त्तिता

१०३ –a) बा1 2दे10 cd○ –a)दे2-4 क्षेत्रे(→क्षेत्र), बा1 2 समाप्त च मम क्षेत्र, दे5 9 11 मुवे एवमेत महाभागे, दे10 सन्तताच्च (?) मम क्षेत्र –b) दे3 4 °विस्तरे (→°विस्तर), दे5-9 11 मुवे क्षेत्र (दे5 क्षेत्रे, दे6 7 तीथ) हरिहरात्मकम –c) दे5-9 11 मुवे मृता येऽत्र (दे7 यत्र) (→मृताप्यत्र)

अत पर दे5-9 11 मुवे अधिकम—

*मुक्तिक्षेत्र प्रथमतो रुरुखण्ड तत परम ।
सभेदो देवनद्योश्च त्रिवेणी च तत परम् ।
क्षेत्र प्रमाण विज्ञेय गण्डकीसङ्गत परम ।
एव सा गण्डकी देवि नदीनामुत्तमा नदी ।
गङ्गया मिलिता यत्र भागीरथ्या महाफला । [5]
अपर तन्महत्क्षेत्र हरिक्षेत्रमिति स्मृतम् ।
आदौ सा गण्डकी पुण्या भागीरथ्या च सगता ।
तस्य तीथस्य महिमा ज्ञायते न सुरैरपि ।

[–2 दे6 7 देवनद्योस्तु (→देवनद्योश्च) –3 दे6-9 11 °सगत (→°सगतम्) –4 दे6 9 11 देवी (→देवि) –5 दे7 गङ्गाया समता याता (→गङ्गया मिलिता यत्र)]

[–6 दे7 महत्तत्र, दे8 महाक्षेत्र (→महत्क्षेत्र) ]

१०४ बा2 cd ○ –a) दे7 एतन्मे, दे10 एव ते (→एतत्ते), दे10 कथितो (→कथित), बा1 भूमि, बा2 भूमे (→भद्रे) –b) दे6 ते1 साल° (→शाल°), बा2 निश्चय, दे5 9 11 मुवे सुन्दरि (→निश्चयम्) –c) दे5 9 11 मुवे पूव पृष्ट त्वया यच्च (दे7 यश्च) –d) बा1 दे3 4 10 सव (→पुण्य), दे2 भागवत (→भागवत-)

दे5 9 11 मुवे b चरणानन्तरमधिकम्—

*गण्डक्याश्चैव माहात्म्य सवकल्मषनाशनम ।

१०५ बा2 ○ –b) बा1 दे 4 10 द्युतीना च महाद्युति –c) दे 4 पुण्याना च महापुण्य –d) दे2 ते1 तापसाना महातप, दे3 4 तपसा परम तप

१०६ बा1 दे3 4 10 ते1 पुस्तकेष्वेव cd अस्ति –b) दे5 7 9 11 मुवे गतीना परमागति

१०६ श्लोकानन्तर दे5-9 11 मुवे अधिकम—

*महालाभस्तु लाभाना नास्त्यस्मादपर महत ।

१०७ बा2 ○ –a) बा1 दे10 एतन्न (→न एतत), दे2 ते1 पिशुन (→पिशुने) –b) बा2 दे10 न मूखाय शठाय च, दे2 ते1 न शठे पापकमणि –c) दे2 ते1 ये च देवद्विजद्वेषी, दे3 4 ये च देवद्विजा द्वेपात –d) दे2 लोभलोभेन मोहित, दे3 लोभालोभेन मोहिता, दे4 लोभलक्षन मोहिता, दे10 लाभालाभेन वर्जिता, ते1 कामलोभेन मोहिता

दे5 9 11 मुवे अस्य लोकस्य स्थाने पाठ —

*पिशुनाय न दातव्य न शठाय गुरुद्रुहे ।
ये च पापा कृतघ्नाश्च द्विजदेवापराधिन ॥

[–2 दे6 7 द्विजद्वेषापराधिन (→द्विजदेवापराधिन ) ]

१०८ –b) दे6 °दूषक (→°दूषके) –c) मुवे न च (→च न), बा1 न च नार्याय दातव्य, बा2 न नाचार्याय दातव्य, दे10 नमना च न दातव्य –d) बा1 2 दे10 यो न जानाति सेवितुम्

१०९ ते1 ab ○, दे5 9 11 मुवे cd ○ –a) बा1 2 दे5-9 11 मुवे सुशिष्याय च (बा2*) दातव्य –b) दे6 7 वीराय (→धीराय), बा1 दे2-4 गुणवानपि, दे5-9 11 मुवे शुभबुद्धये (→गुणवत्यपि) –d) बा1 2 ना (बा2*) ब्रह्मशरणाय च, दे2 ते1 ब्रह्मण शरणाय च, दे3 4 ब्रह्मण्याय गुणाय च

१०९ श्लोकात पर दे5-9 11 मुवे अधिकम्—

*लोभमोहमदाद्यैर्ये वर्जिता पुण्यबुद्धय ।

[दे5 8 9 महाद्यैर् (→मदाद्यैर्), दे6 7 जिताश्चापुण्यबुद्धय ]

१ य एतत् पठते नित्य कल्यमुत्थाय मानव ।
कुलास्तारयते देवि सप्त सप्त च सप्त च ।।११०
एव मरणकाले तु मा कदाचिन्न विस्मरेत् ।
यदीच्छेत् परमा सिद्धि मम लोक स गच्छति।।१११
एतत् ते कथित भद्रे शालग्रामस्य यत् फलम् ।
सर्वभागवतश्रेष्ठे किमन्यत्परिपृच्छसि ।।११२

।।इति श्रीवराहपुराणे भगवच्छास्त्रे चतुश्चत्वारिंशदधिकशततमोऽध्याय ।।१४४।।

# १४५

सूत उवाच ।❀
शालग्रामस्य माहात्म्य श्रुत्वा गुह्य महोजसम् ।
विस्मय परम गत्वा हृष्टा वचनमब्रवीत् ।।१
धरण्युवाच ।❀
अहो क्षेत्रस्य माहात्म्य यत्त्वया भाषित हरे ।
एतच्छ्रुत्वा महाभाग जाताऽस्मि विगतज्वरा ।।२
एक मे परम गुह्य धर्मं परमनिश्चयम् ।
शालग्रामात्पर गुह्यमस्ति क्षेत्र पर क्वचित् ।।३
ततो महीवच श्रुत्वा सर्वलोकमयो हरि ।
उवाच मधुर वाक्य धर्मकामा वसुधराम् ।।४

---

११० दे3 4 cd ○ –b) दे3 4 म गच्छेत परमा गतिम –c) द2 ते1 तारिताम्तु कुरास्तेन, दे5-9 11 मुवे कुलानि तारितान्येव (दे6 7 °न्येत्र), दे10 तारितश्च कुल तेन –d) दे2 सप्त*****, दे6 7 तेन सप्त च सप्त च, ते1 दशपूर्वास्तथापरान्

१११ दे3 4 ○ –a) ब1 2 द10 एतन् (→एव), दे10 मरणकालेऽपि (→मरणकाले तु) –b) ब1 मा क***विस्मरेत, दे5 6 8 9 11 मुवे न कदाचिद विमुह्यते, दे7 कदाचिदुच्यते नर –d) ब1 2 द6 - लाक च, दे2 5 6 9 11 लोकाय, दे10 लोके च (→लाक स), ब2 विन्दति द10 निष्कला (→गच्छति)

११२ दे3 4 ○ –a) दे5 8 9 11 शालग्रामस्य क्षेत्रस्य, दे6 7 शालिग्रामस्य माहात्म्य, मुवे क्षेत्रस्य शालग्रामस्य –b) दे2 ते1 शालग्राममहातपा , द5 8 9 11 मुवे माहात्म्य परम मया, दे6 7 परम कथित मया –c) ब1 2 द10 सर्वभागवता श्रेष्ठ, द5-9 11 मुवे कथित ते (दे6 मे, दे8 च) महादवि –d) द5 9 11 मुवे किमन्यच्छ्रोतुमिच्छसि (दे6 °ति)

**पुष्पिका**—

**पुराणनाम**—ब1 2 इति वराहपुराणे भगवच्छास्त्रे, दे2-11 इत्यादि वा (दे4 श्रीवा, दे6 व) राहपुराणे भगवच्छास्त्रे, मुवे इति श्रीवराहपुराणे भगवच्छास्त्रे, ते1 इत्यादि महापुराणे वाराहे भगवच्छास्त्रे **अध्यायनाम**—ब1 2 दे10 शाल(दे10*)ग्रामवणनो(द10 °न)नामाध्याय , दे2ते1 शालग्राममाहात्म्यो नाम, दे3 4 शालग्राममाहात्म्यवणन, दे5 7-9 शालग्रामक्षेत्रमाहात्म्य नामाध्याय , दे6 शालग्रामक्षेत्रमाहात्म्य, दे11 मुवे शालग्रामक्षेत्रमाहात्म्य नाम

**अध्यायसख्या**—ब1 2 दे5-7 9 11 ○, मुवे पञ्चचत्वारिंशदधिकशततमोऽध्याय ।।१४५।।, ते1 एकषष्ट्युत्तरशततमोऽध्याय

१४५

❀ दे1 ○, ब1 2 दे10 धरण्युवाच

१ दे1 6 ○, दे9 १-२ a ○ –a) दे7 शालि° (→शाल°), दे4 10 महात्म्य (→माहात्म्य) –b) ब1 दे3 धम्म, ब2 दे10 धम्म–, दे4 धर्मा, दे7 पुण्य (→गुह्य) –c) दे10 याता (→गत्वा) –d) ब1 2 दे10 हृष्टतुष्टमना (ब1 °न) स्तथा (ब2तदा).

❀ ब1 2 दे1 6 9 10 ○, दे3 धरण्यूवाच

२ दे1 ○, ब2 ab ○, दे9 a ○ (द्र १ पा वि) –a) ब1 त्रिनेत्र–(→ त्रस्य), दे4 10 महात्म्य (→माहात्म्य) –c) ब2 दे4 महाभागे (→महाभाग) –d) ब2 द6 °ज्वर (→°ज्वरा)

३ दे1 5 9 11 मुवे ○ –a) ब1 2 एब (→एक), ब1 2 दे10 धम्म (→गुह्य) –b) ब1 2 दे10 गुह्य (→धम) –d) ब1 2 अस्मिन् (→अस्ति), ब1 2 क्षेत्र– (→क्षेत्र)

४ दे1 5-9 11 मुवे ○ –a) ते1 महचा (→मही–) –b) ब1 2 दे10 °लोकाश्रयो (→°लोकमयो) –d) दे10 धमकामा वसुन्धरा

१४५ अध्यायस्य ४ श्लोकान्तर दे5 9 11 मुवे अधिकम—

*रुरुखण्डमित प्रोक्त यत्त्वया परमार्चितम् ।
रुरुर्नाम कथ को वा आसीत्पूर्वं जनादन ।।
यन्नाम्ना परम क्षेत्र हृषीकेश त्वयाश्रितम ।
कथयस्व जगन्नाथ यद्यनुग्राह्यता मयि ।।
श्रीवराह उवाच ।*
आसीत्पुरा महाभागो देवदत्त इति द्विज ।
भृगुवशे समुत्पन्नो वेदवेदाङ्गपारग ।।
यज्ञविद्यासु कुशलो व्रतनिष्ठोऽतिथिप्रिय ।
तत्राश्रमपद पुण्य पुण्यद्रुमलतान्वितम् ।।
शान्तैर्मृगगणै कीण कन्दमूलफलान्वितम् ।

तत्र तीव्र ततोऽतप्यद देवदत्तो मुनीश्वर ॥
वर्षाणामयुत साग्र तत इ द्रो व्यचिन्तयत ।
अय तपस्यति मुनिमत्पद कि जिहीषति ॥
तपसो नाशमिच्छामि निश्चित्यैव सुराधिप ।
काम वसन्तसहित ग न्धर्वान ससखीन पुन ॥
उवाच मधुर वाक्य क्षुब्धेन्द्रियमना प्रभु ।
अहो सखाय किञ्चिन मे महत्कायमुपस्थितम ॥
तस्य मे चिन्तयानस्य यूयमेव परा गति ।
भवत्प्रसादात स्वस्थोऽह निभयस्तद विचिन्त्यताम ॥
तदि द्रस्य वच श्रुत्वा ते काममलयानिला ।
प्रत्यूचुर्देवराजानमाज्ञापय निज प्रियम ॥
जितेन्द्रियस्यापि मन कस्य सक्षोभयामहे ॥
क वा सुतीव्रात तपसो भ्रशयाम सुपेशलम ।
आज्ञाप्रसाद ते लब्ध्वा वद शीघ्र सुखी भव ।
इत्युक्त शतमन्युव प्रत्युवाचाथ मानयन् ।
तदैव मे गता चिन्ता भवता दशन यदा ।
जातमेवाऽखिल काय मम तच्छृणुताखिला ।
हिमशैले महारम्ये हृषीकेशाश्रितो मुनि ।
देवदत्त इति र्यातस्तपस्यति महत्तप ।
जिघक्षुर्मे पद नून तत्तपो विनिवत्यताम ।
इत्युक्तास्ते तदाज्ञा व गृहीत्वा शिरसा द्रुतम ।
प्रस्थानाय मति चक्रु कामदेवपुर सरा ।
प्रस्थाप्याग्रे वस त च मलयानिलमेव च ।
तत सुरपति शक्र प्रम्लोचा नाम नामत ।
प्रशस्य प्रणयात पूव मानयन्निदमब्रवीत ।
गच्छ स्वस्तिमती दवि विजयाय मुनेर्भुवि ।
यत्राश्रमपद तस्य देवदत्तस्य वै मुन ।
ललितै स्वविलासैस्त मोहयित्वा वश कुरु ।
यथा मत्प्रीतिरतुला त्व मे कायकरी सदा ।
तथा कुरुष्व भद्र ते हृषीकेशसमीपत ।
इन्द्रस्याज्ञा समादाय ययौ तस्याश्रम प्रति ।
समीपोपवने रम्ये नानाद्रुमलताकुले ।
मधुरालापबहुले कोकिलाना कलाकुले ।
रसालमञ्जरीव्यासरसामोदालिसकुले ।
गुञ्जन्मत्तालिसन्नादश्रुतिश्रुतिधरान्विते ।
गन्धवगीतसमिश्रे मलयानिलशीतले ।
सम्फुल्लपङ्कजवने सुनिमलजलाशये ।
मुनिप्रभावसन्त्यक्तक्रौयस्थलजलाशये ।
मधुरामोदमधुरे चित्तक्षोभविधायिनि ।
प्रविश्य सा वरारोहा गीत सुमधुर जगौ ।
यदा ध्यानादुपरत समाधेर्विरतश्चिरात ।
गान्धव प्रारम्भस्ते तु ग न्धर्वा सुरसम्मता ।
तस्मिन्नेव क्षणे लब्ध्वाऽवसर पञ्चसायक ।
विचकष धनु पौष्प सायकान् समयूयुधत ।
सलक्ष्य त मुनि शान्त भाविदैवबलात्कृतम् ।
श्रुत्वा त मधुर गीत पञ्चमालापसुन्दरम् ।
क्षुब्धचित्त समभवत स मुनि सशितव्रत ।
चकष च धनु काम पुन पुनरतन्द्रित ।
देवव्रतोऽपि स मुनि क्षुब्धात्मा नियतोऽपि सन ।
विचचाराश्रमपद पश्यन्सन्तुष्टमानस ।
दूराद्ददश तन्वङ्गी क्रीडन्ती कन्दुकेन ताम ।
दृष्ट्वैव ता तु चावगी विद्ध कामेन पत्रिणा ।
तस्या समीपमगमत स्मयमानो महामुनि ।
सापि दृष्ट्वा देवदत्त सज्जन्ती हरिणेक्षणा ।
कटाक्षयन्ती सहसा लज्जमाना विगूहति ।
करेण कन्दुक घ्नन्ती चञ्चलाक्षी सुपेशला ।
स्रसता केशपाशेन गलत्पुष्पेण राजता ।
मनो हरन्ती तस्यर्षेर्ललितैर्विभ्रमोद्भवै ।
एतस्मिन्नन्तरे तस्या दक्षिण पवनोऽहरत ।
वास सूक्ष्म गलन्नीविकाञ्चीदामगुणान्वितम् ।
पुष्पबाणोऽप्यविध्यत्त दृष्ट्वाऽवसरमन्तिके ।
सम्मोहित स तु मुनिगत्वान्तिकमथाब्रवीत् ।
का त्व कस्यासि सुभगे वनेऽस्मिन् किञ्चिकीषसि ।
मादशान्कि मृगयसे बाहुपाशेन वा मृगान ।
विष्ट्या गृहीत्वा वामोरु कि वाऽस्मान्कर्तु मिच्छसि ।
सवथास्मास्तवाधीनान् यद्वद्वा कारयिष्यसि ।
तत्तत्कुर्मो वय नित्य त्वदधीना स्म सवथा ।
अथ ता हसमाना च गहीत्वा दक्षिणे करे ।
समालिङ्ग्य विषज्जन्नी रमयामास मोहित ।
रममाणस्तया साद्ध भुञ्जन्भोगान् मनोरमान ।
तप प्रभावोपनतान दिवारात्रमतन्द्रित ।
बहूनहगणानेव रममाणो यदच्छया ।
सुप्तोत्थित इवाकस्माद्विवेकेन समन्वित ।
निर्वेद प्राप्तवान सद्यस्तदोवाच भृशातुर ।
अहो भगवतो माया ययाह भृशमोहित ।
जानन्नपि तपोभ्र श प्राप्तो दैवबलात्कृत ।
अग्निकुण्डसमा नारी घृतकुम्भसम पुमान् ।
इति प्रवादो मूर्खाणा विचारान्महदनन्तरम् ।
घृतकुम्भोऽग्नियोगेन द्रवते न तु दशनात ।
पुमान्स्त्रीदशनादेव द्रवते यद्विमोहित ।

नापराधस्त्वतो नार्या स्वय यदजितन्द्रिय ।
इत्युक्त्वाऽसा निवृत्तात्मा व्यससजत्सुराङ्गनाम ।
प्रम्लोचा दववशगा मनस्येतदचिन्तयत ।
उपसर्गा महानत्र तपसो भ्र शकारक ।
त्यक्त्वाश्रममिम चान्यत्स्थान गत्वा समाहित ।
तपस्तीव्र समास्थाय शाषयिष्ये कलेवरम ।
इति निश्चित्य मनसा गत्वा भग्वाश्रम प्रति ।
गण्डकीसगमे स्नात्वा सन्तर्प्य पितृदेवता ।
विष्णु शिव च सम्पूज्य तपस्थान विचिन्तयन ।
पश्यन भग्वाश्रम रम्यमुत्तर गतवान शनै ।
गण्डक्या पूर्वभागे तु विविक्त विजन शुभम ।
दृष्ट्वा तीरेषु विश्रान्तस्तपाभूमिमचिन्तयत ।
सगुतुङ्ग समासाद्य शङ्कराराधने रत ।
अतप्यत तपो घार शिवदशनलालस ।
अथ दीर्घेण कालेन सन्तुष्ट स महेश्वर ।
लिङ्गरूपधर साक्षादुपर्यपि तथा ह्यध ।
तियक कज्जलधाराभियुक्तस्तत्तापशान्तिकृत ।
उवाच च प्रसन्नात्मा मुन पश्यस्व मा शिवम् ।
मामेवावेहि विष्णु त्व मा पश्यस्वान्तर मम ।
पूर्वमन्तरभावेन दृष्टवानसि यन्मम ।
तेन विघ्नोऽभवद्येन गलित त्वत्तपो महत ।
आवामेकेन भावेन पश्यस्त्व सिद्धिमाप्स्यसि ।
तप प्रभावाल्लिगानि प्रादुर्भूतानि यत्र वै ।
समगमिति विख्यातमेतत्स्थान भविष्यति ।
स्नात्वाऽत्र गण्डकीतीर्थे मम लिंगानि योऽर्चयेत ।
तस्य यागफल सम्यग्भविष्यति न सशय ।
इति दत्त्वा वरान् शम्भुस्तत्रैवान्तरधीयत ।
देवदत्तोऽपि स मुनि सम्प्राप्य ज्ञानमुत्तमम ।
शिवोपदिष्टमार्गेण सायुज्य परम गत ।
प्रम्लोचापि मुनेर्गर्भ सम्प्राप्याश्रममन्तिकात ।
प्रसूता कन्यका त्यक्त्वा स्वर्गमेव जगाम ह ।
पुनर्जातमिवात्मान मन्यमाना शुचिस्मिता ।
सापि कन्या मृगैस्तत्र रुरुभिर्वर्द्धिता सती ।
रुरुरित्येव विख्याता पितुरेवाश्रमे स्थिता ।
युवभि प्रार्थ्यमानापि चित्ते कञ्चन नाभ्यगात् ।
तत सुनिश्चय कृत्वा तपसे धृतमानसा ।
चिन्तयन्ती जगन्नाथ भगवन्त रमापतिम् ।
मासे सा प्रथमे बाला फलाहारपरायणा ।
एकान्तर दिन प्राप्य द्वितीये त्रिदिनान्तरे ।
तृतीये पञ्चमदिने चतुर्थे सप्तमान्तरे ।

पञ्चमे च पराकेन षष्ठे पञ्चदशाहके ।
मासेन सप्तम चव शीणपर्णाशनाष्टमे ।
त्यक्त्वा तान्यपि मा बाला वाय्वाहारा बभूव ह ।
सैव वर्षशत स्थित्वा हरावेकाग्रमानसा ।
समाधिना समा भूत्वा स्थाणुवन्निश्चिताऽभवत ।
द्वन्द्वानि नाविदच्चापि आत्मभूतान्तर विना ।
परा काष्ठा समापन्ना प्रकाशमयकान्तिधृक ।
तत्तेजसा वृत्त सव तदा दृष्ट्वा वसुन्धरे ।
अह विस्मयमापन्नस्तस्या प्रत्यक्षता गत ।
स निरुद्धेन्द्रियग्रामा नाचक्षत बहि स्थितम् ।
तदा हृषीकानाविश्य सहृत्य स्व हृदो बहि ।
स्थितोऽह वसुधे देवि अक्ष्णो प्रत्यक्षता गत ।
हृषीकाणि नियम्याह यत प्रत्यक्षता गत ।
हृषीकेश इति ख्यातो नाम्ना तत्रैव सस्थित ।
सा मा यदा च नापश्यदुन्मील्य नयने तदा ।
बहि स्थित च मा दृष्ट्वा प्रणनाम कृताञ्जलि ।
गदगदस्वरसयुक्ता अश्रुक्लिन्नविलोचना ।
रोमाञ्चिततनुश्चासीत कदम्बमुकुलाकृति ।
तथाभूता तु ता दृष्ट्वा प्रावोचमहमङ्गनाम ।
अयि बाले विशालाक्षि तुष्टोऽह तपसस्तव ।
वर याचय मत्तस्त्व यत्ते मनसि वर्तते ।
अदेयमपि ते दद्यि यदन्येषा सुदुर्लभम् ।
इति श्रुत्वा प्रभोर्वाक्य प्रणम्य च पुन पुन ।
स्तुत्वा त देवदेवेश प्रबद्धकरसपुटा ।
ददासि चेद्वर मह्य देवदेवजगत्पते ।
अनेनव स्वरूपेण भगवन् स्थातुमर्हसि ।
स्थितोऽस्म्यत्रैव भद्र ते अपर वरय शुभे ।
दुर्लभ ते वर दद्यि तपसाऽह प्रतोषित ।
इत्युक्त्वा मा प्रणम्याह रुरु सा शसितव्रता ।
यदि प्रसन्नो देवेश तदा मा कुरु पावनीम् ।
मन्नाम्ना क्षेत्रमेतच्च ख्यात भवतु नान्यथा ।
तामह देवि सुभगे प्रावोच पुनरेव हि ।
तीर्थाना परम तीर्थं तव देहो भवत्वयम् ।
तव नाम्ना च विख्यातमेतत्क्षेत्र भविष्यति ।
तव तीर्थे कृतस्नानस्त्रिरात्रोपोषितो नर ।
विलोक्य मा भवेत्पूतो मम वाक्यान्न सशय ।
ब्रह्महत्यादिपापानि ज्ञात्वाऽज्ञात्वा कृतान्यपि ।
यास्यन्ति विलय क्षिप्रमेवमेतन्न सशय ।
इति दत्त्वा वरास्तस्यै तत्रैवान्तर्हित स्थित ।
सापि कालेन सञ्जाता तीर्थभूता तथाऽभवत ।

एतत्ते कथित देवि रुरुमाहात्म्यमुत्तमम ।
रुरुक्षेत्रस्य प्रभवमेतदगुह्य च पर मम ।
[इति श्रीवराहपुराणे भगवच्छास्त्रे रुरुक्षेत्रहृषीकेशयोर्माहात्म्य नाम षट्चत्वारिंशदधिकशततमोऽध्याय ॥१४६॥]

धरण्युवाच ।ॐ

अत्याश्चय श्रुत ह्येतद्रुरुक्षेत्रसमुद्भवम ।
हृषीकेशस्य महिमा त्वया य उपवर्णित । [175]
अन्यच्च यत्पर गुह्य क्षेत्र परमपावनम ।
वक्तुमर्हसि देवेश पर कौतूहल मम ।
श्रीवराह उवाच । [178]

[–1 मुवे °षण्डा° (→°खण्ड°), दे6 7 परमार्चिते (→परमार्चित) –2 दे5 8 9 11 का (→को), दे5 जनादन, दे6 8 जनादन (→जनादन) –3 दे11 त्वयाश्रिय (→त्वयाश्रितम) –4 दे6 7 –मिति (→मयि) –5 दे5 8 11 वाराह उवाच, दे6 वराह उवाच, दे9 वाराह

–6 दे6 महाभागे (→महाभागो) –7 दे6 समुत्पन्ने (→समुत्पन्नो) –8 दे7 °प्रिया (→°प्रिय) –9 दे6 °पद (→°पद), दे6 7 °लताश्रित (→°लतान्वितम) –10 दे5 शान्ते, दे8 शा त (→शान्तर), दे5 °गण, दे6 8 °गणा– (→°गणै), दे6 कीर्णे (→कीर्ण)

–11 दे6 नरेश्वर (→मुनीश्वर) –1? मुवे ○, दे7 अग्न (→अय), दे6** (→मुनिर) –14 मुवे ○, दे6 भ्रश विष्यामि, दे7 9 11 भ्रशयिष्यामि (→नाशमिच्छामि) –15 दे6 7 तत (→स), दे6 7 पुरा, दे8 11 पुर (→पुन)

–18 दे6 7 चिन्त्यमानस्य (→चि तयानस्य) –20 दे6 7 इति तस्य (→तदिन्द्रस्य)

–21 दे5 9 राजान (→राजानम) –22 दे5 8 9 11 मन, दे6 मना (→मन) –2? दे6 7 सुतीव्र (→सुतीव्रात), दे6 7 तपस (→तपसो), दे5 भ्रशया *, दे6 भ्रशयाम, दे7 भ्रशयामात (→भ्रशयाम), दे6****, दे7 स्व का पदात (?) (→सुपेशलम) –24 दे6 आद्या (→आज्ञा–), दे6 प्रसादा त (→प्रसाद ते), दे7 लुब्ध्वा (→लब्ध्वा) –25 दे6 ○

–26 दे6 7 ○ –27 दे6 7 ○, दे5 8 ममैतच्(→मम तच) –28 दे6 7 ○, दे9 11 °श्रिते (→°श्रितो) –29 दे6 ○, दे5 महातप, दे7 महातपा (→महत्तप) –30 दे6 ○

–31 दे5 9 च, दे11* (→वै), दे11 द्रुम (→द्रुतम) –32 दे5 कामदेवे (→कामदेव), दे6 °पुरा सुरा (→°पुर सरा) –33 दे5 8 9 11 ते (→च) –34 दे6 7 प्रालोचा (→प्रम्लोचा) –35 दे6 7 प्रणम्य (→प्रशस्य)

–38 दे5-9 11 त्व (→त), दे5 9 11 वशी (→वश)

–42 दे6 समीप (→समीपो) –43 दे5-8 कुलाकुले, दे11** कुले (→–कलाकुले) –45 दे7 ○, दे6 श्रुतिशास्त्र (→श्रुतिश्रुति–), मुवे °धारान्विते (→°धरान्विते)

–46 दे7 ○ –48 दे6 °जलाक्षये, दे7 11 °जालालये (→°जलाशये) –50 दे6 7 स मधुर (→सुमधुर)

–51 दे6 7 पर–(→यदा) –5 दे6 पचनायक (→पञ्च सायक) –54 दे9 'समयुयुजत' ○ –55 दे9 ○ दे6 सलक्षि (→सलक्ष्य), दे6 °देवि, दे7 °देव (→–दैव–)

–56 दे9 ○ –57 दे9 'क्षुब्धचित्त समभवत्स' ○, दे5 मुनि (→मुनि) –59 दे6 7 दढ° (→देव°), दे6 7 नियतो हि (→नियतोऽपि) –60 दे6 °पदे (→°पद)

–61 दे6 7 कमकेन (→कन्दुकेन), दे6 तान (→ताम) –62 दे6 दष्ट्वा* तनु–, दे7 दष्ट्वा तु तनु–, दे8 11 दष्टैव तनु दे9 दष्टेव तनु–(→दष्टैव ता तु), दे7– चार्वांगी (→चावगी) –64 दे6 क्रीडते, दे7 क्रीडती (→सज्जन्ती) –65 दे6 7 विगूहते (दे7 °ती) (→विगूहति)

–66 दे6 कामुक, दे7 कमक–(→कन्दुक) –67 मुवे स्रशता (→स्रसता), दे6 राजत (→राजता) –68 दे5 त स्पश, दे6 तस्यर्थे, दे8 त स्पर्शे (→तस्यर्षेर), दे5 8 11 ललित (→ललितर), दे5 8 9 11 विभ्रमङ्कुवा, दे6 विभ्रमस्य वा, दे7 विभ्रम तु वा (→विभ्रमोद्भवै)

–71 दे6 पुष्कराणोथ–, दे7-9 पुष्पवाणोथ– (→पुष्पवाणोप्य–), दे6 –विध्यते, दे7 –विद्य त दे8 –विध्य त (→–विध्यत्त) –7 दे5 8 9 चिकीषति (→चिकीर्षसि) –74 दे7 सदशान (→मादशान्), दे6 7 वादतान् (→वा मृगान्) –75 दे5 6 विदध्वा, दे7 विनि–, मुवे बदध्वा (→विष्ट्वा), दे6 कथ (य) मिच्छसि, दे7 कथमिच्छसि (→कर्तु मिच्छसि)

–76 दे5 8 9 कारयिष्यति (→कारयिष्यसि) –80 दे5 'मनोरमान' ○

–81 दे5 ○, दे7 तत (→तप), दे6 यतनाद (→–पनतान), दे6 °रात्रिम (→°रात्रम) –82 दे6 °नेक (→°नेव) –83 दे6 7 स्वप्नस्थित (→सुप्तोत्थित) –84 दे6 निदेव (→निर्वेद), दे7 भूयस (→सद्यस) –85 मुवे भागवती, दे6 भागवतो (→भगवतो)

–87 दे6 7 घृतकुण्ड° (→घतकुम्भ°) –88 दे5-9 11 महदतर (→महदनन्तर) –89 दे6 घतकुण्डे°, दे7 घतकुण्डो° (→घतकुम्भो°) –90 दे6 7 यत्र मोहित (→यद्विमोहित)

–92 दे6 7 9 मुवे विससज्ज–(→व्यससजत्) –94 दे6 °कारका (→°कारक) –95 दे6 हित्वा (→गत्वा)

–97 दे6 सश्चित्य (→निश्चित्य) –99 दे7 ○ –100 दे7 ○ –105 दे6 7 परमेश्वर (→स महेश्वर)

–107 दे6** कजल°, मुवे तियक च जल° (→तियक्क जल°), दे5 8 9 °शान्तकृत (→°शान्तिकृत्) –108 मुवे च (→स्व–) –109 दे5 8 9 विष्णुस(→विष्णु) –110 दे6 °भागेन (→°भावेन)

१३ शृणु भूमि प्रयत्नेन कारण परम मम ।
गुह्यमस्त्यपर गुह्य हिमश्रृङ्गशिलोच्चये ।
गोनिष्क्रमणक नाम गावो यत्रावतारिता ॥५
यथा निष्क्रमण प्राप्य सौरभाणा महायशा ।
सप्ततिर्यत्र कल्याणि और्वो यत्र प्रजापति ॥६

—111 दे6 7 ○ —112 दे6 भावोय (→भावेन) —113 दे5 8 तत्र (→यत्र) —115 दे6 7 चाचयेत (→योऽच्चयेत)

—117 मुवे वर (→वरान) —120 दे6 7 च (→[अ] पि), दे6 7 भग (→गभ)

—121 दे5 8 9 11 मुवे प्रसूता (→प्रसूता) —123 दे6 7 भगोस (→मृगैस) —124 दे6 7 रुरुरित्यथ (→रुरुरित्येव)

—12( द6 7 स्वनिश्चये (दे7 °य) (→सुनिश्चय) —130 दे( 7 पचमे (→पचम—)

—1 1 मवे नवरात्रेण (→च पराकेन), दे5 9 11 षष्ठ (→षष्ठे) —13? दे6*****, दे7 च जलाहारा (→सप्तमे चैव) —13 दे6 7 वानाहारा (→वाग्वाहारा) —134 दे6 हरावक्राग्र° (→हगवेकाग्र°) —135 दे, 8 9 समो (→समा)

—1 8 मुवे द्रष्ट्रा (→दष्ट्रा) —1 9 दे7 तस्गा (→तस्या) —140 दे6 °स्थितात, दे7 °स्थिनाम (→°स्थितम्)

—141 दे( 7 11 मुवे हृपीकाण्या° (→हृपीकाना°) दे6 स्व हृदे, दे7 सुहृदो (→स्व हृदो) —142 दे6 7 भ्रण (—अभ्णो), दे9 गता (→गत) —144 दे7 ख्याता तु (→तत्रैव) —145 मुवे यदा च (→यदैव), मुवे तत (—तदा)

—146 दे( स्थिते (→स्थित) —148 दे7 °स्वकुला° (→°मुकुला°) —149 दे7 च (→तु), दे6 7 सहमगना (→—महम ङ्गनाम) —1,0 दे( 7 तपमा (→तपसम)

—151 दे5 तनस (→मत्तस) —15 दे( 7 ततो (→प्रभोर्) —154 दे11 °देवेशै (→°देवेश), दे6 प्रवोधो (→प्रबद्ध—) —155 दे7 ददामि (→ददासि)

—157 दे5 8 9 11 मुवे वग्या (→वरय) —160 दे6 देवेशि (→देवेश)

—161 दे6 ख्यातु (→ख्यात) —165 दे7 ○

—166 दे7 ○ —167 दे7 ○ —168 दे6 7 ○ —169 दे6 7 ○ —170 दे7 ○, दे6 कम न (→कालेन)

—171 दे9 'रुरुमुत्तमम्' ○ —172 दे9 ○, दे6 रुरुक्षेत्रस्य भवसे तद् गुह्य परम मम

[**पुष्पिका**—

**पुराणनाम**—दे9 ○, दे5-8 11 इत्यादि वा (दे6 व) राहपुराणे भगवच्छास्त्रे, मुवे इति श्रीवराहपुराणे भगवच्छास्त्रे
**अध्यायनाम**—दे5 8 9 रुरुक्षेत्रहृषीकेशमहिमानाम अध्याय, दे6 रुरुक्षेत्रहृषीकेशमहिमावणन नाम, दे7 रुरुक्षेत्रहृषीकेशमहिमाना

स वारयति लोकानि मम मायाबलान्वित ।
तस्यैव वर्त्तमानस्य याति कालोऽतितप्यत ॥७
एव तु वर्त्तमानानि सर्वलोकेषु सशय ।
न ह्यसौ वरते किञ्चिल् लाभालाभविवर्जित ।
सूचकोऽपि न विद्येत बलिकर्मसु सयत ॥८

माध्याय, दे11 रुरुक्षेत्रहृषीकेशमहिमानाम, मुवे रुरुक्षेत्रहृषीकेशयोर्माहात्म्य नाम **अध्यायसख्या**—दे5-7 9 11 ○ दे8 ॥४९॥, मुवे षटचत्वारिंशदधिकशततमोऽध्याय ॥१४६॥]

—174 दे6 अन्यच्चय द्रुत (→अत्याश्चय श्रुत), दे8 गुरुक्षेत्र° (→रुरुक्षेत्र°)

—177 दे7 वक्तुमहम्य (→वक्तुमहसि), दे( हि मे (→मम)

—178 दे5 7 8 11 वा (दे7 व) राह उवाच, दे( 9 व (दे9 वा) राह उ०

५ दे1 ○, ब2 ab ○ —a) दे3-9 11 मुवे भूमे (→भूमि), ते1 शृणु सुन्दरि यत्नेन —c) दे3 4 गुहत्रमस्ति (→गुह्यमस्त्य—), दे5 9 11 मुवे चैव (→गुह्य), —d) ब2 हेमश्रृग— दे3 4 10 हिमश्रृगे ते1 हिमशैल—(→हिमश्रृङ्ग—) —e) ब1 कानि वक्रमना नाम, दे3 4 स गो नि क्रमण नाम, दे10 तदगौनिष्क्रमक नाम —f) ब1 गावो यत्राति तारिता, दे5 8 9 गावो यत्र प्रजापति, दे6 7 11 मुवे गावो यत्र प्रतारिता

६ दे1 ○ —a) दे2 नि क्रमक, दे5 8 9 निष्क्रमणक (→निष्क्रमण), दे10 नाम (→प्राप्य) —b) ब1 दे5-9 11 मुवे सुरभीणा, ब2 दे 4 सौरभाना, दे2 सुरभामा, दे10 सोरेभाना ते1 सारभाणा (→सौरभाणा), दे5-9 11 मुवे वसुन्धरे (→महायशा) —c) दे2 4 10 ते1 सप्तसप्तति (→सप्ततियत्र)

७ दे1 ○, ब2 ab○ —a) ब1 दे2 10 ते1 कारयति (→वारयति), दे5-9 11 मुवे तपश्चचा (दे6 7 °का) र परम —b) दे10 °वशान्वित (→°बलान्वित) —c) ब1 तस्यैव (→तस्यैव) —d) दे; याति (→याति), दे2-4 ते1 याति कालानितस्तत, दे5 9 11 मुवे याति काले महत्तरे, दे10 येन्ति कालानि तप्यत

८ दे1 ab ○, दे2 ते1 cd ○ —a) ब2 वर्त्तमानापि (→वर्त्तमानानि), दे5-9 11 मुवे एव तु (मुवे हि) तप्यमानस्य —b) दे5-9 11 मुवे °लोकस्य (→°लोकेषु), ब2 सयुत, दे3 4 सयत, दे10 विश्रुत (→सशय) —c) ब1 वरयेत, ब2 वरये, दे3 4 चरते (→वरते), दे5 9 11 मुवे न वर प्राथयत्ये (दे7 °द्ये) ष —d) दे5-9 11 मुवे °समन्वित (→°विवर्जित) —e) दे3 4 सूत° (→सूच°) ब1 अमृतेनापि दृश्येत —b) ब1 2 आत्म°, दे1 3 4 बाल° (→बलि°)

**अथ दीर्घस्य कालस्य कश्चिद् ब्रह्मयतिस्तथा ।**
**तपस्तप्यति वसुधे तस्मिन् शैलोच्चये भुवि ॥९**
**ईश्वरोऽपि महाभागे तत्पार्श्वं समुपागत ।**
**गोनिष्क्रमेति विख्यात सर्वलोकमनुत्तमम् ॥१०**
**अथ और्वो महाभागे तप्यते मम दर्शनात् ।**
**पद्मानां कारणाद् देवि गङ्गाद्वारमुपागत ॥११**
**त निर्गत ततो ज्ञात्वा अथ सर्वतपस्विनम् ।**
**महेश्वरो महातेजा सम्भ्रम समुपागत ॥१२**
**फलपुष्पसमाकीर्णं लक्ष्म्या चैवोपशोभितम् ।**
**आश्रम रूपसम्पन्न सर्वकामफलोदकम् ।**
**तद्वै रुद्रस्य तेजेन भस्मकूटप्रतिष्ठितम् ॥१३**
**दग्ध्वा त चाश्रम रम्यमूर्वस्य महति प्रियम् ।**
**ईश्वरोऽपि पुन प्राप्त शीघ्रमेव महालयम् ॥१४**
**एतस्मिन्नन्तरे देवि गृह्य पुष्पकरण्डकम् ।**
**और्वश्च स्वाश्रम प्राप्त क्षान्तो दान्तो जितेन्द्रिय ॥१५**
**दृष्ट्वा त चाश्रम दग्ध बहुपुष्पफलोदकम् ।**
**मन्युना परमाविष्टो दु खेन च परिप्लुत ॥१६**
**[उवाच क्रोधरक्ताक्षो वचन निर्दहन्निव ।]**
**येनैष चाश्रमो दग्धो बहुपुष्पफलोदक ।**
**सोऽपि दु खेन सतप्त सर्वलोकान् भ्रमिष्यति ॥१७** वे १४७

---

९ -a) दे10 अथ दीघश्च कालश्च -b) ब1 दे2 5 7 11 ते1 ब्रह्मपतिस, दे10 ब्रह्माप तिस (→ब्रह्मयतिस), दे1 5 9 11 मुवे तदा (→तथा), ब2 कश्चिद ब्राह्मणपुङ्गव -c) दे1 4ते1 तर्पा त, दे10 तप्यति (→तप्यति), दे5 9 11 मुवे तपस्तपस्यति मुनौ -d) ते1 शैलोहृचये (→शैलोच्चये), दे5-9 11 मुवे धरे (→भुवि)

१० -a) ब1 °भाग, ब2 °भागस (→°भागे) -b) ब1 दे5 पार्श्वे, दे1 3 4 ते1 पाश्व–, दे10 पार्श्वात (→पाश्व) -c) दे5 9 11 मुवे विख्याते (→विरयात) -d) दे5-9 11 मुवे तस्मिस्तीर्थे महौजसि

११ -a) ब1 अथ ऊर्द्धो, दे1 स च उर्द्धा, दे2 स च ऊर्द्धो दे3 सव ऊर्द्धा, दे4 स च बद्धौ, दे5 7 तत्रत्वार्वो, दे6 मुवे तत्र त्वैर्वो, दे8 9 तत्र त्वोर्वो, दे10 अत कुर्वा, दे11 तत्रत्वैर्वो (→अथ और्वो), दे6 7 °भागोस (→°भागे) -b) दे1 3 4 तपते (→तप्यते), दे5 9 11 मुवे म (दे7 म) मदशन (→मम दशनात) -c) दे2 ते1 पद्भ्चा ना–, दे10 प्रजाना (→पद्माना), दे2–कारण, ते1 –करण (→कारणाद्), दे1 देवी, दे5 9 11 मुवे और्वो (→देवि) -d) दे10 °गता (→°गत )

१२ ब2 ab ○, दे1 cd ○ -a) ब1 विरुण्या, दे10 विपुण्य (→निगत) -b) ब1 दे5 9 मुवे औव सर्वे (दे5°व), दे2 ते1 सव सर्वे, दे11 औवतसर्वे (→अथ सव–), दे5-9 11 मुवे तपस्विन (→–तपस्विन), दे1 लक्ष्मी चैवोपजायते, दे10 उर्वो सवतपश्विन -c) ब2 °तेजो, दे6°तेज (→°तेजा ) -d) ब1 2दे10 आश्रम, दे2ते1 आश्रम , मुवे सम्भ्रमात (→सम्भ्रम)

१३ दे1 ab ○ -a) दे2-9 11 ते1 °कीर्णे, मुवे °कोर्णा (→°कीण), ब1 2 फल तत्र (ब2 पत्र) द्रुमाकीण, दे10 फलपुष्पद्रुमात्कीर्णो -b) ब1 लक्ष्यो, दे2 लक्ष्मी (→लक्ष्म्या), दे3-9 11 मुवे लक्ष्मीश्चैवोपजायते -d) दे5 9 11 मुवे फलपुष्पोपशोभितम् -e) ब1 2 दे1-4 ते1 त वै (→तद्वै) दे5-9 11 मुवे तच्च वै (दे6 7 तच्चैव) भस्मसादभूत -f) ब1 दे10 °कूट, ब2 °भूत (→°कूट–), दे5 9 11 मुवे महारुद्रस्य तेजसा

१४ -a) दे1 3 4 दधान, दे5 6 10 दग्धा त (→दग्ध्वा त), ब1 2 दे5 9 11 मुवे पुण्य, दे2 रम्या, दे10 नित्यम (→रम्यम) -b) दे1 3 उद्धस्य, उवश्या, दे4 गद्धस्य (→ऊवस्य), ब1 2 रम्यमौर्वस्य स प्रिय, दे5 9 11 मुवे औवस्य सुमहत्प्रियम, दे10 औवश्च महत प्रिय -c) दे5-9 11 मुवे तन (→पुन ), दे1 4 ते1 ईश्वर परम प्रापु (ते1 प्राप्त ) -d) दे5 9 11 मुवे हिमालयम (→महालयम)

१५ दे6 ○, दे7 bcd ○ -a) ब1 2 दे10 भूमि, दे7 धात्रि (→देवि) -b) ब1 2 गुह्य, दे1 गुह्य– (→गृह्य) -c) ब1 2 औवश्च आश्रम प्राप्तो, दे1 3 4 आश्रम तत्र सप्राप्त , दे2 ऊव आश्रमसप्राप्त दे5 8 9 11 मुवे आश्रम समनुप्राप्त [ ] -d) ब1 2 दान्त क्षान्तो (→क्षान्तो दा तो), दे5-9 11 मुवे और्वोऽपि मुनिपुगव

अत पर दे5 9 11 मुवे अधिकम—
*शान्तो दान्त क्षमाशील सत्यव्रतपरायण ।

१६ दे4 6 7 cd ○ -a) दे5 9 11 मुवे स्वमाश्रम (→त चाश्रम), ब2 पुण्य (→दग्ध) -b) ब1 2 दे10 सवपुष्प–, दे2 बहुपुष्प (→बहुपुष्प–) दे7 वर्षाणि स्वबहूनि च -c) ब1 °विष्णो, दे1 °विष्णु (→°विष्टो), ते1 मन्युना परमो विष्णो -d) ब1 दु खेन परिपच्छति, ब2 मुखेन *परिप्लुत , दे8 9 मुवे दु खनेत्र परिप्लुत , दे10 दु खेन स परिस्तुत

१७ ब1 2 दे1-4 6 , 10 ते1 b ○, दे6 f ○ -b) दे5 वचनात् (→वचन) -c) दे8 9 ते1 येनैव (→येनैष), ते1 चाश्रमे (→चाश्रमो), ब1 2 येन चैवाश्रम दग्ध -d) ब1 2 दे10 °फलोदक (→°फलोदक ) -e) दे3 4 सतप्ता (→सन्तप्त ), ब1 2 दे10 सोप्येव दु खसन्तप्त -f) ब2 °लोके, दे2 10 ते1 °लोकाद (→°लोकान), ब2 चरिष्यति, दे1 4 भ्रमिष्यते, दे2 ते1 भविष्यति (→भ्रमिष्यति).

७१८ एव शापे विमुक्ते तु औवेंण च सुसुन्दरि ।
भीषणात् सर्वलोकाना न कश्चित् पर्यवारयत् ।।१८
तत्क्षणादेव सुश्रोणि स ईशोऽपि जनेश्वर ।
दाहेन परम तप्तो रुद्रो देवीमुवाच ह ।।१९
अस्माकमपि सुश्रोणि दाहो हृदि च वर्त्तते ।
तेन दाहेन सतप्तो न शक्नोमि विचेष्टितुम् ।।२०

१८ दे6 १८a–१९c ○ –a) ब1 2 दै10 एव शाप प्रमुक्तश्च, दे5 7-9 11 मुवे एवमौर्वेण दत्ते तु –b) ब1 2 ओर्वेन (ब1 °ण) च्च वसु धरे, दे1 उर्द्धेन च सुन्दरि, दे2 4 ऊर्वेन च सुमन्दरि, दे7 8 9 11 मुवे शापे तस्मिन्महौजसि, दे7 शापे त निदहेनिव, दे10 औवेंण च वसुन्धरे, ते1 औवेंन च सुन्दरि –c) ब1 2 दे10 भीषण (→भीषणात), दे5 7-9 11 मुवे महाभयात्तु लोकाना –d) ब1 2 °वारयेत द2 ते1 °वारयम (→°वारयत)

१९ दे3 4 cd ○, दे6 abc ○ –a) दे3 4 लक्षणा दवि (→तत्क्षणादेव), दे7 7-9 11 मुवे देवेशि (→सुश्रोणि) –b) ब1 2 दे10 अह (ब2 भद्र) देवो (दे10 गौरिर) महेश्वर, दे1 सवज्ञोपि महेश्वर, दे3 4 दाहा हृदि च वतते, दे7 7 9 11 मुवे ईशोऽपि जगतो (दे7 °ता) विभु –c) दे2 दाघेन, ते1 दात्येन (→दाहेन), ब1 2 दे10 दाहे (दे10 °घे) न परिसतप्तो, दे5 7 9 11 मुवे महादाहेन सन्तप्त –d) दे5-9 11 मुवे शम्भुर् (→रुद्रो)

२० द3 4 ab ○ –a) दे5 9 11 मुवे औवस्य तु तपो दष्ट्वा –b) दे7 9 11 मुवे भीतर्देवैरुदाहृतम् –d) दे1 3 4 शक्नोति (→शक्नोमि), ब2 दे1 6 विचेष्टित (→विचेष्टितु)

२० श्लोकस्य b c मध्ये दे5-9 11 मुवे अधिकम —

*दह्यते स्म जगत्सव स तु किंचिन्न चेच्छति ।
को वा प्रतिविधिस्तत्र यथा सवस्य सम्भवेत ॥
एवमुक्ते मया क्रोधादीक्षितस्तस्य चाश्रम ।
दग्धोऽभवत् क्षणेनव वय तस्माद्विनिगता ॥
ततो दु खेन सतप्तो मन्युना च परिप्लुत ।
औव शशाप रोषेण तेन तप्ता वय शिवे ॥
ततोऽश्रमद्विरूपाक्ष श न प्राप्नोति कर्हिचित् ।
अह च परितप्तोऽस्मि आत्मत्वादीश्वरस्य च ॥

[–1 दे6 7 स (→स्म), दे6 न (→स) –4 दे7 दग्धो भवेत् (→दग्धोऽभवत्), दे7 विनिगत (→विनिगता) –5 मुवे एतद (→ततो) –6 मुवे सशाप (→शशाप) ]

२० श्लोकात्पर ब1.2 दे10 अधिकम—

*महेश्वरस्य वचनात सा देवी दु खपीडिता ।
उवाच मधुर वाक्यमीश्वर परमेश्वर ।
त्वया सह जगत्सर्वं ब्रह्माविष्णुमहेश्वर ।
किमिद दह्यसे देव किञ्च कर्म त्वया कृत ।
उमावाक्य तत श्रुत्वा कारण परमात्मक ।
मम देवि समालिङ्ग्य ततो वाक्य निवेदयेत् ।
और्वो नाम महाभागे रुद्रत्वेन व्यवस्थित ।
ततस्तस्य मया क्रोधाद्विध्वस्त चाश्रम शुभम् ।
सर्वकामैवृत रम्य मनोज्ञ शुभदशन ।
तेनाहू तस्य कोपेन विदह्यामि यशस्विनि ।
अत्र व यस्तु कत्तव्य शीघ्रमेवात्र कारय ।
ततो रुद्रवच श्रुत्वा उमा वाक्यमथाब्रवीत ।
एहि गच्छाम त शीघ्र यत्रासौ लोकभावन ।
उमावाक्य तत श्रुत्वा ईश्वरो वृषभध्वज ।
तत क्षणादेव सप्राप्त स्थान नारायण प्रति ।
दष्ट्वा त लोकसर्वात्मा सर्वमायाकरण्डक ।
निदाघेन च दीप्ताङ्गो मधुर वाक्यमब्रवीत ।
अहमौवस्य शापेन विदह्यामि जनादन ।
सीदन्ति मम गात्राणि न शक्नोमि विचेष्टितु ।
ईश्वरस्य वच श्रुत्वा लोकाना भावनो हरि ।
मधुरा गिरिमादाय ततो रुद्र प्रभाषते ।
तिष्ठ त्वञ्च महाभाग यत्र केदारमव्यय ।
अहञ्च तत्र गच्छामि रुद्राणी च महेश्वर ।
मा भवाँस्तत्र गच्छेथा यत्र चौर्वा महायशा ।
विष्णोस्थितानि लोकानि तपसा च बलेन च ।
तान्येव दहितु शक्तो एवमेतन्न सशय ।
ततो विष्णावच श्रुत्वा पुनरेव प्रभाषते ।
सातत्येन चिर तत्र विदह्यामि व केशव ।
शङ्करस्य वच श्रुत्वा स सर्वार्तिहरो हरि ।
औवशापेन दह्यन्तमीश्वर परमेश्वर ।
शृणु शङ्कर तत्वेन और्वनामा महानृषि ।
स च धमप्रधानो वै धमलोकेषु दुजय ।
एव सवञ्च माञ्चैव ब्रह्मलोकानि चालयेत ।
सत्वान्येवान्यथा कश्चित्त कृपा यदि न कारयेत ।
औवस्य तपयुक्तस्य दाहेन परिपीडित ।
तत काले परिश्रा तो वायुभक्षो जितेन्द्रिय ।
और्वोपि तपसयुक्तो मम कर्मपरायण ।
ततो मध्याह्नकाले वा तस्य विप्रस्य सुन्दरि ।
दशयन् सौम्यरूपेण निभृतेनान्तरात्मना ।
तत्र चौर्वा महाभाग दष्ट्वा मा रूपमाश्रित ।
उभौ तौ चरणौ गृह्य न किञ्चिदपि भाषते ।
अह दृष्ट्वा ततश्चौर्व अरुद्राय व्यवस्थित ।
न च रुद्रक्षय ब्रह्मन् किमन्य वरमिच्छसि ।
रुद्र प्रधानो लोकेषु रुद्रो लोकेषु सर्ववित ।
रुद्राय त जगत सर्व सर्वं रुद्रे प्रतिष्ठित ।
कारण सवलोकाना भवन भावन यथा ।
त्र्यक्ष त्रिशूली वरद पशुनाथो वृषध्वज ।

**पार्वत्या च तत प्रोक्तमावा नारायण प्रति ।**
**गच्छावस्तस्य वाक्येन सुख तव भविष्यति ।।२१**
**ततो नारायण गत्वा सह तेन तमौर्वकम् ।**
**गत्वा नारायणश्चौर्वमूचेऽय रुद्र ईश्वर ।**
**त्वच्छापेन वय तप्तास्तस्य ताप निवर्तय ।।२२**

**[ऊर्व उवाच ।❀]**
**मृषा मया च नोक्तव्य कथ तापो निवर्तते ।**
**ततो धेनू समानीय गव्यैस्त स्नापयन्तु वै ।**
**तस्मात् तस्य शिवायेह तापो निर्वर्त्स्यते ध्रुवम् ।।२३**
**एतस्मिन्नन्तरे देवि मया गावोऽवतारिता ।**
**सप्तसप्तति कल्याणि सुरभीणा महौजसाम् ।।२४** वे १४७ ३

महादेवश्च कालश्च अहङ्कारो व्यवस्थित ।
अरुद्राय त्वया तत्र षष्ठ ब्रह्मन व्यवस्थित ।
को वा चालयितु शक्त कारण शृणु चेश्वर ।
न कोपमीश्वरे कुर्य्यात सवदार्तिहरो हर ।
तस्य मेनुचरा सर्व्वे एवमेतन्न सशय ।
तप सहर ब्रह्मेन्द्र यत्त्वया मनसोप्सित ।
औव्वनामेति विख्यातमाश्रम ते भविष्यति ।
अहोरात्र तप कृत्वा चास्मिन्नेवाश्रमेपि च ।
नन्दन वनमाश्रित्य मोदते नात्र सशय ।
तत्राथ मुञ्चति प्राणान मम कमपरायण ।
नन्दन वनमुत्सृज्य मम लोक प्रपद्यते ।
अन्यच्च ते प्रवक्ष्यामि औव्व तत शृणु वै मम ।
पुनरेव न कत्तव्यमादिदेवविनाशन ।
एवन्तु यस्तप कुर्य्याद ब्रह्मरुद्रविनाशन ।
अथ विष्णुविनाशाय न सिद्धि लभते नर ।
को मा चालयितु शक्तो ब्रह्मरुद्रौ च ब्राह्मण ।
पुनरन्य प्रवक्ष्यामि औव तत शृणु वै मम ।
त्वया क्रोधप्रभावेन सतोयमीश्वरे प्रभु ।
येन दाहात प्रमुच्येत त्र्यम्बक परम प्रभु ।
कोप सहर रुद्रे त्वमीश्वरे च पुन पुन ।
ततो विष्णोवच श्रुत्वा औव्व प्रोवाच ससदि ।
अनृतन्नोक्तपूव मे गभस्थेनापि माधव ।
किञ्चिदन्य प्रवक्ष्यामि गुह्य लोकेषु विश्रुत ।
ईश्वरो यत्र मुञ्चेत दाहाच्चापि जनादन ।
येषु लोकेषु विख्याता गाव सुरभिनि सृता ।
तत्रापि गच्छ भद्र वो भविष्यति न सशय ।
पञ्चगव्यस्य पानेन शान्तिस्तस्य भविष्यति ।
ततो मुनिवच श्रुत्वा स सवपरमात्मक ।
शुद्धा चाप्यानयामास चन्द्रकुन्दसमप्रभा ।
ममैव चान्तरे पार्श्वे विद्धि पवतमुत्तम ।
गोनि क्रमेति विख्यात मम क्षेत्र महौजस ।
ततो घृतेन क्षीरेण दध्ना मूत्रपुरीषत ।
शान्ति चोपगतो रुद्र औवशापप्रपीडित ।
ईश ईश्वरो भूमि ऋषिशापान प्रपीडिता ।
भुञ्जते पञ्चगव्येन श्रेयो कामो न सशय ।
यत्रैता नि सता गावो गुह्य रम्ये शिलोच्चये ।
तत पुण्य महाभागे कथ्यमान मया शृणु ।
यत फल प्राप्यते शुद्ध मम कमपरायणै ।
उपोषिता त्रिरात्रन्तु निभतेनान्तरात्मना ।
स्नान कुर्वीत सयुक्तो लाभालाभविवर्जित ।
दोग्ध्रीणा गोसहस्रस्य दत्वा भवति यत फल ।
तत प्राप्नोति च सुश्रोणि एवमेतन्न सशय ।
अथात्र मुञ्चति प्राणान यत्र गावो विनि सृता ।
सवसङ्ग परित्यज्य मम लोक प्रविश्यते ।
रूपकुण्डति विख्यातो यस्मिन क्षेत्र पर मम ।
यत्रैक पतते श्रोतो दिशि पूर्वामुख प्रति ।
तत्र स्नान प्रकुर्वीत पञ्चभक्तोषितो नर ।

**२१** बा1 2 दे10 २१–२६b ○, दे1 3 4 २१–२३f ○ –a) दे6 पावत्य (→पावत्या), मुवे प्रोक्त (→प्रोक्तम) –d) मुवे यत्र (→तव)

**२२** बा1 2 दे1 3 4 10 ○ (द्र २१ पा वि ) –c) दे5-9 11 मुवे विज्ञापयामो रुद्रस्य –d) दे5- 11 मुवे शापोऽय विनिवर्त्यताम् (दे5 मुवे °तत्ताम) –f) दे2 ते1 निवतये (→निवतय) –ef) दे5-9 11 मुवे सन्तप्ता स्मो (मुवे स्म) वय सर्वे तस्माच्छाप निवतय

❀ दे2 ते1 पुस्तकयोरेवाऽय पाठो वत्त ते

**२३** बा1 2 दे1 3 4 10 ○ (द्र २१ पा वि ) –a) दे5 9 11 मुवे और्वोप्यु (दे6 9 °व्य, दे8 °थ) वाच नोक्त (दे6 7 प्रोक्त) मे –b) दे5 9 11 मुवे अ (दे6 7 ना) नृत तु कदाचन –c) दे5 9 11 सुरभीगणमानीय –d) दे5 गत्वैन्त, मुवे गत्वत (→गव्यैस्त) –e) दे5-9 11 मुवे रुद्रशापो निवृत्त (दे7 °वृत्ता ) स्यात् –f ) दे5 7-9 11 मुवे तनव किल नान्यथा

**२४** बा1 2 दे10 ○ (द्र २१ पा वि ), दे5 8 २४c–२५b ○ –a) दे1 3 देवी (→देवि) –c) मुवे °सप्तति (→°सप्तति) –d) दे6 7 9 11 मुवे सौरभेया (→सुरभीणा), दे2 5-7 9 11 मुवे ते1 महोजस (→महौजसा)

५० १४ एकस्तत्र स्थूलमत्स्यो भूमे चक्रेण चाङ्कित ।
तावत् कश्चिन्न गृह्णाति यावत् तेन न भक्षित ॥१४
तत्र रामसरो नाम गुह्य क्षेत्र पर मम ।
अगाधश्चाप्यपारश्च रक्तपद्मविभूषित ॥१५
तत्र स्नान तु कुर्वीत एकरात्रोषितो नर ।
बुधस्य भवन गत्वा मोदते नात्र सशय ॥१६
अथ प्राणान् प्रमुच्येत रम्ये रामसरे तथा ।
बुधस्य भवन त्यक्त्वा मम लोक च गच्छति ॥१७
तत्र रामसरे भूमि महाश्चर्यं शृणोहि मे ।
मनुजास्तत्र पश्यन्ति मम कर्मरता न ये ॥१८
तत्सर क्रोशविस्तार बहुगुल्मलतावृतम् ।
मनोज्ञ रमणीय च जलजैश्चापि सवृतम् ॥१९

तत्र रूढानि पद्मानि द्योतयन्ति दिशो दश ।
एक तु दृश्यते श्वेतमब्ज रुक्ममय तथा ॥२०
तत्र ब्रह्मसरो नाम गुह्य क्षेत्र पर मम ।
[उत्तरेण तु पार्श्वेन मम क्षेत्रस्य सुन्दरि ॥२१
तत्र कुण्ड महाभागे पर्वते च समाश्रितम् ।]
धारा यत्र पतेच्चैवमुच्चा मुसलसनिभा ॥२२
तत्र स्नान प्रकुर्वीत षष्ठकालोषितो नर ।
ब्रह्मलोक समासाद्य मोदते नात्र सशय ॥२३
अथ प्राणान् प्रमुच्येत तत्र ब्रह्मसरे मम ।
ब्रह्मणा समनुज्ञातो मम लोकाय गच्छति ॥२४
तत्राश्चर्यं महाभागे रम्ये ब्रह्मसरे शृणु ।
मद्भक्ता यानि पश्यन्ति घोरससारमोक्षणम् ॥२५

---

द1 च क्रमणा, दे2 , त1 विक्रमिणा, दे 4 च क्रमिणा दे6 7 च क्रमणा (→विक्रमिणा)

१४ ब1 2 दे10 ○ –a) द3 एवस (→एकस) –b) दे2 ममि (→भमे) –d) दे2 ते1 धावतो म (दे2 न) न भक्षित

१५ ब1 2 दे10 ○ –a) द2ते1 °सर (→°सरा) –b) दे1-4 ते1 तस्मिन क्षेत्रे (दे2 °त्र) (→गुह्य क्षेत्र) –c) मुवे अगाध चाप्यपार च –d) द1 °विभूपित , मुवे °विभूपितम (→°विभूपित )

१६ ब1 2दे10 ○ –a) द1 3 4 8 प्रकुर्वीत(→तु कुर्वीत) –c) दे2 बुद्धस्य (→बुधस्य), द1 भ्रुवन, दे3 भुवन (→भवन)

१७ ब1 2 दे10 ○, दे7 १७c-१८b ○ (दृ स) –b) दे5-9 11 मुवे तस्मिन सरसि सुन्दरि –c) दे2 बुद्धस्य (→बुधस्य),दे1 3 भुवन(→भवन), द1 4 6 8गत्वा(→त्यक्त्वा) –d) दे 4 स गच्छति, दे5 6 9 11 मुवे प्रपद्यते(→च गच्छति), दे1 8 मोदते नात्र सशय

१७ श्लोकात्पर दे8 अधिकम्–

*अथ प्राणान् त्यक्त्वा मम लोक प्रपद्यते ।

१८ ब1 2 दे10 ○, दे7 ab ○ –a) दे1 3 4 ते1 भूमे (→भूमि), दे5 6 8 9 11 मुवे तस्मिन रामसरस्युच्चै –b) दे 6 8 9 11 मुवे आश्चय शृण सुन्द (दे6 °न्ध) रि –c) दे8ते1 नत्र (→तत्र) –d) दे1-4 ते1 °परायणा(→°रता न ये)

१९ ब1 2 दे10 ○ –a) दे1-4ते1 ससर क्रोशविस्तारो –b) दे1-4 ते1 °वृत , दे9 °दृत (→°वृत), दे6 बाह्यतल्परतावृत

–c) दे1 4 ते1 मनोन्यो (दे2 ते1 °ज्ञा) रमणीयश्च –d) दे1-4 ते1 शाभिन (→सवृत)

२० ब1 2 दे10 ○ –a) दे2 4 तत्रारूढानि (→तत्र रूढानि) दे1 4 कर्माणि (→पद्मानि) –b) दे2 ते1 भापयन्ति (→द्योतयन्ति) –c) द1 4 ते1 एकोपि, द6 एव तु (→एक तु), दे1 4 चक्रम (→श्वेतम) –d) दे2 ते1 एके (→अब्जम)

२१ ब1 2 दे10 ○, दे5 9 11 मुवे cd ○ –a) दे2 ते1 °सर (→°सरो), दे5-9 11 मुवे तत्र ब्रह्म (दे6 °ह्मा) सरस्युच्चैर –b) दे2 ते1 क्षेत्रो (→क्षेत्र), द5-9 11 मुवे उत्तर पाश्वमाश्रिता (दे6 °त) –c) दे1 3 पार्श्वेण (→पार्श्वेन)

२२ ब1 2 दे10 ○, दे5-9 11 मुवे ab ○ –c) दे4 चैकाम, ते1 चैका (→चैव), दे5 9 11 मुवे धारा चका प्रपतति –d) दे5-9 11 मुवे स्थूला, ते1 शुभा (→उच्चा), द2-4 मुशल° (→मुसल°)

२३ ब1 2 दे10 ○ –a) दे2 ते1 तु कुर्वीत (→प्रकुर्वीत) –b) दे1 एकरात्रो° (→षष्ठकालो°)

२४ ब1 2 दे10 ○ –a) दे5-9 11 मुवे अथात्र मुञ्चते (दे5 8 9 मुच्येत) प्राणैर् (दे6 7 प्राणान्) –b) दे3°सरो (→°सरे), दे5-9 11 मुवे भूमे (दे6 °म ) ब्रह्मसरस्यपि –c) दे6 ब्राह्मणा (→ब्रह्मणा) –d) दे2 5-9 11 मुवे ते1 लोक च (→लोकाय)

२५ ब1 2 दे10 ○ –b) दे6 7 शृणु ब्रह्मसरस्यपि –c) दे2-4 मद्भक्त्या (→मदभक्ता), मुवे यच्च (→यानि) –d) दे1-3 5 9 घोर (→घोर–), दे4 घोर ससारमेक्षणम्

चतुर्विंशतिद्वादश्या सा धारा पृथुलेक्षणे ।
मध्याह्ने पतते भूमि यावत्सूर्य स तिष्ठति ॥२६
परावृत्ते तु मध्याह्ने सा धारा न पतेद् भुवि ।
एव तत्र महाश्चर्यं पुण्ये ब्रह्मसरे मम ॥२७
अस्ति सगमन तत्र गुह्य क्षेत्र पर मम ।
समुद्रश्चैव रामश्च समेष्येते वराङ्गने ॥२८
तत्र कुण्ड महाभागे प्रसन्नविमलोदकम् ।
बहुगुल्मलताकीर्णं शोभित च विहङ्गमै ॥२९
समुद्रस्य तु पार्श्वेन अदूरात् तत्र योजनात् ।
मण्डिता कुमुदै पद्मै सुगन्धैश्चोत्पलैस्तथा ॥३०
तत्र स्नान तु कुर्वीत षष्ठकालोषितो नर ।
समुद्रभवन गत्वा मम लोक प्रपद्यते ॥३१

तत्राश्चर्य प्रवक्ष्यामि कुण्ड रामस्य सगमे ।
य दृष्ट्वा मनुजास्तत्र भ्रमन्ति विगतज्वरा ॥३२
यानि कानि च पर्णानि पतन्ति जलससदि ।
एकोऽपि त न पश्येत किमत्र परम प्रिये ॥३३
अच्छिद्राणि च पत्राणि तस्मिन् रामस्य सगमे ।
प्रयत्नेनापि मार्गन्तश्छिद्र तत्र न पश्यति ॥३४
अस्ति शक्रसरो नाम गुह्य क्षेत्र पर मम ।
तत्र पूर्वेण पार्श्वेन अदूरादर्धयोजनात् ॥३५
तस्य कुण्डस्य सुश्रोणि चत्वारो दिशमाश्रिता ।
धारा पतन्ति चत्वार प्रसन्नसलिलास्तथा ॥३६
तत्र स्नान तु कुर्वीत चतुष्कालोषितो नर ।
चतुर्षु लोकपालेषु मोदते नात्र सशय ॥३७ वे १५०

२६ ब1 2 दे10 ○ –b) दे6 सा धा*ष्ट**लक्षणे, दे7 सा धाराष्टधरीक्षणे –c) दे1 3 4 ते1 भूमे, दे6-8 भूमिं (→भूमि), मुवे भूमे पतति मध्याह्ने –d) दे1 प्र–, दे5 9 11 मुवे तु (→स), ते1 यावत्सूय ****

२७ ब1 2 दे10 ○ –a) मुवे परिवृत्ते (→परावत्ते) –b) दे1 मे, दे3 4 म (→न), ते1 सा धारा पतते भुवि –c) दे7 महच्चय (→महाश्चय) –d) दे1 4 ते1 पुण्य, मुवे पुण्य– (→पुण्ये), दे5 8 9 11 मुवे ब्रह्मसरोवरे, दे6 7 तत्र सरोवरे (→ब्रह्मसरे मम)

२८ ब1 2 दे10 ○ –a) दे5-9 11 मुवे नाम (→तत्र) –b) दे2 ते1 क्षेत्रे गुह्य, दे3 5 8 9 11 गुह्य क्षेत्रे (→गुह्य क्षेत्र) –c) दे3 4 समुद्रस्यव रामस्य –d) दे6 समीपे ते, दे7 समी येते, ते1 समो क्षेत्रे (→समेष्येते), दे6 वराङ्गणे (→वराङ्गने)

२९ ब1 2 दे10 ○ –b) दे1 3 4 प्रसन्न, ते1 प्रसन्ने (→प्रसन्न–)

३० ब1 2 दे10 ○ –a) दे3 5 8 9 पार्श्वेण, दे6 पार्श्वे तु (→पार्श्वेन) –b) मुवे ह्यदूरात (→अदूरात), दे1 3 4 तत त्रियोजनात् (→तत्र योजनात) –c) मुवे मण्डित (→मण्डिता), दे1 3 4 कुसुमै , दे6 7 चोत्तमै (→कुमुदै ) –d) दे5 9 11 मुवे चोत्तमैस, ते1 चोत्परैस (→चोत्पलैस)

३१ ब1 2 दे10 ○ –a) दे1 3 4 प्रकुर्वीत (→तु कुर्वीत), दे7 स्नाता क्षेत्रे महातीर्थे –b) दे3 मृष्ट कालो° दे4 अष्टकालो°, तत्र कालो° (→षष्ठकालो°) –c) दे3 °भुवन (→°भवन) –d) दे3 4 मोदते नात्र सशय

३१ श्लोकस्य b, c मध्ये दे1 अधिकम्—
समुद्रभुवन गत्वा मोदते नात्र सशय ।
अथ प्राणान् विमच्येन समुद्रे रामसगमे । ( = ३१cd–३२ab)

३२ ब1 2 दे10 ○ –b) मुवे कुण्ड (→कुण्डे) –c) मुवे य (→य), दे7 मनुजस (→मनुजाम) –d) दे1 विगत (→विगत–)

३३ ब1 2 दे10 ○ –a) दे1 कानिचित (→कानि च), दे2 ते1 वर्णानि (→पर्णानि) –b) दे2 ते1 पठन्ति (→पतन्ति), दे6 °सुधरि (→°ससदि) –c) दे5 9 11 मुवे एकमप्यत्र पश्यन्ति –d) दे5-9 11 मुवे न केऽपि वसुधे नरा

३४ ब1 2 दे10 ○ –a) दे4 पात्राणि, दे5 रात्राणि (→पत्राणि) –b) दे4 तस्मिन सागरसगमे –c) दे1 2 5 9 मुवे प्रपन्नेनापि, दे4 प्रपन्नोनापि (→प्रयत्नेनापि) –cd) दे1 मागन्त श्छिन्न, दे2 ते1 माग नो छिद्र, दे3 4 माग्र (दे4 °थ) तत छिद्र, दे6 मागन्ते छिद्र, दे7 9 मुवे माग तच्छिद्र, दे8 माग तच्छूद्र (→ (→मागन्तश्छिद्र)

३५ ब1 2 दे10 ○ –a) दे2 शक्रसर, दे5 शक्रशरो, ते1 चक्रमर (→शक्रसरो) –b) दे5 8 9 11 ते1 क्षेत्रे (→क्षेत्र), दे8 परे (→पर) –c) दे1 मुवे पार्श्वेण (→पार्श्वेन) –d) द2 मुवे ह्यदूराद (→अदूराद)

३६ ब1 2 दे10 ○ –a) दे5 तस्या (→तस्य), दे6 तस्य*** सश्रोणि, दे7 तस्य सुश्रोणि महत –b) दे2 ते1 चत्वारो दिशमाश्रित , चतस्रो दिगपाश्रिता , दे6 चतुरस्रे दिराश्रिता , दे7 चतुस्रो विगताश्रिता –c) दे5-9 11 मुवे कल्याणि (→चत्वार ) –d) ते1 प्रसन्ने(→प्रसन्न–), दे7 °सलिला(→°सलिलास)

३७ ब1 2 दे10 ○ –a) दे1 5 मुवे प्रकुर्वीत, दे8 तु प्रकुर्वीत (→तु कुर्वीत), दे1 6 8 9 11 चतु कालो°(→चतुष्कालो°) –c) दे2 ते1 चतुरो, दे5-9 11 मुवे चतुर्णां (→चतुषु), दे5-9 11

अथात्र मुञ्चते प्राणान् तस्मिन् शक्रसरे मम ।
लोकपालान् समुत्सृज्य मम लोकेषु मोदते ।।३८
तत्राश्चर्यं महाभागे यानि पश्यन्ति माधवि ।
शुद्धा भागवता भूमि सर्वससारमोक्षणम् ।।३९
ता धाराश्चतुरो भद्रे पतन्ति चतुरो दिशम् ।
न च तद् वर्धते चाम्भो न चैव परिहीयते ।।४०
मासि भाद्रपदे चापि शुक्लपक्षस्य द्वादशीम् ।
श्रूयते गीतिनिर्घोष श्रुतिकर्ममनोहर ।।४१
अस्ति सूर्पारक नाम गुह्य क्षेत्र पर मम ।
जामदग्न्यस्य रामस्य आश्रमोऽथ भविष्यति ।।४२
तत्र तिष्ठाम्यह भद्रे समुद्रतटमाश्रित ।
शाल्मलीं चाग्रत कृत्वा तिष्ठामि चोत्तरामुख ।।४३
तत्र स्नान तु कुर्वीत पञ्चकालोषितो नर ।
ऋषिलोक ततो गत्वा पश्यते च अरुन्धतीम् ।।४४
अथ प्राणान् प्रमुच्येत कृत्वा कर्म सुदुष्करम् ।
ऋषिलोक समुत्सृज्य मम लोक प्रपद्यते ।।४५
तत्राश्चर्यं महाभागे नमस्कार तु कुर्वते ।
वर्षाणि द्वादश तेन नमस्कार कृत भवेत् ।।४६
तस्मिन् क्षेत्रे महाभागे पश्यन्ति परिनिष्ठिता ।
पापात्मानो न पश्यन्ति मम मायाविमोहिता ।।४७

---

मुव लोकपालाना (→लोकपालेषु) –d) दे,-9 11 मुवे लोकानाप्नोति चोत्तमान

३८ ब1 2 दे10 ○ –a) दे1 प्राणास, दे2 प्राणा [ ] (→प्राणान), दे, 9 11 मुवे अस्मिश्च शक्रसरसि –b) दे2 ते1 अस्मिन (→तस्मिन), दे5 9 11 मुव यदि प्राणान प्रमुञ्चति

३९ ब2 ○, ब1दे10 ab ○ –b) दे3 पश्यति (→पश्यन्ति), दे2ते1 निश्चितम् (→माधवि), दे5 9 11 मुवे दृश्यते तच्छृणुष्व मे –c) दे1 भूमि (→भूमि), दे3 शुद्धाभागवना भूमि, दे5 शुद्धैर्भागवतो भूमे, दे6 शुद्धै भागवतै भूमे, दे7 9 11 मुवे शुद्धैर्भागवतभूमे –d) दे, सर्वे, दे5 सव (→सव–)

४० ब2 ○ –a) ब1दे4 धारात्र (दे4 °श्र) चतुरो भद्र, दे1 3 स्मराश्च चतुरो भद्रे, दे7 ता धारा चोत्तरे भद्रे, मुवे चतुर्धारास्ततो भद्रे –b) ब1 चोत्तरे (→चतुरो), ब1 दिशि, दे8, मुवे दिश (→दिशम) –c) दे2ते1 यावत तद, दे3 4 मम तद्, दे8 वदत (→न च तद्), ब1 ताम्र, दे1 चान्तो, दे2 बाधो, दे5 6 चोभो, ते1 धारा (→चाम्भो) –d) ब1ते1 न चैतत् (→ न चैव)

४१ –a) दे1 2 5 9 11 मुवे मासे (→मासि), दे1-4ते1 भाद्र (दे4 °द्रे) पन्स्यापि, दे5-9 11 मुवे भाद्रपद चैव (→भाद्रपदे चापि) –b) मुवे °पक्षे तु (→°पक्षस्य), दे2-5 8 9 11 मुवे ते1 द्वादशी (→द्वादशीम) –c) ब2दे10 श्रूयन्ते (→श्रूयते), ब1 2 °निर्घोषा, दे1 3 4 °निर्घोष (→°निर्घोष ) –d) दे1 3 4 दृष्टि° (→श्रुति°), ब1 2 इष्टवर्णो (ब2 °र्णा) मनोहरा, ते1 दृष्टिकर्मा मनोहर

४२ –a) ब1 सूर्पाभ्रक, ब2 सूर्पानक, दे1 3 4 सूर्पाकर दे5 सूर्यरिक दे6 प्रपूरक, दे7 शूपटक, दे8 सूर्यारक, दे10 सर्पारक, ते1 *सर्वाङ्ग (→सूर्पारक) –b) दे3 4 10 गुह्यक्षेत्र (दे10 °त्र–), दे5 6 8 9 11ते1 गुह्य क्षेत्रे (→गुह्य क्षेत्र) –d) ब1 आश्रमा य, ब2दे1 3 4 आश्रमोऽय, मुवे स्वाश्रमोऽय, ते1 आश्रमेथ(→आश्रमोऽय)

४३ –a) दे5 7-9 11 मुवे देवि (→भद्रे) –b) दे3 4 सुभद्रवट, दे6 8 समुद्र तट (→समुद्रतट), ब2दे6 आस्थित (→आश्रित ) –c) ब1दे2 5 6 10ते1 शालमली, दे1 शाल्मलि (→शालमली), ब2 अग्रत, दे2 वाग्रत (→चाग्रत ) –d) दे1-4ते1 तिष्ठ त (दे2ते1 °ता) चोत्तरामुख (दे4 °ख), दे5 8 9 11 मुवे [अ]धिष्ठिनश्चोत्तरामु(दे11 °सु)ख दे7 विमलश्चोत्तरामुख, दे8 ***चोत्तरामुख

४४ दे7 cd ○ –a) ब1 2 मवे प्रकुर्वीत (→तु कुर्वीत) –b) ब1 2दे1 3 4 10 °रात्रो° (→°कालो°) –c) दे10 तत कृत्वा (→ततो गत्वा) –d) ब1दे10 प्राप्यते च परा गतिम, ब2 मोदते नात्र सशय, दे5 6 8 9 11 पश्यते चाप्यरुन्धतीम (दे5 9 °ती), मुवे पश्येत तत्राप्यरुन्धतीम

४५ दे7 ab ○ –a) दे1 3 4 परित्यज्य, दे5 8 9 11 विमुच्येत, मुवे विमुञ्चेत (→प्रमुच्येत) –b) दे1 भर्त्वा (→कृत्वा), दे3 5 9 11 सुदु कर (→सुदुष्कर) –c) दे5-9 11 मुवे परित्यज्य (→समुत्सृज्य) –d) ब1 2 दे10 मम लोके महीयते

४६ ब1 2 दे10 bcd ○ –a) दे10 अत्याश्चर्यं (→तत्राश्चर्यं), ब1 महास्तत्र, ब2 महत्तत्र, दे10 महस्तत्र (→महाभागे) –b) दे5 8 9 11 मुवे च, दे6 7 प्र– (→तु) –c) दे5-9 11 मुवे द्वादशैतेन (→द्वादश तेन) –d) दे5 7-9 11 मुवे• नमस्कार (दे5 8 9 °र) कृता भवेत्, दे6 नमस्कार प्रकुवते

४७ दे2 ते1 ○, ब1 2 a ○ –d) दे7 10 परिनिष्ठित (→परिनिष्ठिता ) –c) ब1 पापकर्माणि, दे1 3 4 10 पापकर्मा न(→पापात्मानो न) –d) दे6 °विमोहित (→°विमोहिता )

चतुर्विंशतिद्वादश्या समुपायाति शालमली ।
[स्थिते च तत्र मध्याह्ने यावन्न परिवर्त्तते] ।।४८
तत्र पश्यन्ति सुश्रोणि शुद्धा भागवता नरा ।
[अन्यो न पश्यते कश्चिद् यस्य भक्तिर्न विद्यते] ।।४९
[तत्राश्चर्यं महाभागे नमस्कार तु कुर्वते ।
वर्षाणि द्वादश तेन नमस्कार कृत भवेत्] ।।५०
तस्मिन् क्षेत्रे महाभागे अस्ति गुह्य पर मम ।
जटाकुण्डमिति ख्यात वायव्या दिशि सस्थितम् ।।५१
कुण्ड तच्च महाभागे समन्ताद् दशयोजनम् ।
मलयस्य दक्षिणेन समुद्रस्य च उत्तरे ।।५२
तत्र स्नान तु कुर्वीत पञ्चकालोषितो नर ।
अगस्तिभवन गत्वा मोदते नात्र सशय ।।५३
अथ प्राणान् प्रमुच्येत मम चित्तसमाहित ।
अगस्तिभवन त्यक्त्वा मम लोक तु गच्छति ।।५४
तस्य कुण्डस्य सुश्रोणि नव धारा न किचन ।
विस्तारश्च महाभागे अगाधश्च महार्णव ।।५५ वे १५० ५३

४८ दे2 ते1 ○, ब2 दे5-9 11 मुवे cd ○ -b) दे5 7 9 11 मुवे समुपायान्ति (→समुपायाति), दे6-9 11 मुवे शाल्मली (→शालमली), ब1 2 दे10 सा च (ब1 चेत) पुष्पति शालमली -c) ब1 तस्य च, दे10 तत्र च (→च तत्र)

४९ ब2 ○, दे2ते1 ab ○, दे5 9 11 मुवे cd ○ -a) ब1 दे10 तत्तु (→तत्र) -b) ब1 दे1 3 4 10 शुद्धो भागवत शुचि -c) दे3 अन्योन्य- (→अन्यो न), दे4 पश्येते (→पश्यते) -d) ब1 शक्तिर (→भक्तिर्)

५० ब2 दे2 5 9 11 मुवे ते1 ○ -a) ब1 दे10 शुद्ध-मुक्तस्य (ब1 °स्व) भावो यो -b) दे1 च (→तु) -c) ब1 दे10 द्वादशस्तेन, दे3 द्वादशा तेन, दे4 द्वादशी तेन (→द्वादश तेन) -d) ब1 दे10 नमस्कार कृतो भवेत

५१ -b) दे7 गुह्यपर (→गुह्य पर) -c) ब1 2 जय कुण्ड, दे9 जटा कुण्ड, ते1 जलाकुण्ड (→जटाकुण्ड) दे10 ख्यातो (→ख्यात) -d) ब1 यत्र**ल क्षाणित, ब2 देवनामपि दुलभा, दे10 यत्र सर्वेण शालिता

५२ -a) ब1दे1 10 स कुण्डस्तन दे2 ते1 स कुण्डस्य, दे3 स कुण्डस्थ, दे4 स कुण्डस्था, दे5 9 11 मुवे तत्कुण्डस्य (→कुण्ड तच्च) -b) ब1 2 मम द्वादशयोजनम -c) ब1 दक्षिणेच, दे2 (तु) दक्षिणेन, दे3 4 तु दक्षेण, दे10 च दक्षिणे च, ते1 तु पार्श्वेन (→ दक्षिणेन), ब2 दक्षिणे मलयस्यापि -d) ब1दे1 च चोत्तरे, दे2ते1 तु उत्तरे, दे10 तु चोत्तरे (→च उत्तरे), ब2 समुद्रस्यापि चोत्तरे दे5-9 11 मुवे समुद्रस्योत्तरे तथा

५३ दे5 ५३b-५७b○ -a) ब2 दे1 3 4 7 8 प्रकुर्वीत (→तु कुर्वीत) -b) ब1 2 षष्ठरात्रोषितो नर -c) ब1 2 अग्नेस्तु, दे10 अग्नेश्च, ते1 अगस्त्य-(→अगस्ति-), दे1 3 -भुवन (→-भवन)

५३a अनन्तर दे5 पाठ —
पञ्चकालोषित्रा सुप्रमाणा महौजसि ।
*तत्राभिषेक कुर्वीत चतु काल समन्वित ।
मोदते सूयलोके तु स्वच्छन्दगमनालय ।

५४ दे5 ○ -a) दे4 प्रामुच्येते, दे6 7 विमुच्येत, मुवे प्रमुञ्चेत (→प्रमुच्येत) -b) ब1 2 चित (ब1 °न्ता) विमोहित, दे6 9 11 मुवे चित्त (मुवे °न्ता) परायण (दे8°णा) (→चित्त समाहित) -c) ब2 दे10 अथाग्नि°, ते1 अगस्त्य° (→अगस्ति°), दे1 3 4°भुवन(→°भवन), दे3 10 गत्वा (→त्यक्त्वा), दे6 अगस्त्य भवने गत्वा -d) ब1 2 दे 6 7 10 मम लोकाय दे1 महर्लोक च, दे3 4 महालोक तु (→मम लोक तु)

५५ दे5 ○ -a) ब1 2 क्षेत्रस्य, दे10 क्षत्रस्य (→कुण्ड-स्य), दे4 तस्या कुण्डस्या सुश्रोणि -b) दे6 धार च, दे7 धाराश्च (→धारा न), ब1 पारावारस्य कश्चन, ब2 पारावारो न विद्यते, दे1 3 4 समन्तादितरे जना, दे10 पारावार न कश्चन -c) दे6 विस्तारा च (→विस्तारश्च) -d) ब1 2 दे10 महान् यथा, दे8 9 11 महाणवम (→महार्णव)

५५ b अनन्तर दे1 3 4 अधिकम-
चतुर्विंशतिद्वादश्या (दे3 °श्या, दे4°श्यो) नवधारा न किचन ।
(=५७a, ५५b)

५५ श्लोकात्पर ब1 2 दे10 अधिकम—
आश्चय च प्रमाण च भक्तिकीर्तिविवधनम । (=५९cd)
स्थानाना परम स्थान रहस्याना त(ब1 य)थोत्तर ।
कीर्तिना परमा कीर्तिर्लाभाना लाभमुत्तमम ।
धर्माणा परम धम गुह्याना गुह्यमुत्तमम् ।
दीप्तीना परमा दीप्तिर्द्युतीना च महाद्युति ।

[-1 ब1 भक्ति कीर्तिविवधना (→भक्तिकीर्तिविवधनम्) -2 ब2 ○ -3 ब1 परमा कीर्तिम्, दे10 परम कीर्ति-(→परमा कीर्तिर्) -4 ब1 2 ○ -5 ब1 दीप्ताना परमा दीप्तर्, दे10 दीप्ताना परम दीप्त(→दीप्तीना परमा दीप्तिर्), ब1 2 द्यूतीना(→द्युतीना) ]

आश्चर्य च महत् तत्र कथ्यमान मया शृणु ।
यानि पश्यन्ति सुश्रोणि समन्तादितरे जना ॥५६
चतुर्विंशतिद्वादश्या उदिते च दिवाकरे ।
न वर्द्धति ततश्चाम्भो यावदस्त न गच्छति ॥५७
जाताया च ततो रात्र्या तस्याम्भ पृथुलोचने ।
प्रभातसमय यावत् सम तिष्ठति तत्पुन ॥५८
एतत् ते कथित भद्रे सानन्दूरेति तन्मया ।
आश्चर्य च प्रमाण च भक्तिकीर्तिविवर्धनम् ।
गुह्याना परम गुह्य स्थानाना परम महत् ॥५९
यस्तु गच्छति सुश्रोणि अष्टभक्तपथे स्थित ।
प्राप्नोति परमा सिद्धि ममैव वचन यथा ॥६०
य एतत् पठते नित्य यश्चैन शृणुयात् सदा ।
कुलानि तेन तीर्णानि षट् च षट् च पुनश्च षट् ॥६१
एतन्मरणकाले तु स्मर्तव्य मानवै सदा ।
यदीच्छेद् विष्णुलोकाय निष्कल गमन प्रति ॥६२
एतत् ते कथित भद्रे सत्य गुह्य परोत्तमम् ।
सर्वभागवतार्थाय किमन्यत् परिपृच्छसि ॥६३

॥ इति श्रीवराहपुराण भगवच्छास्त्रे अष्टचत्वारिशदधिकशततमोऽध्याय ॥ १४८ ॥

---

५६　ब1 2 दे5 10 ○　–a) दे6 9 1 मुवे　सु (दे.स्व) महत्तत्र(→च महत्तत्र), दे2ते1 आश्चय महता तत्र　–c) दे( 9 11 मुवे　यच्च(दे6 7 यश्च) पश्यति(→यानि पश्यन्ति) –d)दे2 6-9 11 मुव　इतरो जन (→इतरे जना ) –cd) दे10 यस्तु गच्छति सुश्रोणि सानदूरे पथ स्थिता

५७　ब1 2 दे10 ○, द( ab ○　–b) दे2 ते1 उदयन्ति, द4 उदते च (→उदिते च), द6-9 11 मुवे　रवावभ्युदिते सति　–c) द ( 7 वपति, दे4 वर्धति, मुवे वद्धते (→वर्द्धति) –d) मुवे　यावत तिष्ठति तत्पुन

५८　ब1 2 दे10 मुवे ○　–a) दे6 7 रात्रौ (→रात्र्या), दे1 3 4 अथ तस्या निशाया तु, द2 ते1 अथ तस्या तु (ते1 तस्मिस्तु) रात्र्याया –b) द1　4 तदम्भ , दे2 ते1 स चाम्भ (→ तस्याम्भ )　–c) दे1-4 त1 प्रभातसमये चैव　–d) दे1 3 4 सममेतत्सव पुन , दे2 सममेतच्छ्रवेत्पुन , द5 सममेतत्सव पुन , दे6 सम तिष्ठति तत्यम , ते1 समवेतद् भवेत पुन

५९　ब1 2 दे2 10 ते1 ○　–b) दे1 3 4 मम (→मया) –c) दे1 प्रमाण तु (→प्रमाण च)　–d) दे6 7 °कान्ति° (→ °कीर्ति°), दे1 3 4 °विवधन　(→°विवधन)　–e) दे1 3 4 स्थानाना परम स्थान　–f ) दे1 3 4 रहस्य परम प्रिये

६०　दे2 ते1 ○, दे10 ab ○, ब2　cd ○ –b) दे1 3 4 °भक्तिपथे (द4 °पृथे) (→°भक्तपथे), दे5 –क्षित (→ स्थित ), ब1 2 अष्टभक्तोषितो नर　–c) ब1 दे10 प्राप्नोति य इमा सिद्धि

६० b,c मध्ये ब1 2 दे10 अधिकम्—

सोपि भागवतो भूमि दीक्षा तस्य न किंचन ।
न चैतत् पिशुने दद्यात् न मूर्खे शास्त्रवर्जिते ।
न च गोघ्नाय दातव्य न दद्याच्छास्त्रदूषके ।
मा पठेत् पापमध्ये तु शठमध्ये तु मा पठेत् ।
य एन पठते धीरो यश्चैन शृणुयान्नर ।　[5]

[–1 दे10 ○ –2 दे10 न चव पिशुन दद्या न दद्या शास्त्र दूषके　–1,2 पङ्क्त्योमध्ये ब1 अधिकम्—यस्तु गच्छति सुश्रोणि स्थूलदूरे पथि स्थित　–3 दे10 ○ –4,5 मध्ये ब1 दे10 अधिकम्– पठेद भागवता मध्ये मम शास्त्राथदशनात (ब1 °दूषकान) ]

६१　दे2 ते1 ○, ब1 2 दे10 ab ○ –b) दे1 3 4 चैतत्, मुवे चव (→चैन), दे5 8 9 11 मुवे मुदा (→सदा) –c) ब1 2 दे1 3 4 10 तारिताश्च (दे1 3 4 तारिता स्व)कुला स्तेन　–d) ब1 षष्टि षष्टि च त्रिशकम, ब० षष्ठि षष्ठि च त्रिशत , दे1 3 4 अष्टि (दे1 षष्टि ) षष्टिश्च त्रिश च (दे4 त्रिशत), दे10 षष्टि षष्टि च त्रिशक , मुवे पट च षट पुनश्च षट च

६२　दे2 ते1 ○ –a) द5 7-9 11 मुवे °काले न (→ °काले तु) –b) दे10 माधवै (→मानव ), दे5-9 11 मुवे विस्मर्तव्य कदाचन　–c) द5 8 9 11 मुवे °लोक हि, दे6 °लोक च, दे7 °लाकेन (→°लोकाय) –d) ब1 निष्फल (→निष्कल), दे6 7 गमने (→गमन), दे5 7-9 11 मुवे नर , द6 पुन (→प्रति)

६३　–a) दे7 भद्र (→भद्रे), द1 पर मम (→परोत्तम), ब1 2 द10 यद्गुह्य परमुत्तम, दे2 ते1 सगुह्य परमोत्तमम्, दे5-9 11 मुवे त्वया पृष्ट (दे6 7 पृष्टे) च मा प्रति –c) दे5 8 9 11 कथित, दे6 उक्त–, दे7 मुवे उक्त (→सव–)

**पुष्पिका—**

**पुराणनाम**—दे6 ○, ब1 2 मुवे इति श्री (ब2 इति) वराहपुराणे भगवच्छास्त्र, दे1-5 7-11 इत्यादि वा(दे3 4 श्रावा, दे10 व)राहपुराणे भगवच्छास्त्रे, ते1 इत्यादि महापुराणे वाराहे भगवच्छास्त्रे **अध्यायनाम**—ब1 2 दे10 स्ना(ब1 स्था)नदूरवर्णनो (ब1 °न) नामाध्याय , दे1 3 4 सानदूर (दे1 °र) गुह्यमाहात्म्य नाम (दे3**), दे2 ते1 सानदगुह्यमाहात्म्यवणनो नाम, दे5 11 सानन्दूरमाहात्म्यवणनो नाम, दे6 सान्नदूरमाहात्म्य, दे7 सानदूरमाहात्म्य नामाध्याय , दे8 9 सानन्दूरमाहात्म्यवणनो नाम अध्याय , मुवे सानदूरमाहात्म्य नाम **अध्यायसख्या**—ब2 दे1-7 9-11 ○, ब1 ॥१४३॥, दे8 ॥५३॥, मुवे पञ्चाशदधिकशततमोऽध्याय ॥१५०॥, ते1 पञ्चषष्ट्युत्तरशततमोऽध्याय ।

# १४९

सूत उवाच ।*

एतच्छ्रुत्वा तु माहात्म्य सानन्दूराद् वसुधरे ।
कृताञ्जलिपुटा तत्र विमलेनान्तरात्मना ॥१

धरण्युवाच ।*

श्रुतमेतज्जगन्नाथ विष्णो गुह्यमनुत्तमम् ।
यच्छ्रुत्वा सुमहाभाग जाताऽस्मि विगतज्वरा ॥२
अस्ति किञ्चिन्महद् गुह्य हृदये परिवर्त्तते ।
सानन्दूरात्पर गुह्य क्षेत्रमस्ति क्वचित्परम् ॥३
सुरकारण नरसिह लोकनाथ
युधि ससुरासुर देव धीरवर ।
कमलदलसहस्रनेत्ररूपो जयति
कृतान्तमनेककालरूप ॥४
गद्गद वचन श्रुत्वा पृथिव्या वै जनार्दन ।
उवाच मधुर वाक्य सवस्यार्त्तिहरो हरि ॥५

श्रीवराह उवाच ।*

शृणु देवि च तत्त्वेन यन्मा त्व परिपृच्छसि ।
गुह्यमन्यत्प्रयत्नेन कारण महत प्रियम् ॥६
तत सिद्धवटे भद्रे गत्वा वै त्रिशयोजनम् ।
म्लेच्छमध्ये वरारोहे हिमवन्तसमाश्रिते ॥७
तत्र लोहार्गल नाम निवास मे विधीयते । वे १५१ ८

## १४९

* दे1 ○ ब1 2दे10 धरण्युवाच

१ –a) दे5 9 11 मुवे सान दूरस्य माहात्म्य –b) ब1 स्थान दूर, ब2 सानन्दूर, दे1 3 सादूराच्च दे5-9 11 मुवे एतच्छ्रु त्वा, दे10 सानदूरे (→सानदूराद) –c) दे5 9 11 मुवे भूत्वा (→ तत्र) –d) दे5 9 11 मुवे व(दे5 8 9 11 वा)राह पुनरब्रवीत

* ब1 2दे4 10 ○, दे6 धरणी उवाच

२ –a) ब1 2दे10 महाभाग (→जगन्नाथ) –b) ब2दे5 9 विष्णोर, दे2 विष्णु– (→विष्णो) –c) दे1 3 तु (→सु–), ब1 2 य श्रुत्वास्मि महाभागा, दे2ते1 य श्रुत्वा तु महाभाग दे4 एतत श्रुत्वा महाभाग, दे6 7 य श्रुतेव (दे7 यच्छ्रुत्वेव) महाभाग, दे10 य श्रुत्वास्मि महाभाग –d) ब2दे3 °ज्वरा, दे2 6 10ते1 °ज्वर, दे5 °त्वरा (→°ज्वरा).

३ –a) ब1 2दे10 पर गुह्य, दे3 4 महागुह्य (→महद गुह्य), दे5-9 11 मुवे अपर वास्ति चेत् किञ्चिद् –b) दे10 परिवत्तत (→परिवत्तते), दे5-9 11 मुवे गुह्य क्षेत्र शुभावह –c) ब1 स्थान दूराद्, दे1 3 सनन्दूराद (→सानन्दूरात) –d) दे1 ह्युचित पर, दे2ते1 तत पर, दे5-9 11 मुवे न वा परम् (→ क्वचित पर), ब1 श्रेष्ठमस्ति त्वया परा, ब2 श्रेष्ठमस्ति तदा वद, दे10 श्रेष्ठमस्मिस्तथा पर, दे11 क्षेत्रमस्ति न वा परम्

४ दे6 7 ○ –a) ब1 2दे10 सुरवरनरसिंह, दे2 5 8 9 11 मुवे ते1 सुरकरणनृ (दे2 ते1 नर)सिंह (→सुरकारण नरसिंह) –b) ते1 न(→स–), ब1 युधि ससुरासुरमध्य एकवीर, ब2 अधिससुरासुरमध्य एकवीर, दे5 8 9 11मुवे यु(मुवे.युत)ससुरसुर धीरदेववीर, दे10 युधि ससुरासुरदेव एकवीर –c) दे6** (→–दल–), ब1 –विष्णोर, ब2**, द10 –भूयो (→ –रूपो) –d) ब1 2 कृतान्तक एककालरूप, दे1 3 4 कृतान्तकनेमकालरूप (दे1 °रूप), दे5 9 11 मुवे कृतान्तसमान (दे5 8 समास) कालरूप

५ –b) दे2 ते1 पृथिव्याथ, दे5 9 11 मुवे पृथिव्या स, दे7 पथिव्या स (→पथिव्या वै), ब1 पथिव्या स च साधक, ब2 पृथिव्या स च माधव, दे6 पथिव्या चव मज्जना, दे10 पथिव्यास्त च माधव –d) ब1 2 दे10 स सर्वार्त्तिहरो हरि, दे2 ते1 सर्व (ते1 सव) चार्त्तिहरो हरि, दे5 8 9 11 मुवे सवलोकार्त्तिहा हरि

*ब1 2 दे10 ○, दे1 वाराह उ०, दे2 6 7 ते1 वराह उवाच, दे3 4 श्रीवाराह उवाच, दे5 8 9 11 वाराह उवाच

६ ब2 cd ○, दे6 ○ –a) ब1 2 दे10 शृणु भूमि प्रयत्नेन, दे1 3 4 शृणु देवि (दे1°वा) प्रवक्ष्यामि, दे6 7 शृणुष्व देवि तत्त्वेन –c)ब1 गुह्यमन्य प्रवक्ष्यामि, दे2ते1 गुह्यमन्यच्च वक्ष्यामि, दे5-9 11मुवे गुह्यमन्यत्प्रवक्ष्यामि, दे10 गुह्यमन्य प्रवक्ष्यामि –d) ब1 दे2 10 ते1 क्रिया, दे1 प्रिया (→प्रिय), दे5 7-9 11मुवे मदगत (दे11 महत ) कमणो जनि (दे7 °जिन )

७ ब2 ab○ –a) दे2ते1 सिद्धि–, दे4 सिद्ध (→सिद्ध–), दे5 8 9 11 मुवे गत्वा (→भद्रे), ब1 यत्र सिद्धास्तटे भद्रे, दे10 तस्मिन्सिन्धोस्तटे भद्रे –b) दे5 9 11मुवे त्रिंशद्योजनदूरत –c) दे2 म्लेच्छमध्य–, ते1 सिंहमध्य– ( →म्लेच्छमध्ये ) –d) ब1 हिमवन्ते समाश्रित, ब2 हिमालयसमाश्रिते, दे1 3 4 हिमाचलसमाश्रिते, दे5-9 11 मुवे ते1 हिमवन्त समाश्रित (ते1 °ते)

८ –a) ब1 तत्र लोहाफल नाम, ब2 तत्र लोहाकुल नाम,

८ गुह्या पञ्चदशा यत्र समन्तात्पञ्चयोजनम् ।।८
दुर्गम दु सह चैव सपापै परिवेष्टितम् ।
सुलभ पुण्यकर्माणा मम चिन्तानुसारिणाम् ।।९
तत्र तिष्ठाम्यह भद्रे उदीची दिशमाश्रित ।
हिरण्यप्रतिमा कृत्वा जातरूपा न सशय ।।१०
ततो मे दानवा सर्वे क्रमन्तो लोकमुत्तमम् ।
मम चैवान्तर दत्त्वा हत्वा माया च वैष्णवीम् ।।११
तत्र ब्रह्मा च रुद्रश्च स्कन्देन्द्रसमरुद्गणा ।
आदित्या वसवो वायुरश्विनौ च महौजस ।
सोमो बृहस्पतिश्चैव ये चान्ये वै दिवौकस ।।१२
तेषा चैवार्गल दत्त्वा चक्र गृह्य महौजसम् ।
शतकोटिसहस्राणि शीघ्रमेव निपातिता ।।१३
ततश्च देवता सर्वास्तुष्यमाणा इतस्तत ।
एव लोहार्गलेत्यासीन्नाममेत च कारितम् ।।१४
ततो देवासुरे युद्धे हत्वा त्रिदशकण्टकान् ।
ते मा सस्थापयन्त्यत्र तस्मिन् देशे यशस्विनि ।।१५

द1 तत्र हालागल नाम द5 8 9 11 मुवे तत्र लोहागले क्षेत्रे, द10 तत्र लौहगल नाम -b) दे5 9 11 मुवे निवासो विहित नभ -c) द10 त1 गुह्य (→गह्या ), ब1 दाघ पञ्चदश नाम, ब2 गह्य पचदशो नाम, द5-9 11 मुवे गुह्य पञ्चदशायाम (द6 °न)

९ -a) ब1 2 दुर्लभ, दे10***(→दुगम) -b) ब1 न पाप परिवेष्टित, ब2 पापीना च विशेषत , द9 ते1 समापे परिवे (दे1 °चे) ष्टित, द5-9 11 मुवे पापै सवत्र वेष्टितम (दे6 चेष्टित), दे10 स पापपरिचेष्टित -c) ब1 सुलभ तकभावाना, ब2 दे10 सुलभ शुद्धभावाना, दे1 2 सुलभ पुण्यकर्मण, दे5-9 11 मुवे सुलभ पुण्य युक्ताना -d) द8 चित्तानु° (→चिन्तानु°), ब1 2 द10 मम चिन्तापरायण

१० -b) दे7 प्रतीची (→उदीची), द1 2 6 दिशिम (→दिशम), ब2 दे4 10 आश्रिता (→आश्रित ) -d) ब1 2 जातरूपी, दे2 ते1 जातरूप, दे10 वातरूपी (→जातरूपा)

b चरणानन्तरम ब1 2 दे10 अधिकम्—
कश्चिन्न जायते तत्र सुमूर्ति मामवस्थितम ।
ये तु यान्ति वरारोहे सुकमपरिनिष्ठिता ।
ते माञ्चैवात्र पश्यति स गुह्यानि यथा तथा ।
मम कुण्डस्य चाग्रेण शिलापुञ्जेन वेष्टित ।
मनोज्ञो रमणीय च प्रसन्नविमलोदकम ।
तत्र तिष्ठाम्यह भद्रे स्वकर्मपरिनिष्ठित ।।

[-1 दे10 जानते (→जायते), ब2 मुहूर्तं, दे10 स्वमूर्ति (→सुमूर्त्ति), दे10 मम सस्थित (→मामवस्थित) -2 दे10 येषु (→ये तु), ब2दे10 स्वकर्म° (→सुकम°) -3 दे10 ○ -4 दे10 ○ -5 ब2 मनोज्ञ (→मनोज्ञो) -6 दे10 ○ ]

११ ब2 दे7 cd ○ -a) दे10 मा (→मे) -b) ब1 2 क्षिपन्तो, दे10 क्षिपन्ति (→क्रमन्तो), दे2 ते1 लोक चोत्तम (→लोकमुत्तमम्) -c) ब1 दे3 5 6 8-11 मुवे मया, दे2 सम-, ते1 सम (→मम), ब1*वाफल, दे6 चैवान्तरा (→चैवान्तर), ब1 द5 6 8 9 11 मुवे कृत्वा (→दत्त्वा), दे10 मया चवागत्र दत्त्वा -d) ब1**, दे5 8 9 11 मुवे कृत्वा (→हत्वा) द2 ते1 माया वै चव वैष्णवी (ते1 °व), द6 माया चव***, दे10 हृत्वो माया च वैष्णवीम

१२ दे6 7 ○, ब० द10 ef ○ -a) दे1 3 तु (→च), दे5 9 11 मुवे रुद्राश्च (→रुद्रश्च) -b) द1 3 4 स स्कन्द न्द्र , दे2 त1 स्कन्देन्द्रश्च, दे11 स्कन्देन्द्रा म-, मुवे स्कन्दे द्रौ स- (→स्कन्देन्द्रस-) -c) दे10 आदित्यो (→आदित्या), दे4 वासवो (→वसवो), द2 ते1 रुद्रार् (→वायुर्) -d) दे1 8 महौजसा, दे5 9 11 मुवे महौजसौ (→महौजस ) -e) द2 त1 वृहस्पतिर्विश्वे (→वृहस्पतिश्चैव) -f) दे1 4 ते1 च (→वै)

१३ -a) ब1 2 चैवाकुल, दे1 3 4 चैकागला (→चैवागल), दे1 दृष्ट्वा, ते1 गत्वा (→दत्त्वा) -b) ब1 ते1 चक्र गुह्य, ब2 चक्र गुह्य-, दे1 3 4 गुह्य चक्र (दे4 °क्रौ) (→चक्र गृह्य), द6 महौजसा (→महौजस) -c) ब2 दे1 3 4 10 शत (→शत-), ब1 दे10 -कोटी- (→-कोटि-), ब1 2 दे1 3 10 -सहस्राणा (→-सहस्राणि) -d) दे2 ते1 निपातित , दे5-9 11 मुवे निपातित (→निपातिता )

१४ ब2 ab ○ -a) दे1-4 10 ते1 सर्वे (→सवास्) -b) ब1 दे4 6 10 ते1 तुष्य (दे10 °ष्ट) माना (ब1 °नास्) (→तुष्यमाणा), ब1 ततस्तत , दे6 समाभवत्, दे7 ममाभवन् (→इतस्तत ) -c) ब1 2 एव लोहाकल (ब2 °कुल) नाम, दे5 9 11 मुवे एव लोहार्गल नाम -d) दे1 3 4 एतच्च (→एत च ), ब1 2 दे10 मया वै तत्र कारित, दे5 8 9 11 क्षेत्र नाम मया कृत, दे6 7 मुवे क्षेत्र तत्र (मुवे चैव) मया कृतम

१५ -a) दे4 ततो देवासुर (हरे) युद्धे -b) ब1 2 दे10 त्रिपुर° (→त्रिदश°) -c) दे1-4 ते1 तेषा (→ते मा), ते1 सस्थापयेत्यत्र (→सस्थापयन्त्यत्र), दे5-9 11 मुवे तेषा सस्थापन तत्र, दे10 ततो मा स्थापयन्त्यत्र. -d) दे5-9 11 मुवे कृत चैव महौजस (दे5 9 11 °सा)

**यो मा पश्यति सुश्रोणि प्रयत्नेन कदाचन ।**
**तेऽपि भागवता भूमे भवन्ति परिनिष्ठिता ॥१६**
**तत्र कुण्डेति सुश्रोणि स्नान कुर्वन्ति निश्चिता. ।**
**उपोष्य च त्रिरात्र तु विधिदृष्टेन कर्मणा ।**
**तत स्वर्गसहस्रेषु मोदते नात्र सशय ॥१७**
**अथात्र मुञ्चते प्राणान् स्वकर्मपरिनिष्ठित ।**
**सर्वस्वर्गान् परित्यज्य पश्यते मम नित्यश ॥१८**
**अन्यच्च ते प्रवक्ष्यामि यत्र तत्परमाद्भुतम् ।**
**लोकविस्मापनार्थं तु यो मया तत्र तत्कृत ॥१९**
**चतुर्विंशतिद्वादश्या मासेन विधिना मम ।**
**बलि प्रदीयते तत्र सर्वकर्मविशोधनम् ॥२०**
**अश्वो मे कल्पितस्तत्र सर्वरत्नविभूषित ।**
**श्वेत कुमुदवर्णाभ शङ्खकुन्दसमप्रभ ॥२१**
**मार्गणा मे धनुस्तत्र अक्षसूत्र कमण्डलुम् ।**
**आसन वितत दिव्य दीयते चाश्व उत्तम ॥२२**
**श्वेतपर्वतमारुह्य पतमान कुरून् बहून् ।**
**पतितास्तत्र दृश्यन्ति क्षतस्तत्र न विद्यते ॥२३**
**अन्ये कान्येव रूपाणि पातयित्वा इतस्तत ।**
**शान्तदान्तपरिक्लिष्ट स चाश्वो दिवि वर्त्तते ॥२४** वे १५१ २५

१६ –a) दे3 6 ये (→यो), बा 1 2 दे4 7 10 पश्यति, दे6 पश्यन्तु (→पश्यति), दे5 9 11 मुवे तत्रस्थ (→सुश्रोणि) –b) बा 1 2दे10 प्रसन्नेनान्तरात्मना –c) बा 1 2दे10 शुद्धा, दे2 भूमि दे6 भमौ (→भूमे) दे5 9 9 11 मुवे सोऽपि भागवतो भूमे –d) ... तो लभन्ति (→भवन्ति), दे 9 11 मुवे भवत्येव सु(दे7 स्व) निष्ठिता ( मुवे °त )

१७ –a) दे5-9 11 मुवे तस्मिन (→तत्र) बा 1 2 दे10 कुण्डे च, दे5 6 8 9 11 मुवे कुण्ड तु (→कुण्डेति), दे4 सश्रोणि दे7 स्वश्रोणि (→सुश्रोणि) –b) बा 1 दे2 तो निश्चित बा2 दे10 निश्चित(→निश्चिता ), दे5 9 11 मुवे य स्नाति (दे6 7 स्नाति यो) नियतो नर –c) दे1 3 त्रिरात्र च, दे2 निर न तु, दे4 त्रिरात्र वै दे10 त्रिरात्रे तु (→त्रिरात्र तु) –e) तो स्वर्गे (→स्वर्ग–), बा2 स्वगवर्षसहस्राणि –f) बा2 दे6 मोदन्ते, दे10 मोक्षो*(→मोदन्ते)

१८ –a) बा2 अथवा (→अथात्र), बा 1 2 मुञ्चति (→ मुञ्चते) –b) बा 1 दे6 सुकर्म° (→स्वकर्म°) –c) बा 1 दे2 5-9 11 मुवे सर्वान स्वर्गान, बा2 स्वर्गलोकान, दे10 सर्वान स्वप्नान (→ सर्वस्वर्गान) –d) बा 1 2 दे5-11 मुवे मम लोक प्रपद्यते, दे2 तो या (दे2 य) स्यते मम नित्यश

१९ –a) बा2 दे2 10 अन्य च (→अन्यच्च) –b) बा 1 2 दे6 7 10 तत्र यत्परमाद्भुतम –c) दे7 लोकान (→लोक–), दे2 –विष्टापनार्थाय, दे5 9 11 मुवे –विस्मापनार्थाय दे6 7–विस्मयनार्थाय, दे10– विस्यापनार्थाय, तो –विज्ञापनार्थाय(→ –विस्मापनार्थ तु) –d) बा1दे10 मम पात्र (दे10 च) तत कृत बा2 मम भक्ष तत कृत , दे2 तो यो मयात्र तत (तो °त ) कृते दे5 9 11 मुवे मया तत्र च यत्कृतम

२० –b) दे5 मुवे मासेन (→मासेन), बा 1 परम मे विना मम, बा2 पर में तत्र** वै –c) बा 1 दे2 तो बलिर्मे, बा2 दे1 3 4 10 बलि मे (→बलि प्र ) –d) बा 1 सवकाय–, बा2 सवकाय–, दे1 3 4 सवपाप–, दे2 मुवे सवकाम–, दे5 सव कम– दे10 सवकाया–, तो सवकामा– (→सवकम–)

२१ दे10 d ○ –a) दे6 अश्वि– (→अश्वो), दे2 कल्पिता, दे4 कल्पिता दे6 कल्पित (→कल्पितस) –b) दे6 7 सर्वाङ्गेषु विभूषित –c) दे6 श्वेत– (→श्वेत ), बा 1 2 °पत्राभ , दे1 3 °पद्माभ , दे4 °पद्मान्य , दे10 °पुष्पस्य (→°वर्णाभ ) –d) दे4 प्रभा दे5–प्रद (→–प्रभ ), बा 1 2 शङ्खचक्रसमप्रभ

२२ दे10 d ○ –a) बा 1 शाङ्ग च मे धनुस्तत्र, बा2 शाङ्ग मे च धनुस्तत्र, दे2मागणा मे यतुस्तत्र, दे10शाङ्ग मे तद्धनुस्तत्र, तो मागणाम्पि यतस्तत्र –b) बा2 अक्षमूल, दे3-5 8 9 अक्षसूत्र–, तो अष्टसूत्र(→अक्षसूत्र) दे2 5 7 11मुवे –कमण्डलु , दे6 कमण्डल (→कमण्डलुम) –c) बा 1 दे10 आसन भूषण दिव्य, बा2 आसन वसन दिव्य दे2 तो आसन वितत दिव्य–, दे3 4 आसन वेदितव्य (दे4 °व्ये) मे –d) बा 1 2 दीयते तत्र (बा 1 चात्र) चोत्तम, दे2 तो दीयते चाश्व चोत्तम , दे5 8 9 11 मुवे दीयतेऽश्वोपरिस्थिरम, दे6 दीयते शोकनिस्थिरम, दे7 दीयतेऽश्वोकरिस्थिरम

२३ –a) दे2 तो श्वेतपवतमारूढ –b) दे1 पतमान–, दे पवमान , दे4 पठमान (→पतमान ), बा 1 दे10 पात्यमाना (बा 1 °न) स्ततो विभो, बा2 पात्यमाना इतस्तत –c) बा 1 2 दे1 9 11 मुवे पतितस, दे10 पनितिस (→पतितास), दे6 10 तस्य (→तत्र), बा 1 2 दे1 3-11 मुवे दश्येत (→दृश्यन्ति) –d) बा 1 2 दे5-11 मुवे क्षत (दे6 10 क्षत्र) तत्र न दश्यते, दे1 3 4 क्षत्र (दे1 क्षत) तत्र न विद्यते

२४ बा2 ○, बा1 cd ○ –a) बा 1 दे1 4 6 7 10 11 मुवे तो अनेकान्येव, दे5 8 अन्ये कानेव (→अन्ये कान्येव) –b) बा 1 दे10 ततस्तत दे1 इतस्त*, दे5-9 11 मुवे नभस्त (दे8 °स्थ) लात् (→इतस्तत ) –c) दे5-9 11 मुवे शा तो दान्त (→शान्त-दान्त–), दे7 परिक्लिष्टा , तो –परिक्लिष्ण (→–परिक्लिष्ट )

सूत उवाच ।❀

ततो भूम्या वच श्रुत्वा ब्रह्मपुत्रो महामुनि ।
विस्मय परम जग्मुर्विष्णुमाहात्म्यचोदित ॥२५
तत स विस्मय गत्वा ब्रह्मपुत्रो महामति ।
सनत्कुमारो भगवान् पुनरेव प्रभाषत ॥२६

सनत्कुमार उवाच ।❀

धन्याऽसि देवि सुश्रोणि सुपुण्याऽसि वरानने ।
देवि यल्लोकनाथेन दर्शन स्पर्शन गता ॥२७
पद्मपत्रविशालाक्षो यस्त्वया परिपृच्छित ।
न वदस्व वरारोहे तत शान्तिमुपैष्यति ॥२८
यथा यथा भाषसि धर्मसहित
गुह्य पर देववरप्रणीतम् ।
गुणोत्तम कारण शास्त्रसयुत
तथा तथा भावयसे मनो मम ॥२९
तत स पुण्डरीकाक्ष पुनराचक्षते कथम् ।
कर्मणा विधिदृष्टेन सर्वभागवतप्रियम् ॥३०

सूत उवाच ।❀

तस्य तद्वचन श्रुत्वा कुमारस्य महौजस ।
उवाच मधुर वाक्यमाभाष्य ब्रह्मण सुतम् ।
शृणु वत्स जगन्नाथो यथा मामाह नोदित ॥३१

श्रीवराह उवाच ।❀

एव तत्रैव कर्माणि क्रियन्ते विधिपूर्वकम् ।
शोधकानि च पापाना मृदूनि च शुभानि च ॥३२

---

–d) द1 3 4 स चाष्टो, दे5 9 से चाश्वे दे6 सर्वश्वो, दे7 11 म चाश्वे (→म चाश्वो), द10 स वाश्वो विनिवत्तते

❀ ब1 2 दे10 ○, दे9 मूत उवा*

२५ ब1 2 ○, दे1 5 7 8 cd ○ –a) दे6 , भूमि- दे10 भूमेर् (→भूम्या) –b) दे10 महाऋषि (→महामुनि ) –c) द6 9 11 मुवे प्रासो (→जग्मुर) –d) दे3 4 °नोदिता (→°चादित ) दे6 विष्णुमायाभिमोहित , दे9 11मुवे विष्णुमायोप बृहित , दे10 विष्णोर्माहात्म्यमुत्तमम

२६ ब2 ○, दे5 7 8 ab ○ –a) ब1द10 श्रुत्वा (→गत्वा), दे6 9 11 मुवे तत स विस्मयाविष्टो –b) ब1 महाद्युति , दे 1 6 महामुनि (→महामति ) –c) ब1 मध्वक्ष , दे10 मध्वाक्ष (→भगवान) –d) ब1 दे10 प्रभाषति, दे1 3 4 6 7 प्रभाषते, दे5 9 प्रभाषत (→प्रभाषत), मुवे पुनरेवमभाषत

❀ ब1 2दे10 ○

२७ ब2 ○ –b) ब1 दे10 पुण्यासि (दे10 पुष्पाणि) च वराङ्गने –c) ब1दे10 भूमि (→देवि), मुवे लोकनाथस्य (→लोकनाथेन) –d) दे2 दशन यद गगतासि(?), मुवे साक्षाद्दशनमागता, ते1 दशन यद्वरासितम् (?)

२८ ब2 ○ –a) दे6-8ते1 °विशालाक्षि (→°विशालाक्षो) –b) ब1दे10 दष्टमाधव , दे2 परिपृच्छसि, दे3 परिपृच्छत , दे4 परिप्रच्छेत, दे5-9 11मुवे परिभाषित , ते1 परिपृच्छित (→परिपृच्छित ) –c) दे3 4 ददस्व (→वदस्व), दे2ते1 त च दत्त्वा वरारोहे, दे5-9 11 मुवे तेनोक्त शस सकल –d) दे1 उपैष्यसि (→उपैष्यति), दे5-9 11 मुवे सर्वेषा सुखवधनम

२९ ब2, ○, ब1दे10 c ○ –a) ब1दे10 माधवि, दे5 6 8 9 11 मुवे वदसि च दे7 वदसि, ते1 भाषति(→भाषसि), ब1 दे10 °सयुत दे6 °सयुतो (→°सहित) –b) दे6 मह्य वर (→गुह्य पर), दे1 3 4 देववर (→देववर–), ब1 चराचर प्रेरयसे महद्भुत, दे10 वाच च मा प्रेरयसे ममाद्भुत –c) दे2 ते1 कारणशास्त्रसयुत, दे5 7-9 11 मुवे कारणसप्रयुक्त (→कारण शास्त्रसयुत), दे6 गुणो तु सस्कारणशस्त्रयुक्त –d) दे2ते1 नमो नम , दे8** नि मे, दे7 मनो मे (→मनो मम), ब1 तथा तथा धारयसे मनो मम, दे10 तथा तथा रामयसे मनो मम

३० ब2 ○ –a) दे1 10 तत स पुण्डरीकाख्य (दे10 °क्ष) –b) दे10 पुनराचक्षसे (→पुनराचक्षते), ब1 दे4 ते1 कथा (→कथ), दे5-9 11 मुवे किमाचष्ट तत परम् –d) ब1 दे3 5 8 °भागवत (→°भागवत–), दे1-4 ते1 –प्रिय (→–प्रिय), दे6 7 आ (दे6 सु) भाष्य ब्रह्मण सुत (दे7 स्मृत)

❀ ब1 2 दे10 ○

३१ ब1 2 दे10 ef ○ –d) दे7 ब्राह्मण (→ब्रह्मण ) –f ) दे1 2 8 मुवे चोदित , ते1 शोधित (→नोदित ), दे4 यथा हेमप्रणोदित

❀ ब1 2दे10 ○,दे1 श्रीवाराह उ०, दे2 ते1 वराह उवाच, दे3 4 श्रीवाराह उवाच, दे5 8 11 वाराह उवाच, दे9 वाराह उ०

३२ ब2 ○, दे1 cd ○ –a) दे1-4 ते1 सर्वाणि, दे10 शसन्ति (→कर्माणि), ब1 तत्रैव वासमानानि –b) ब1 दे10 श्रेयसे, दे1 क्रीयते, दे2 3 4 ते1 क्रियते, दे6 7 क्रियता (→क्रियन्ते), दे1 3 4 °पूवक (→°पूवकम) –c) दे5 8 9 पापानि (→पापाना), ब1 दे2-4 10 ते1 शोधन (ब1 दे10 शोभन) सवगात्राणा –d) ते1 कान्तानि (→मृदूनि), दे2*** (→शुभानि)

अश्वाना तत्कुलीनाना मा वहन्ति सुमध्यमे ।
नान्य वहन्ति ते चाश्वा मम वाहा दुरत्यया ॥३३
कुण्ड पञ्चसरो नाम गुह्य क्षेत्र पर मम ।
धारा पतन्ति चत्वारि शङ्खवर्णा मनोजवा ॥३४
तत्र स्नान तु कुर्वीत चतु कालसमास्थित ।
लोक चैत्राङ्गद गत्वा गन्धर्वै सह मोदते ॥३५
अथ चेन्मुञ्चते प्राणास्तस्मिन् क्षेत्रे परे मम ।
गन्धर्वलोकमुत्सृज्य मम लोकाय गच्छति ॥३६
ततो नारदकुण्डेति मम क्षेत्रे पर महत् ।
पतन्ति धारा वै पञ्च तालवृक्षसमोपमा ॥३७
तत्र स्नान तु कुर्वीत एकभक्तोषितो नर ।
देवर्षि नारद पश्येन्मोदते तेन वै समम् ॥३८
अथात्र मुञ्चते प्राणान् मम गुह्यविनिश्चित ।
प्रमुच्य नारद दिव्य मम लोक च गच्छति ॥३९
ततो वसिष्ठकुण्डेति तस्मिन् क्षेत्रे पर मम ।
धारा पतन्ति त्रीण्यत्र नातिह्रस्वा न चोत्तमा ॥४०
तत्राभिषेक कुर्वीत ऐकभक्तोषितो नर ।
वासिष्ठ लोकमासाद्य मोदते नात्र सशय ॥४१
अथात्र मुञ्चते प्राणान् मम कर्मसु निष्ठित ।
वासिष्ठ लोकमुत्सृज्य मम लोक प्रपद्यते ॥४२ वे १५१ ४४

---

३३ ब2 दे1 ○ –a) ब1 दे10 ता कुलान्येव चाश्वाना, दे2 सकुक्षोन्येव साश्वाना, दे3 4 ते कुलान्येव चान्यो य, ते1 मकुक्ष तेनैव साश्वाना –b) ब1 दे10 ये वहन्ति हया मम, दे2 ते1 ये वहन्ति शुभे मम, दे3 4 ये वहन्ति (दे4 व-न्ति) शुभ मम दे6 7 ये मा वहन्ति सुन्दरि, मुवे आवहन्ति सुमध्यमे –c) ब1 अन्योन्य वाह्यते कश्चित, दे2 ते1 अन्यत्र वाहयेत कश्चित, दे3 4 अ-यत्र (दे4 अ-ये यत्र)वाहयेत्तत्र, दे10 अन्या न वाहयेत कश्चित –d) ब1 दे10 तान हयानभिसस्थितान, दे2-4 ते1 तान हयान मयि सस्थितान

३४ ब1 2 दे10 cd ○ –a) दे1 कुण्ड–, दे6 कुण्डे (→कुण्ड), दे1 3 4 पञ्चशिर दे2 ते1 पञ्चसर दे10 पञ्चशर (→पञ्चसरो) –b) ब1 2 दे10 तस्मिन क्षेत्रे, दे1 3 4 गह क्षेत्रे, दे2 गुह्य नेक्षे (?), दे5 7-9 11 गुह्य क्षेत्रे (→गुह्य क्षेत्र) –c) मुवे चतुर्धारा पतन्त्यत्र –d) दे2 6 ते1 शखवण–(दे6 °ण) (→शखवर्णा), दे6 7 11 मनोजव (→मनोजवा), दे1 3 4 शखवणन–(दे4 °त) तोजला

३५ ब1 दे10 ○ –a) दे1 प्रकुर्वीत (→तु कुर्वीत) –b) ते1 °समन्वित (→°समास्थित), ब2 षष्ठकालोषितो नर, दे5 9 11 मुवे चतुभक्तोषितो नर –c) दे1 नाम, दे3 4 कृत्वा, दे6 दत्त्वा(→गत्वा), ब2 गन्धवभवन गत्वा, दे2 ते1 लोक चैत गद (दे2 °दो) गत्वा –d) ब2 मोदते नात्र सशय

३५ b चरणानन्तर दे2 8 अधिकम—
देवर्षिनारद पश्येन्मोदते तेन वै समम ।
अथात्र मुञ्चते प्राणान मम गुह्य विनिश्चितम
(=३८cd–३९ab)

[–2 दे8 गुह्यविनिश्चित (→गुह्य विनिश्चितम)]

३६ ब1 दे10 ab ○ –a) दे1 3 4 ते1 अथात्र, दे2 यथात्र (→अथ चेन), ब2 अथ प्राणान प्रमुच्येत –b) दे3 4 अस्मिन् (→तस्मिन्), दे1-6 8 ते1 पर (→परे), ब2 तस्मिन् पञ्चसरे मम –d) ब1 2 दे10 मम लोके (दे10 लोक) प्रपद्यते, मुवे मम लोक स गच्छति

३७ ब1 cd ○ –a) मुवे °कुण्डे तु (→°कुण्डेति) –b) दे1 3 4 पर तप (दे1 तप), दे2 ते1 पर भुवि, दे5 8 9 11 मुवे परे महत, दे6 परेमहि, दे7 परे महि (→पर महत), ब1 2 दे10 क्षेत्रमस्ति पर मम –c) ब2 दे10 धारात्र पतते पञ्च, दे5 9 11 मुवे पञ्चधारा पतन्त्यत्र –d) ब2 दे10 तालवृक्षोपमा तथा (दे10 °समा), दे6 7 तालवृक्षफलोपमा

३८ ब1 ○ –a) दे5-10 प्रकुर्वीत (→तु कुर्वीत) –c) ब2 दे3-9 देवर्षि–, दे10 ते1 देवर्पिर (→देवर्षि) –d) दे1 मादते (→मोदते), ब2 दे10 सह तेन च, दे1 2 ते1 सह ते पुन, दे3 4 हम ते पुन (→तेन वै समम्)

३९ ब1 ○ –b) दे6 7 गुह्य, ते1 गुह्य (→गुह्य–) दे7 विनिश्चितै(→–विनिश्चित) ब2 दे10 मम कमविनिष्ठित (ब2 °विनि सृत) –d) ब2दे1 3 4 लोक स, दे6 7 लोकाय(→लोक च)

४० ब1 ab ○ –a) मुवे °कुण्ड तु (→°कुण्डेति) –b) मुवे क्षेत्र (→क्षेत्रे), ब2 दे10 क्षेत्रमस्ति पर मम –c) दे5 9 11 मुवे तिस्रस्तु (→त्रीण्यत्र) –d) ब2 चोच्छ्रिता (→चोत्तमा), दे5 9 11 मुवे न स्थूला नाति (दे6 7 न च) वै कृशा

४१ दे7-9 cd ○ –a) दे10 तथा (→तत्रा–) –b) ब1 2 दे10 प्राणायामसमन्वित (दे10 °त), दे5 9 11 मुवे पञ्चकालोषितो नर (दे9****)

४२ दे7-9 ab ○ –b) ब1 2 दे10 एकचित्तो (ब2 °त्ते) जितेन्द्रिय दे2 ते1 मम गुह्य (ते1 °ह्य) विनिश्चित –c) दे1 4 10 वसिष्ठ, दे6 7 वसिष्ठ– (→वासिष्ठ), दे1 3 4 ऋषिम (→लोक), दे2 ते1 प्रमुच्यतेरदन्तव्य (ते1 °प्य) –d) ब1 दे10 मम प्राप्स्यति नित्यश, ब2 दे2 ते1 मम लोक च (ब2 स) गच्छति

१४° पञ्चकुण्डेति विख्यात तस्मिन् क्षेत्रे पर मम ।
धारा पतन्ति पञ्चात्र हिमकूटसमन्विता ॥४३
तत्राभिषेक कुर्वीत पञ्चकालोषितो नर ।
स तत्र गच्छते भूमि यत्र पञ्चशिखो मुनि ॥४४
अथात्र मुञ्चते प्राणान् क्षेत्रे पञ्चशिखे मम ।
पञ्चचूड समुत्सृज्य स याति परमा गतिम् ॥४५
सप्तर्षिकुण्ड विख्यात गुह्य क्षेत्र पर मम ।
सप्त धारा पतन्त्यत्र हिमपर्वतसश्रिता ॥४६
तत्राभिषेक कुर्वीत सप्तभक्तोषितो नर ।
मोदते ऋषिलोकेषु ऋषिकन्याभिसवृत ॥४७
अथात्र मुञ्चते प्राणान् रागलोभविवर्जित ।
सप्तर्षीन् स समुत्सृज्य मोदते मम सस्थित ॥४८
शरभङ्गस्य कुण्ड वै क्षेत्रे गुह्य परे मम ।
तत्र धारा पतत्येका शरभङ्गाश्रिता नदी ॥४९
स्नान ये कुर्वते तत्र षष्ठकालोषिता नरा ।
मोदते शरभङ्गेषु ऋषिकन्यासमाकुले ॥५०
अथात्र मुञ्चते प्राणान् सर्वसङ्गविवर्जित ।
शरभङ्ग समुत्सृज्य मम लोके स मोदते ॥५१

४३ –a) ब1 2 दे10 कुण्ड (ब1 कुण्ड) पवतविख्यात, दे1 3 4 पञ्चचूडस्य कुण्डेति –b) ब1 2 दे10 हिमपवतनि सृत (दे10 °सश्रित) –c) ब1 2 दे10 यत्र धारा पतत्येका, दे5-9 11 मुवे पञ्चधारा पतन्त्यत्र –d) ब1 2 दे10 स्थला (ब2 ष्फा) मुगल मन्निभा, दे5 9 11 मुवे हिमकूटविनि सृता (दे6 11 °विनिस्मता)

४४ –b) ब2 दे10 अष्ट° (→पञ्च°) –c) मुवे गच्छेद्र (–गच्छते), दे1 9 11 मुवे ते1 भूमे (→भूमि) –d) दे10 यत्र पञ्चशिखा मम

b चरणानन्तर ब1 2 दे10 अधिकम—
*पवत पश्यते दिव्य तेन साध च मोदते ।
अथात्र मुञ्चन प्राणान लाभालाभविवर्जित ।
पतन ऋषिमु सज्य मम लोके प्रपद्यत ।
पञ्चशिखस्य वर्षे च तस्मिन क्षेत्र पर मम
धारा पतन्ति पञ्चात्र हिमकूटाद् विनि सृता ।
तत्राभिषेक कुर्वीत पञ्चकालोषितो नर ।

[–1 दे10 ○ –2 ब2 °विवर्जिता (→°विवर्जित) – दे10 भूमिम (→ऋषिम्) –4 ब2 अस्ति पचशिख कुण्ड, दे10 पञ्चरूढस्य वर्षेण (→पञ्चशूलस्य वर्षे च) –5 दे10 हिमकूट–(→हिमकूटाद्) ]

४५ दे10 cd ○ –b) दे3 पञ्चशिरो, दे4 पचशिर, ते1 पञ्चशिखो (→पञ्चशिखे), ब1 2 दे10 क्षेत्रे (दे10 °त्र) पञ्च-शिखस्य च, दे5-9 11 मुवे मम भक्तो (दे6 7 क्षेत्रे) जितेन्द्रिय –c) ब1 पञ्चकुण्ड, ब2 पञ्चशिष–, दे6 पञ्चकुण्डे (→पञ्चचूड)

अत पर ब2 अधिकम—
*स्नान तत्र प्रकुर्वीत सप्तभक्तोषितो नर ।

४६ ब2 ○ दे5 8 cd ○ –a) दे10 वार्षिक (→सप्तर्षि–) –b) दे2 गुह्यक्षेत्रे, दे5 8 9 11 मुवे तस्मिन क्षेत्रे, दे6 7 तत्र क्षेत्रे, दे10 क्षेत्र गुह्य– (→गुह्य क्षेत्र) –d) ब1 दे2 9 ते1 हिमपवतसस्थिता (दे2 ते1 °त) दे 7 11 मुवे हिम व पवतस्थिता

४७ ब2 दे5 8 ab ○ –a) ब1 दे10 स्नान तत्र प्रकुर्वीत –b) दे9 सप्तरात्रौ (→सप्तभक्तो–) –c) दे1 6 °लाके तु (→°लोकेषु)

अत पर दे2 अधिकम—
तत्राभिषेक कुर्वीत सप्तभक्तोषितो नर । ( =४७ab)

४८ दे7 cd ○ –b) ब1 2 दे10 सर्वसङ्गविवर्जित दे6 मम क्षेत्रे जितेन्द्रिय , दे7 ब्रह्मलोक प्रयास्यसि –c) दे10 सप्तर्षीन्तत्र उत्सृज्य –cd) ब2 सप्तर्षिलोकमुत्सृज्य मम लोक स गच्छति, दे6 ऋषिकुण्ड परित्यज्य मम लोके महीयते

४९ ब2 cd ○ –a) ब1 दे2-4 10 11 ते1 कुण्डे वै, दे1 कुण्डेति, दे5 8 9 कुण्डो वै (→कुण्ड वै), दे6 7 शरभङ्गेति विख्यात –b) ब1 2 दे10 क्षत्र गुह्य, दे6 7 गुह्यक्षेत्र, दे8 9 11 क्षेत्रे गुह्ये (→क्षेत्रे गुह्य ), ब1 2 दे1-4 6 7 10 ते1 पर (→परे) –d) मुवे शरभङ्गश्रिता नदी

५० –a) ब1 2 स्नान यस्तु प्रकुर्वीत, दे2 ते1 स्नान ये तत्र कुवन्ति, दे5-11 मुवे स्नान यस्तत्र कुर्वीत –b) दे4 षष्ठी–, दे6 षष्ठि (→षष्ठ–), दे6 7 9 11 –भक्तो–(→–कालो–), ब1 2 दे2 3 5-11 मवे ते1 –षितो (→–षिता), ब1 2 दे2 5-11 मुवे ते1 नर (→नरा ) –c) दे1 4 शरभङ्गे तु, दे5-9 11 मुवे तस्य लोकेषु (दे6 7 तु) (→शरभङ्गेषु) –d) दे1 3 4 °समाकुला (दे4 °ल ) (→°समाकुले), दे5 8 9 11 मुवे ऋषिकन्याप्रमोदित , दे6 शरभङ्गे जितेन्द्रिय , दे7 मुनिकन्याभिसवृत

५१ ब2 दे6 ab ○, दे7 cd ○ –b) दे7 मम लोक च गच्छति –c) दे6 ऋषिस्थान परित्यज्य –d) ब1 2 दे 10 मम लोकेषु मोदते, दे1 3 4 मम लोके प्रमोदते, दे5,6 8 9 11 मुवे मम लोके महीयते

कुण्डमग्निसर नाम सवमायाभिसवृतम् ।
भूमि भित्वा जल तत्र तिष्ठते च वरानने ।।५२
तत्र स्नान प्रकुर्वीत षष्ठकालोषितो नर ।
गत्वा चाङ्गिरस लोक मोदते स मया सह ।।५३
कुण्ड बृहस्पतेर्भूमि सर्ववेदोदकाश्रितम् ।
धारा चैका पतत्यत्र हिमकूटसमाश्रिता ।।५४
तत्र स्नान तु कुर्वीत षष्ठकालोषितो नर ।
गत्वा बृहस्पतेर्लोक मुनिकन्याभिर्मोदते ।।५५
अथात्र मुञ्चते प्राणान् मम लोक समाश्रित ।
सोऽपि याति परा सिद्धि समुत्सृज्य बृहस्पतिम् ।।५६

वैश्वानरस्य कुण्डेति गुह्य क्षेत्र पर मम ।
धाराश्चैकादशस्तत्र पतन्ति हिमसाह्वयात् ।।५७
तत्राभिषेक कुर्वीत दशरात्रोषितो नर ।
स वैश्वानरलोकेषु मोदते नात्र सशय ।।५८
अथात्र मुञ्चते प्राणान् विशरात्रोषितो नर ।
पूज्यते मम लोकेषु एवमेतन्न सशय ।।५९
कार्त्तिकेयस्य कुण्डेति गुह्य क्षेत्र पर मम ।
यत्र पञ्चदशा धारा पतन्ति हिमपर्वतात् ।। ६०
तत्र स्नान प्रकुर्वीत षष्ठकालोषितो नर ।
कुमार पश्यते व्यक्त षण्मुख शुभदर्शनम् ।। ६१ वे १५१ ६४

---

५२ –a) बा1 2 दे10 आङ्गिरस, दे1 5 8 9 अग्निशर, दे6 7 मुवे अग्निसरो (→अग्निसर) –b) बा1 2 दे10 सवमाया समन्वित (दे10 °त ), दे1 सवमायाभिसेवित, दे6 कुण्डमायाति सवृत –c) दे1 3 4 भूमे (→भूमि), दे6 दत्त्वा, मुवे नीत्वा (→भित्त्वा) –d) दे1 4 ते1 तिष्ठते स, मुवे तिष्ठत्येव (→ तिष्ठते च), बा1 2 दे10 वराङ्गणे (बा1 2°ने) (→वरानने)

५३ –a) बा1 2 दे10 अथात्र कुरुते स्नान –b) दे 11 अष्ठ°, मुवे चाष्ट° (→षष्ट°) –c) दे1 गत्वा वागिर सो, दे5 8 गच्छ त्यङ्गिरसो, दे6 7 11 मुवे गच्छत्यङ्गिरसो, दे9 गच्छ न्तेङ्गिरसो (→गत्वा चाङ्गिरस), दे7 लोके (→लोक) –d) बा1 2 मुनिकन्यासु मोदते, दे5-9 11मुवे सुखभागी न सशय

अत पर बा1 दे5-9 11 मुवे अधिकम—
*अथात्र मुञ्चते प्राणान् मम कमपरायण ।
अग्निलोक समुत्सृज्य मम लोक स गच्छति ।

[–1 बा1 मम भक्तिव्यवस्थित , दे6 कुण्डे चाङ्गिरसो धरे, दे7 कुण्डे****** (→मम कमपरायण ) –2 बा1 भुक्त्वा चाङ्गिरस लोक मोदते च मया सह, दे6 त्यक्त्वा चाङ्गिरसो लोक मम लोक प्रपद्यते, दे7********** लोकाय गच्छति ]

५४ –a) दे5 9 11 मुवे ते1 भूमे, दे10 लोक, + भूमि(→ भूमि) –b) बा1 कम वेदोदक स्मृत , बा2 कम वेदोदक स्मत, दे1 3 4 सर्वे वेदोदक श्रित , दे10 कम वेदोदकस्मत –c) बा1 दे10 धारा चषा, दे1,3 4 एका (दे4 एक) धारा (→धारा चैका) –d) दे2 ते1 हिमाङ्कुरसमाश्रिता

५५ –a) दे1-4 ते1 तु कत्तव्य, दे6 7 मुवे प्रकुर्वीत (→ तु कुर्वीत) –b) दे3 7 नरा (→नर ), बा1 2दे10 अष्टभक्तोषितो नर –c) दे7 गच्छेद् (→गत्वा), दे6 वैश्वानरेषु लोकेषु –d) बा1.2 दे10 मुनिकन्यासु मोदते, दे1 4 ते1 मुनिकन्याभि-मोदते दे5 8 9 11 मुवे मुनिकन्याभिमोदित , दे6 मोदते नात्र सशय , दे7 मुनिकन्याभि सवृत

५६ द7 cd ○ –b) बा1 दे10 क्षिपेत पक्षोपवासिन , बा2 कृत्वा कम सुदुष्कर, दे1 3 4 मासोपोष्य समन्वित , दे2 ते1 मम लोक(ते1 कम)समन्वित , दे6 क्षेत्रे वैश्वानरस्य च, दे7 स्वगलोके महीयते, दे8 9 11 मम लोकसमाश्रित –cd) दे6 तल्लोक च परित्यज्य मम लोक च मोदते

५७ दे6 ○, बा2 दे1 3 4 cd ○ –a) मुवे कुण्ड तु (→कुण्डेति), दे9 वैश्वानरेपु लोकेषु –b) बा1 दे° 4 9 गुह्य (दे4 गुहच) क्षेत्रे (→गुहच क्षेत्र) –c) बा1 धारा चैकादश तत्र, दे5 7-9 11 मुवे धारा चैकापतत्यत्र –d) दे5 7-11 मुवे दश्यत हिमसाह्वयात (मुवे °सश्रयात)

५८ दे1 3 4 6 ○, बा1 cd ○ –a) बा1 2 दे10 ते1 तत्र स्नान प्र(ते1 तु)कुर्वीत –b) बा1 2 दे10 दशकालो°, दे5 8 9 11 मुवे षष्ठभक्तो°, दे7 षष्टकालो°(→दशरात्रो°) –c) दे5 7-11 मुवे वैश्वानरेषु लोकेषु –d) बा2 जायते (→मोदते)

५८ b चरणान तर बा1 मुवे अधिकम—
गत्वा वृहस्पतेर्लोक मुनिकन्याभिमोहित । (= ५५cd)
[बा1 मुनिकन्यासु मोदते (→मुनिकन्याभिमोहित ) ]

५९ दे1 3 4 6 8 ○, दे7 bc ○ –b) दे5 9 11 मुवे मम कमपरायण –c) दे5 9 11 मुवे वश्वानर समुत्सृज्य –d) दे5 9 11 मुवे मम लोक स (दे7 च) गच्छति

६० दे10 ○, दे1 3 4 ab ○ –a) मुवे कुण्ड तु (→कुण्डेति) –b) दे5 9 11 क्षेत्रे, दे6 क्षेत्र– (→क्षेत्र), दे6 7 वर (→पर) –c) बा1 तत्र (→यत्र), दे6 7 धारा यत्र पचदश

६१ दे10 ○ –a) दे1-4 6 ते1 तु कुर्वीत (→प्रकुर्वीत) –c) मुवे पश्यति (→पश्यते), दे6 7 तत्र (→व्यक्त), दे2 कुमार पशुपतेव्यक्त

६५ अथात्र मुञ्चते प्राणान् कृत्वा चान्द्रायण शुचि ।
कार्त्तिकेय समुत्सृज्य मोदते मम मण्डले ॥ ६२
उमाकुण्डेति विख्यात तस्मिन् क्षेत्रे पर मम ।
सा गौरी यत्र चोत्पन्ना सर्वदेववराङ्गना ॥ ६३
तत्र स्नान तु कुर्वीत दशरात्रोषितो नर ।
गौरी च पश्यते देवी तस्या लोके च मोदते । ६४
अथ प्राणान् प्रमुच्येत दशरात्रोषितो नर ।
उमालोक समुत्सृज्य मम लोक स गच्छति ॥ ६५
महेश्वरस्य कुण्डेति यत्र चोद्वाहिता उमा ।
कादम्बचक्रवाकैश्च हससारससेवितम् ॥ ६६
तिस्रो धारा पतन्त्यत्र हिमपर्वतसश्रिता ।
स्थूलाश्च रमणीयाश्च न ह्रस्वा विमलास्तथा ॥ ६७
तत्र स्नान तु कुर्वीत द्वादशाहोषितो नर ।
मोदते रुद्रलोकेषु रुद्रकन्याभिरावृत ॥ ६८
अथात्र मुञ्चते प्राणान् कृत्वा कर्म सुदुष्करम् ।
स रुद्रलोकमुत्सृज्य मम लोकाय गच्छति ॥ ६९
प्रख्यात ब्रह्मकुण्डेति वेदा यत्र समुत्थिता ।
चतुरो वेदधारास्ता पतन्ति हिमसाह्वयात् ॥ ७०
तत पूर्वेण पार्श्वेन सामधारा पतेत् तत ।
उच्चा च रमणीया च पाण्डुरा विमलोदका ॥ ७१
पुनश्चोत्तरपार्श्वेन सुवर्णसदृशोपमा ।
ऋग्वेद पतते धारा प्रसन्नविमलोदका ॥ ७२

६२ दे7 bc ○, दे10 a ○ –b) ब1 2 द1 शुभ (→शुचि), दे6 कार्त्तिके यस्य क्षेत्रके –c) दे6 तल्लोक च परित्यज्य –d) ब1 2 दे10 मम लोक च (ब1 स) गच्छति, दे6 विष्णुलोक स गच्छति, दे7 मम लोकाय गच्छति

६३ –a) मुवे उमाकुण्डमिति ख्यात –b) दे6 7 वर (→पर) –d) दे5-9 11 मुवे महादेव° (→सर्वदेव°), ब1 2 दे10 सा च देवी सरस्वती

६४ ब1दे10 cd○ –c) दे5 8 9 11 स (→च), दे6 7 गौरी पश्यति देवी (दे7 लोके) स, मुवे गौरी देवी स पश्येत्तु –d) दे1 3 7 तस्य, ते1 तस्या (→तस्या)

६५ ब1 दे10 ab ○, दे7 bc ○ –a) दे1-4 ते1 प्रमुञ्चन्ति, मुवे प्रमुञ्चेत (→प्रमुच्येत), दे6 7 अथात्र मुञ्चते प्राणान –b) ब2 कृत्वा कर्मसुदुष्कर, दे6 उमाकुण्डे च सुन्दरि –c) दे6 तल्लोकस्य फल भुक्त्वा –d) दे1 5 8 9 11 मुवे मम लोक प्रपद्यते, दे6 मम लोके महीयते, दे7 मम लोके च मोदते

६६ –a) ब1 महेश्वरेति (→महेश्वरस्य), ब2 कुण्ड च, दे5 9 11 मुवे वै कुण्ड (दे8 कुण्डे) (→कुण्डेति) –b) ब1 2 मया (→उमा), दे10 यत्र चोद्वाहितो उमा –c) ब1 कुररैश्, ब2 कुबेरैश् दे5 9 11 मुवे कादम्बैश (→कादम्ब–) –d) ब2 दे8 °सेविते, दे4 °सेवित, दे5 °सेवितु(→°सेवित) –cd) दे10 कुरुते चक्र ससार चक्रससेवितम्**

६७ –a) ब1 2 तत्र, दे1 3 4 10 ते1 त्रयो (→तिस्रो) –b) दे2ते1 °सस्थिता, दे10 °सश्रिता(→°सश्रिता),दे5 7-9 11 मुवे हिमवत्पर्वताश्रिता, दे8 हिमवर्षमहाश्रिता –c)दे2ते1स्थूलश्च (→स्थूलाश्च), दे2 ते1 रमणीयश्च (→रमणीयाश्च) –d) ब1 2 दे10 न ह्रस्वा दे10 °छा)विपुलास्तथा, दे5-9 11 मुवे न ह्रस्वाश्चाति निर्मला, ते1 युत पुष्पितपादपै

६८ –a) दे स्थान (→स्नान), ब1 दे7 प्रकुर्वीत (→तु कुर्वीत) –c) ब1 मोदति (→मोदते), ब1दे1 3 4 °लाके तु (→°लाकेषु) –d) ब1 2 दे10 प्रमथ सहितस्तथा (ब1°तदा)

६९ दे7 bc ○ –a) ब1 2 दे10 अथ प्राणान प्रमुच्येत –b) दे6 रुद्रलोके जितेन्द्रिय –c) ब1 2 दे5 8-11 मुवे रुद्रलोक समुत्सृज्य, दे6 रुद्रलोक परित्यज्य –d) ब1 2 लोक स, दे2 ते1 लोक तु, दे5 8 9 11 मुवे लोक च(→लोकाय)दे6 मम सारूप्य माप्नुयात, दे10 मम लोक समेष्यति

७० –a) दे1-3 4 विख्यात, दे7 प्रख्याते (→प्रख्यात), दे2 °कुण्डे तु, मुवे °कुण्ड तु (→°कुण्डेति), ब1 2 ख्यात ब्राह्मण कुण्डेति, दे10 विमना गणकुण्डेति –b) दे2 वेदी (→वेदा) –c) दे6 मुवे चतस्रो (→चतुरो), दे5 9 11 मुवे °धारास्तु (→°धारास्ता) –d) ब1 पतन्ति हिमवाह्वय, ब2 दे10 पतन्ति हिमसाह्वय, दे5 7-9 11 मुवे पतन्ति च हिमालयात(दे7 °चलात), दे6 पतन्ति महिमाचल

७१ ब1 2 दे10 bcd ○ –a) ब1 2 दे10 अथ (→तत) –b) दे2 ते1 समधारा, दे3-5 7-9 11 मुवे समा धारा, दे6 समाराध (→सामधारा), दे1 पतेत स, दे5-7 9 11 मुवे पतेच्छुभा, दे8 भवेच्छुभा (→पतेत्तत) –c) दे6 7 उष्णा, ते1 शुभा (→उच्चा) –d) दे5 9 11 मुवे पाण्डुरोदकशोभिता

७२ ब1 2 दे10 a ○ –a) दे1 3 4 °पार्श्वे तु (→°पार्श्वेन), दे5-9 11 मुवे पुनरस्योत्तरे पार्श्वे –b) दे7 स्ववर्ण° (→सुवर्ण°) –c) दे5 8 9 11 मुवे ऋग्वेद, दे7 ऋग्वेदा (→ऋग्वेद), ब1 2 ऋग्वेदस्य एते धारा, दे10 ऋग्वेदस्य पतेद्धारा, दे11 ऋग्वेद पततोद्धारा –d) मुवे प्रसन्ना (→प्रसन्न–), ब1 2 °सलिलोदका, दे1-3 ते1 °विमलोदका (→°विमलोदका)

अथ पश्चिमपार्श्वेन यजुर्वेदेन मण्डिता ।
अथ दक्षिणपार्श्वेन अथर्वणसमन्विता ।। ७३
एका धारा पतत्यत्र इन्द्रगोपकसन्निभा ।
यस्तत्र कुरुते स्नान सप्तरात्रोषितो नर ।
ब्रह्मलोक समासाद्य ब्रह्मणा सह मोदते ।। ७४
अथात्र मुञ्चते प्राणान् अहङ्कारविवर्जित ।
ब्रह्मलोक परित्यज्य मम लोक प्रपद्यते ।। ७५
गुह्याख्याने महाभागे क्षेत्रे लोहार्गले मम ।
सिद्धिकामेन मर्त्येन गन्तव्य नात्र सशय ।। ७६
समन्तात् पञ्चविशत्तु योजनानि वरानने ।
न तस्य कर्म विद्येत स एव मयि सस्थित ।।७७
आख्यानाना महाख्यान धर्माणा धर्ममुत्तमम् ।
पवित्राणा पवित्र तु न देय यस्य कस्य चित् ।।७८
ये पठन्ति महाभागे शृण्वन्ति मत्पथे स्थिता ।
कुलानि तारितास्तैस्तु उभयोरपि विशति ।।७९
एतन्मरणकाले तु न कदाचित् तु विस्मरेत् ।
यदीच्छेत् परमा सिद्धि सर्वससारमोक्षणम् ।।८०
एतत् ते कथित भद्रे लोहार्गलनिवासिने । वे १५१ ८४

७३ द1 4 cd ○, दे3 c ○ –b) ब1 2 दे10 यजुर्वेदस्य पाण्डुरा, दे2 ते1 यजुर्वेदेन पण्डिता, दे5-9 11 मुवे यजुर्वेदेन सयुता –c) ब1 2 दक्षिणेन तु पार्श्वेन, दे2 ते1 तत्रो (ते1 ततो) परि तु कस्यापि –d) मुवे चाथव° (→अथव°), ब1 2 दे10 सामवेदस्य (ब2 सामवेदेन) सस्थिता, दे2 ते1 अथर्वेण तु पण्डिता

७३ श्लोकस्य b चरणानन्तर ब1 2 दे6 10 अधिकम—
एकधारा पतत्यत्र स्फटिकस्य समप्रभा ।

७३ श्लोकानन्तर दे2 ते1 अधिकम—
पश्चिमेन तु पार्श्वेन सामवेदेन पण्डिता ।

७४ –a) दे1 3 4 ते1 एक– (→एका), दे9 धारो (→धारा), दे1 3 4 6 10 पतन्त्यत्र (→पतत्यत्र) –b) दे6 7 शक्र° (→इन्द्र°), ब1 2 दे10 इन्द्रनीलसमप्रभा, दे3 इन्द्राव्यापकसन्निभा –c) दे10 यद्यत्र (→यस्तत्र) –d) ब1 2 दे10 अष्ट° (→सप्त°) –e) दे6 °लोके (→°लोक), दे1 3 समास्थाय, दे4 समाछाय (→समासाद्य), ब1 2 दे10 ब्रह्माण (ब2 ब्राह्मण) पश्यते तत्र –f) ब1 2 लोके मोदति तस्य वै, दे10 लोकमादाय तस्यवित

७४ श्लोकस्य b चरणानतर ब1 2 दे10 अधिकम्—
अधरोत्तरपार्श्वेन अथववेदसस्थिता । (=७३cd)
[–1 दे10 अथववेदेन सस्थिता (→अथववेदसस्थिता) ]

७५ –a) ब2 मुञ्चति (→मुञ्चते) –b) दे6 7 मम कमपरायण –c) दे1 3 4 प्रपद्येत, ते1 समुत्सज्य (–परित्यज्य) –d) ब1 2 मम लोक स गच्छति, दे1 3 4 पापात्माऽपि वसुन्धरे, दे6 7 मम लोकाय गच्छति, दे10 मम लोक च यास्यति

७६ दे10 d ○ –a) ब1 दे1 4 गुह्यमेतन्महाभागे, ब2 गुह्यमेते महाभागे, दे6 गुह्याख्यानमहास्थाने, दे10 गुह्य एते महाभागे, ते1 गुह्याख्यानि महाभागे –b) ब1 2 लोहाकुले, दे6 लोहागणे (→लोहागले) –c) दे10 ****न मर्त्येन

७७ –a) ब1 2 दे1 3 4 8 पञ्चविंश तु मुवे पञ्च विशति (→पचविंशत्तु) –d) ब1 2 दे10 एष ते मयि सस्थित दे5 9 मुवे स एवमपि सस्थित, दे6 7 यदि तत्रैव सस्थित

७७ श्लोकात्पर ब1 2 दे10 अधिकम—
*ततश्चान्वेषणीयास्ते यदीच्छेत्परमा गतिम ।
एतन्न जानते कश्चिद गुह्य लोहागल मम ।
मम शास्त्रपरायण्या कमवाराहसस्थित ।
[–2 ब1 2 लोहाकुल (→लोहागल) –3 ब1 कम° (→शास्त्र°) ]

७८ –b) दे5 9 11 मुवे धर्माणा धम उत्तम –c) दे6 7 च (→तु) –d) ब1 2 दे10 द्युतीना च महाद्युति

७८ श्लोकात पर ब1 2 दे10 अधिकम—
*लाभाना परमो लाभ क्रियाना च महाक्रिया ।
तेजाना परम तेज कारणाना च कारणम ।
न चैतत्पिशुने दद्यान्न मूर्खाय कदाचन ।
नापि चाश्रद्दधानाय न च शास्त्राथदूषके ।
पण्डितायैव दातव्य यश्च जानाति सेवितुम् ।
मा पठेद गोघ्नमध्ये वै पापकर्माय मा पठेद ।
पठेद् भागवता मध्ये ये च शास्त्राणि जानते ।
[–2 दे10 यज्ञाना परमो यज्ञ (→तेजाना परम तेज) ]

७९ –a) दे1 3 4 शृण्वन्ति (→पठन्ति) –b) दे1 पठन्ति, दे3 पठन्ते, दे4 पठेत (→शृण्वन्ति), दे4 6 7 सत्पथे (→मत्पथे), ब1 2 दे10 शृण्वन्ति च यथेप्सिता, मुवे स्थिता शृण्वन्ति मत्पथे –c) ब1 2 तेन (→तैस्तु), दे2 ते1 कुलानि तारितो यस्तु, दे5-9 11 मुवे तारितानि कुलानि स्युर –d) ब1 2 उभयोरपि वशके, दे5-9 11 मुवे उभयत्र दशापि (दे6 समानि) च

८० –b) दे1 3 4 कदाचिच्च न विस्मरेत् –c) ब2 दे10 11 ते1 यदिच्छेत (→यदीच्छेत्) –d) ब1 2 घोर (→सव-), दे4 °मोक्षणा, मुवे °मोक्षणी (→°मोक्षण)

१५१.८५ माहात्म्यं पद्मपत्राक्षि गुह्याद् गुह्यं च महौजसम्। मङ्गल्यं च पवित्रं च मम भक्तसुखावहम्॥८१

॥ इति श्रीवराहपुराणे भगवच्छास्त्रे एकोनपञ्चाशदधिकशततमोऽध्यायः ॥ १४९ ॥

# १५०

सूत उवाच ।*
श्रुत्वा देवस्य माहात्म्यं लोहार्गलनिवासिनः ।
त्रैलोक्यनाथाधिपतेर्विस्मयं परमं गता ॥१
धरण्युवाच ।*
पद्मपत्रविशालाक्ष लोकनाथ जगत्पते ।
त्वत्प्रसादाच्च देवेश श्रुतं शास्त्रं महोदयम् ॥२
तव शिष्या च दासी च त्वामहं शरणं गता ।
जगद्धातर्जगद्योने जगत्प्रभुरतन्द्रित ॥३
तव संभावनाद् देव जाताऽस्मि कनकोज्ज्वला ।
अलङ्कृता च शस्ता च सर्वशास्त्रेण मानद ॥४

८१ ब१ २ ef ○ –a) ब१ एतद्धे (→एतत्ते) –b) दे१ °निवासिनो, दे३ ४ °निवासिनि (→°निवासिने), दे5-9 11 मुवे लोहागलमनुत्तम(दे5 8 °मे) –d) दे1 4 10तें1 पञ्च, दे5 7 9 11मुवे यच्च (→यञ्च) –cd) ब1 2 एष लोहाकुल गुह्य क्षेत्र चव महौजसम –e) तें1 माङ्गल्य (→मङ्गल्य) –f) दे3 भक्ति° (→भक्त°)

**पुष्पिका**—

**पुराणनाम**—दे6 ○, ब1 2 इति वराहपुराणे भगवच्छास्त्रे, दे1 3 8 10 11 इत्यादि वा(दे3 4 श्रीवा)राहपुराणे भगवच्छास्त्रे, दे7 इत्यादि वाराहपुराणे, दे9 इत्यादि वा०, मुवे इति श्रीवराहपुराणे भगवच्छास्त्रे, तें1 इत्यादि महापुराणे वाराहे भगवच्छास्त्रे **अध्यायनाम**—ब1 लोहाकुलवणन नामा, ब2 लोहाकुलवणनो नामाध्याय, दे1-3 5 लोहागलमाहात्म्यवणनो नाम, दे4 लोहागल माहात्म्ये, दे6 लोहागलमाहात्म्य, दे7 लोहागलमाहात्म्य नामाध्याय, दे8 9 11 लोहागलमाहात्म्यवणनो नाम अध्याय, दे10 लोहागल-माहात्म्य वर्णनो नाम, मुवे लोहागलमाहात्म्य नाम, तें1 लोहागल माहात्म्यवणन नाम **अध्यायसख्या**—ब1 2 दे1-7 9-11 ○, दे8 ॥५४॥, मुवे एकपञ्चाशदधिकशततमोऽध्याय ॥ १५१ ॥, तें1 षष्ट्युत्तरशततमोऽध्याय

**१५०**

* ब1 2 ○, ब3 श्रीसूत उवाच, दे1 9 सूत उ०

१ –a) ब1 तु देवी (→देवस्य) –c) दे6 °पत्ये (→°पतेर्), ब1 धात्री तु सवलोकाना –d) दे2 10 तें1 गता, दे6 तथा (→गता)

१ श्लोकानन्तर ब1 अधिकम्—

*अस्य शास्त्रप्रभावेण जातास्मि कनकोज्ज्वला ।
अल ते बहुशक्ता च तव शास्त्रेण माधव ।
पूर्णो मृतेन वै देव तव वाक्यप्रचोदिता ।

१ श्लोकानन्तर दे6 7 अधिकम—

*धरणी प्रत्युवाचेद श्रीविष्णु परमेश्वरम ।

* ब1 ○, दे1 6 धरणी उवाच, दे3 धरिण्युवाच, दे4 धरिण्यु उवाच

२ दे4 ○ –b) ब1 2 जनादन (ब1 °न) (→जगत्पते) –c) ब1 2 तव देव प्रसादाच्च –d) दे1 3 शीघ्र (→शास्त्र), ब1 2 दे5-9 11 मुवे महौजसम् (→महोदयम्)

३ ब1 2 वे3 4 cd ○ –a) दे3 4 दासाच्च (→दासी च), ब1 2 तव शिष्य (ब2 °ष्या) स्तथा श्रेय –b) ब1 विस्मय परमङ्गता –c) दे2 10 तें1 °धातुर् (→°धातर्), दे5 8 9 मुवे जगद्धाता जगज्ज्योतिर (दे8 9 °ज्जेता), दे11 जगद्धाता जगद्यन –d) दे1 जगत्प्रभो नमोस्तु ते, दे6 7 जगत्प्रभुमहेश्वर

३ श्लोकस्य b चरणान्तर ब1 अधिकम्—

*त्व वै सवस्य लोकस्य देवनाथ प्रतिश्रुत ।

४ ब1 दे3 4 ○, ब2 cd ○ –a) दे2 तत्तत्, तें1 तत्वत (→तव), ब2 अस्य शास्त्रप्रभावेण –c) ब3 दे1 शास्त्रा च (→शस्ता च) –d) ब3 दे1 तव (→सर्व–), दे2 8 9 मानद, दे11 मानदा (→मानद)

४ श्लोकस्य b चरणानन्तर ब2 अधिकम्—

*एवन्तु परम गुह्य ममैव हृदि वत्तते ।
सानन्दूरात् पर श्रेष्ठ अस्ति गुह्य पर क्वचित् ।
अचलधराधर लोकनाथ गरुडारोहने स्वय समर्थ ।
स्वय नियमो हि विधानवृत्तो नाम जगद्धारण कारण उपेन्द्र ।
ततो महीवच श्रुत्वा लोकनाथो जनादन । [5]
उवाच मधुर वाक्य सर्वभागवत प्रियम् ।

जगद्धातुर्जगच्छास्त्रकृतेनाथ　परिश्रम ।
त्वदायत्त जगत्सर्व यच्च किञ्चित् प्रवर्त्तते ।।५
इति मत्वा च मे देव साह्लादो हृदि वर्त्तसे ।
लोहार्गलात् पर श्रेष्ठ गुह्य परमदुर्लभम् ।।६
तीर्थं तद् वद कल्याण तीर्थानामुत्तमोत्तमम् ।
यदस्ति दुर्लभ तीर्थं तत् त्व कथय मे प्रभो ।।७
श्रीवराह उवाच ।❀
न विद्यने च पाताले नान्तरिक्षे न मानुषे ।
समत्व मथुराया हि प्रिय मम वसुधरे ।।८
सूत उवाच ।❀
तच्छ्रुत्वा वचन तस्य प्रणम्य शिरसा तदा ।
पुण्याना परम पुण्य पृथ्वी वचनमब्रवीत् ।।९
पृथिव्युवाच ।❀
पुष्कर नैमिष चैव पुरी वाराणसी तथा ।
एतान् हित्वा महाभाग मथुरा कि प्रशससि ।।१०
श्रीवराह उवाच ।❀
शृणु कात्स्न्र्येन वसुधे कथ्यमान मयाऽनघे ।
मथुरेति च विख्यातमस्ति क्षेत्र पर मम ।
सुरम्या च सुशस्ता च जन्मभूमि प्रिया मम ।।११
शृणु देवि यथा स्तौमि मथुरा पापहारिणीम् ।
तत्र वासी नरो याति मोक्ष नास्त्यत्र सशय ।।१२
महामाघ्या प्रयागे तु यत्फल लभते नर ।　वे १५२ १३

---

५　ब2 ○ ब1दे3 4 ab ○ –a) दे6 7 शास्त्रे (→शास्त्र–) –b) दे5-9 11 मुवे –कृतेन हि (→–कृतेनाथ) –ab) ब3दे1 10 शास्त्रस्यास्य कृते नाथ जगत(ब3 नास्ति) नाथ परिश्रम –c) ब1दे11 मुवे त्वय्यायत्त, ब3 त्वया सव, दे2 त्वदादत्त, दे5 7 9 त्वया यत्त दे6 त्वया यत्न, दे10ते1 त्वया दत्त (→त्वदायत्त) –d) ब1 यच्चाङ्ग यच्च ते गति , दे7 यच्च******

६　ब2 ○, दे7 abc ○, दे6 ab ○ –a) दे1 गत्वा, दे5 8 9 11 कृत्वा (→मत्वा) ते1 देवी (→देव) ब1 एकन्तु परम गुह्य –b) ब1 ममाय, मुवे त्वाह्लादो (→साह्लादो) ब3दे1 3 4 10 यदि (→हृदि), ब1 दे3 9 मुवे वत्तते (→वत्तसे) –c) दे10 **(→श्रेष्ठ) –d) ब1 अस्ति गुह्य पर क्वचित, दे10 ****म दुलभ

६ श्लोकानन्तर ब1 अधिकम्—
*अचलधराधरलोकनाथ गरुडनाथो रोहणे स्वय समथ ।
अय नियमो हि विधानवृत्तो नाम जगद्धारणकारण उपेन्द्र ।
ततो महीवच श्रुत्वा लोकनाथो जनादन ।
उवाच मधुर वाक्य सवभागवतप्रियम् ।

७　ब1 2 ○, दे7 cd ○ –a) दे3 8 कल्याण–, दे4 कल्याणि (→कल्याण) –cd) दे6 क्षेत्राणा श्रवणे नाथ पर कौतूहल हि मे

❀ ब1 2दे7 ○, दे1 9 वाराह उ०, ब3दे2 6ते1 वराह उवाच, दे3 4 श्रीवाराह उवाच, दे5 6 8 10 11 वाराह उवाच

८　ब1 2दे7 ○, दे9 cd ○ –ab) दे6 शृणु देवि पर गुह्य सवक्षेत्रोत्तम धरे –c) ब3 स**, मुवे समान (→समत्व) –cd) दे6 मथुरेति च विख्यात निवासो यत्र मे सदा

❀ ब1 3दे1-4 9 10 ते1 ○

९　ब1 2 ○, दे9 ab ○ –b) ते1 तथा (→तदा), ब3 प्रणम्य धरणी तदा, द5-8 11 मुवे प्रिय च वसुधा तदा –c) दे5-8 11 मुवे प्रणम्य शिरसा देवी, दे9*****सा देवी –d) दे5 9 11 मुवे व(दे5 9 11 वा)राह पुनरब्रवीत

❀ ब1 2दे7 ○, ब3 धरण्युवाच, दे1 पृथिवी उ०, दे5 8 9 11 पथ्युवाच, दे6 धरणी उवाच, दे10 पथिव्य उवाच

१०　ब1 2 ○ –a) दे2-4ते1 पुष्करे (→पुष्कर), ब3 नैमिषा, दे3-5 नैमिषे (→नमिष) –b) दे3 4ते1 पुरी (→पुरी) –c) ब3 एता गीत्वा दे2 6ते1 एता हित्वा, दे8 9 11 एता हित्वा, दे10 ऐता हित्वा (→एतान हित्वा), ब3दे4 महाभागे दे2 महाभाग (→महाभाग) –d) ब3 मधुरा सप्रशस मे

❀ ब1 2 ○, ब3दे2 ते1 वराह उवाच, दे1 9 वाराह उ०, दे3 4 श्रीवाराह उवाच, दे5 8 10 11 वाराह उवाच, दे6 वराह

११　–a) ब1 2 मे भूमि (→वसुधे) –b) दे6 °माने (→°मान) –c) दे3 4 विख्याता (→विख्यात) –d) ब1 2 तत क्षेत्र, दे2ते1 नास्ति क्षेत्र, दे5 9 11 मुवे तस्मान्नास्ति (→अस्ति क्षेत्र) –e) ब3 सुरम्याथ, दे2 5-9 11 मुवे ते1 सा रम्या च (→सुरम्या च), ब1 2 प्रशस्ता च, ब3 सुशस्ताथ (→सुशस्ता च) –f) ब1 2 मम प्रिये, दे2ते1 इय मम, दे5-9 11 मुवे तथा मम (→प्रिया मम)

११ श्लोकस्य d चरणानन्तर ब1 2 अधिकम्—
*भविष्यति वरारोहे द्वापरे युगसस्थिते

१२　ब1 2 ○ –a) दे2 ते1 सौम्य (ते1°म्ये) (→स्तौमि) –c) दे2 याति (→याति), दे10 तत्र वाशीनो याति, ते1 तत्र ध्वाशी ससोयान्ति –d)दे1 3 4 नैवात्र, दे8 नास्यत्र (→नास्त्यत्र)

१३　ब1 2दे6 ○, दे7 ab ○ –a) ब3दे2ते1 महाऽमाया, दे3 4 महामयी, दे8 महामार्यां (→महामाघ्या), दे3 4

वै १५२ १८ तत्फल लभते देवि मथुराया दिने दिने ॥१३
[सन्निहत्या च यत्पुण्य राहुग्रस्ते दिवाकरे ।
तत्फल लभते देवि मथुराया दिने दिने] ॥१४
पूर्णे वर्षसहस्रे तु वाराणस्या तु यत्फलम् ।
तत्फल लभते देवि मथुराया क्षणेन हि ॥१५
कार्तिक्या चैव यत्पुण्य पुष्करे तु वसुधरे ।
तत्फल लभते देवि मथुराया दिने दिने ॥१६
मथुरा तु परित्यज्य योऽन्यत्र कुरुते रतिम् ।
मूढो भ्रमति ससारे मोहितो मम मायया ॥१७
य शृणोति वरारोहे माथुर मम मण्डलम् ।
अन्येनोच्चारित शश्वत् सोऽपि पापै प्रमुच्यते ॥१८
पृथिव्या यानि तीर्थानि आसमुद्रसरासि च ।
मथुराया गमिष्यन्ति सुप्ते चैव जनार्दने ॥१९
मथुरामण्डल प्राप्य श्राद्ध कृत्वा यथाविधि ।
तृप्ति यान्तीह पितरो यावत् स्थित्यग्रजन्मन ॥२०
ये वसन्ति महाभागे मथुरामितरे जना ।
तेऽपि यान्ति परा सिद्धि मत्प्रसादान्नसशय ॥२१
कुब्जाम्रके सौकरके मथुराया विशेषत ।
विना साख्येन योगेन मुच्यते नात्र सशय ॥२२
मथुराया महापुर्या ये वसन्ति शुचिव्रता ।
बलिभिक्षाप्रदातारो देवास्ते नरविग्रहा ॥२३
भविष्यामि वरारोहे द्वापरे युगसस्थिते ।
ययातिभूपवशे च क्षत्रिय कुलवर्द्धन ॥२४
भविष्यामि वरारोहे मथुराया न सशय ।

---

प्रयोगे (→प्रयागे) –b) दे 4 तत(→यत), दे10 नरा (→नर ) –d) दे1 2 जितेन्द्रिय , ते1 क्षणेन हि (→दिने दिने)

१४ त्र1-3 दे5-9 11 मुवे ते1 ○, दे4 cd ○ –ab) दे2 10 कार्तिक्या चैव यत्पुण्य पुष्करे तु वसुधरे

१३–१४ श्लोकस्य स्थाने त्र पाठ —
सनिमज्य च यत्पुण्य राहुग्रस्ते दिवाकरे ।
तत्फल लभते देवि मथुराया जितेन्द्रिय ।
कार्तिक्याञ्चैव यत्पुण्य पुष्करे तु वसुन्धरे ।
तत्फल लभते देवि मथुराया दिने दिने ।

१५ ब1 2 दे7 ते1 ○, दे4 ab ○ –a) दे5 8 11 मुवे पूण वष (दे8 °ष) सहस्र तु, दे6 वसत शतवर्षे तु, दे11 पूर्ण वपसहस्रे तु –c) दे1 10 *** (→तत्फल) –d) दे1 क्षणेन वै, दे3 4 न सशय (→क्षणेन हि)

१६ ब1-3 दे1 2 10 ते1 ○, दे6 bc ○ –b) दे7 पुष्करेषु(→पुष्करे तु) –d)दे5-9 11मुवे जितेन्द्रिय (→दिने दिने)

१७ ब1 2 ○ –a) ब3 दे1 3 4 ते1 मथुरा च, दे2 8 मथुराया (→मथुरा तु) –b) दे10 जोन्यतु (→योऽन्यत्र), दे3 4 गति (→रतिम्) –c) ब3 मुक्तो भवति संसारे –d) ब3 मम मायाविमोहित , दे2 ते1 मोहितो मायया मम

१८ ब1 2 ○ –a) दे2 ते1 य, दे7 यत् (→य ) –b) दे4 मथुरं, दे6 मथुरे (→माथुर), दे5 मडले (→मडलम्) –c) ते1 अने° (→अन्ये°), ब3 शाश्वत, दे1 3 4 सोऽपि, दे2 ते1 शसन (→शश्वत), दे10 अन्यो नोच्चरित शास्त्रान् –d) दे1 3 4 सव– (→सोऽपि)

१९ ब1 2 ○ –a) दे1 8 पथिवी, दे9 पथिव्या (→पथिव्या) –b) दे1 9 मुवे आसमुद्र, दे3 4 आसमुद्रा (दे4 °द्रा) (→आसमुद्र–), दे6 7 सरासि सरितस् (दे7 °ता) तथा –c) दे5 8 मथुराया (→मथुराया), दे5 8 9 11 मुव प्रयान्त्यत्र, दे6 7 वसत्यत्र (→गमिष्यन्ति)

२० ब1 2 ○ –a) ब3 दे1 3 4 मथुरा समनुप्राप्य, दे5 8 मथुरामडले प्राप्य –b) दे5 9 सुप्ते चैव जनादन (दे9 °ने) –c) दे5 9 11मुवे प्रयान्ति (→यान्तीह), दे10 तृप्ति जातीह पितरो(?) –d) दे2 ते1 स्थित्वाग्र° (→स्थित्यग्र°)

२१ ब1 2 ○, दे3 4 ab ○

२२ ब1 2 दे1 3 4 ○ –a) दे2 शौकरवे, दे5 8 9 11 मुवे सौकरवे (→सौकरके) –c) दे10 *** (→योगेन) –d) दे5 8 9 11 मुवे मत्प्रसादान्न सशय , दे6 7 प्रयाति परम पद

२३ ब1 2 दे1 3 4 ○ –a) ब दे6 7 °पुण्या (दे6 °ण्या) (→°पुर्यां) –c) दे2 येवास्ते, ते1 एतास्ते (→देवास्ते)

२४ दे1 3 4 ○, ब1 2 ab ○ –b) दे6 7 °सस्थिते (→°सस्थिते) –c) दे2 10 ते1 स याति (→ययाति–), ब1 2 °कुल° (→°भूप°), दे5 8 9 11 मुवे °वशाच्च, दे6 °वश्या च, दे7 °वश्यश्च (→°वशे च) –d) दे6 7 क्षत्रिया (→क्षत्रिय ), ब1 2 उत्पत्स्यामि वसुन्धरे

२५ दे1 3 4 ab ○, ब2 ef ○ –a) ब1 2 उत्पत्स्यामि, दे6 7 जनिष्यामि (→भविष्यामि) –b) ब1 समुद्भव , ब2 तथैव च (→न सशय ) –c) ब1 3 दे2 ते1 मूर्तीश (→मूर्ति), ब1 चतुरमास्थाय, ब2 चतुथमात्मान, ब3 दे4 चतुर्विधा कृत्वा,

मूर्ति चतुर्विधा कृत्वा स्थास्यामीति तथा तत ।
स्थास्यामि वत्सरशत युद्धेषु कृतनिश्चय ।।२५
एका चन्दनसङ्काशा द्वितीया कनकप्रभा ।
अशोकसदृशा चान्या अन्या चोत्पलसन्निभा ।।२६
तत्र गुह्यानि नामानि भविष्यन्ति मम प्रिये ।
पुण्यानि च पवित्राणि ससारच्छेदनानि च ।।२७
यत्राह घातयिष्यामि द्वात्रिंशति वसुधरे ।
दैत्यान् घोरान् महाभागे कसादीन् घोरदर्शनान् ।।२८
यमुना यत्र सुवहा नित्य सन्निहिता ध्रुवम् ।
वैवस्वतस्वसा रम्या यमुना यत्र विश्रुता ।।२९
ता नदी यमुना गङ्गा प्रयागे सङ्गमिश्रिता ।
गङ्गाशतगुणा पुण्या माथुरे मम मण्डले ।
यमुना विश्रुता देवि नात्र कार्या विचारणा ।।३०
तत्र तीर्थानि गुह्यानि भविष्यन्ति ममानघे ।
एषु स्नातो नरो देवि मम लोके महीयते ।।३१
अथात्र मुञ्चते प्राणान् मम कर्मपरायण ।
न जायते स मर्त्येषु जायते च चतुर्भुज ।।३२
अविमुक्ते नर स्नातो मुक्ति प्राप्नोत्यसशयम् ।
तत्राथ मुञ्चते प्राणान् मम लोक स गच्छति ।।३३
विश्रान्तिसञ्ज्ञक नाम तीर्थं त्रैलोक्यविश्रुतम् ।
यस्मिन् स्नातो नरो देवि मम लोके महीयते ।।३४
सर्वतीर्थेषु यत्स्नान सर्वतीर्थेषु यत्फलम् ।
तत्फल लभते देवि दृष्ट्वा देव गतश्रमम् ।।३५
न च यज्ञैर्न तपसा न ध्यानैर्न च सयमै । वे १५२ ३६

ते1 चतुर्विदा कृत्वा (→चतुर्विधा कृत्वा) –d) ब1 2 उत्पत्स्यामि वराङ्गने, ब3 स्थास्यामिति यथा तत, दे1 स्थास्यामि *****, दे5 8 9 11 मुवे स्थास्यामि ऋषिभिस्तुत, दे6 स्थास्यामि मनिभो स्तत, दे7 स्थास्यामि मुनिभि स्तुत –e) ब1 तिष्ठेद्वर्षशतानि च दे1 वत्सर*शत**, दे5-9 11 मुवे वत्सराणा शत तत्र –f) ब1 स्वशुद्ध (→युद्धेषु)

२६ –a) ब3 एक, दे10 ऐका (→एका), ब1 मे च द्र- (→चन्दन-), ब1 –सङ्काश–, ब3 –सङ्काशो (→–सङ्काशा), ब० एकञ्च चन्द्रशङ्काश –b) ब1 एका मे, ब2 एकञ्च (→द्वितीया), ब1 °प्रभ, ब2 °प्रभ, दे० 10 °प्रभा (→°प्रभा) –c) ब1 ° °सदशश्चैव (ब2 °क), दे1 7 °सदशी चान्या, दे6 °सदशो चान्या (→°सदशा चान्या) –d) ब1 2 एकश, दे3 अन्त्या (→अन्या), ब1 2 दे3 4 °सन्निभ (दे3 4° भा) (→°सन्निभा), दे6 7 परानीलोत्पलाप्रति

२७ –a) ब1 2 यत्र गुह्यानि तद्भद्रे –b) ब1 2 दे10 भविष्यति (→भविष्यन्ति) –c) ब1 2 पुण्यश्चैव प्रशान्ताश्च –d) ब3 सस्थावच्छे°, ते1 ससारेभे° (→ससारच्छे°), दे1 3 4 तु (→च), ब1 2 सवससारमोक्षणम

२८ ब2 cd ○ –a) ब1 2 यत्राह दारयिष्यामि –b) ब3 द्वात्रिंशच्च, दे10 द्वाष्ट सत्तु, मुवे द्वात्रिंशत्तु (→द्वात्रिंशति), ब1 2 दानवाश्च वरानने –c) ब1 ते भविष्यन्त्यस देह –d) ब1 द्वात्रिंशच्च वरानने, दे5-11 मुवे कसादी धर्मदूषकान

२९ –a) दे5 8 9 तत्र (→यत्र), ब1 2 नदी तत्र वरारोहे –b) दे6 7 किल (→ध्रुवम्), ब1 2 विमला विमलोदका –c) दे2 5-9 11 मुवे °सुता (→°स्वसा), ब1 2 विवस्वत सुता रम्या, ब3 वैवस्वती सुरम्या सा –d) दे4 विश्रुत, दे10 विश्रुता (→विश्रुता), ब1 2 यमुना वै भविष्यति

३० ब1 3 ○, दे9 a e ○ –a) दे2 5-8 10 11 मुवे ते1 नदी (→नदी), दे1 2 गगा, दे3 4 नित्य (→गङ्गा), दे5-8 मुवे गङ्गा प्राप्य प्रयागे या (दे6 प्रयोगेषु) –b) दे1 4 10 °मिश्रिता दे2 °विश्रुता, ते1 °विस्सता (→°मिश्रिता) दे5-8 11 मुवे वेणीति प्रथिता भुवि –c) दे7 गगा (→गङ्गा–) –f) दे10 नात्र कार्या विचारणात

३१ ब1 2 ○ –a) दे2 तथा (→तत्र) –b) दे. ममानयो, दे11 नमानघे, ते1 महानघे (→ममानघे) –c) दे2 5 8 9 11 मुवे ते1 स्नाने (→स्नातो) –d) दे2 11 लोक (→लोके), ब3 मम लोकञ्च गच्छति

३२ ब1 2 ○ –c) दे5 8 9 मर्त्ये तु (→मर्त्येषु) –d) दे3 जायते वै, दे4 जायेते वैं, दे6 जायते तु (→जायते च)

३३ ब1 2 ○ –a) दे4 6 अविमुक्तो (→अविमुक्ते), दे1 नरा (→नर) –b) ब3 दे2 4 6 ते1 मुक्ति प्राप्नोत्यसशय –c) दे1 2 5-11 मुवे तथात्र (→तत्राथ) –d) दे6 मम कमपरायण

३४ ब1 2 ○ –a) दे1 °सज्ञित, दे3 4 °सज्ञिक (→°सज्ञक) –d) दे5 मम लोके प्रपद्यते, दे6-9 11 मुवे मम लोक प्रपद्यते

३५ ब1 2 ○, दे11 b ○ –a) ब3 यत्स्नात, दे11 *** (→यत्स्नान) –c) दे11 यत (→तत्) –d) दे4 9 दष्टा (→दृष्ट्वा), ब3 गताश्रम, दे6 मुवे ते1 गतश्रम (→गतश्रमम्)

३६ ब1 2 ○ –a) दे6 यज्ञन (→यज्ञैन) –b) दे3 4 तस्यात्नैर (→न ध्यानैर्), दे6 सशय (→सयमै) –c) दे6 यत्

७ तत्फल लभते देवि स्नातो विश्रान्तिसज्ञके ।।३६
कालत्रय तु वसुधे य पश्यति गतश्रमम् ।
कृत्वा प्रदक्षिणे द्वे तु विष्णुलोक स गच्छति ।।३७
अस्ति चान्यत्पर गुह्य सर्वससारमोक्षणम् ।
यस्मिन् स्नातो नरो देवि मम लोके महीयते ।।३८
प्रयाग नाम तीर्थं तु देवानामपि दुर्लभम् ।
यस्मिन् स्नातो नरो देवि अग्निष्टोमफल लभेत् ।।३९
इन्द्रलोक समासाद्य नरोऽसौ देवि मोदते ।
अथात्र मुञ्चते प्राणान् मम लोक स गच्छति ।।४०
तथा कनखल तीर्थं पर प्रियतर मम ।
स्नानमात्रेण तत्रापि नाकपृष्ठे स मोदते ।।४१
अस्ति क्षेत्र पर गुह्य तिन्दुक नाम नामत ।
तस्मिन् स्नातो नरो देवि मम लोके महीयते ।

अस्मिस्तीर्थे पुरा वृत्त तच्छृणुष्व वसुधरे ।।४२
पाञ्चालविषये देवि काम्पिल्य च पुरोत्तमम् ।
धनधान्यसमायुक्त ब्रह्मदत्तेन पालितम् ।
तस्मिस्तु वसते देवि तिन्दुको नाम नामत ।।४३
तस्मिस्तु वसतस्तस्य नापितस्य पुरोत्तमे ।
कालेन महता तस्य कुटुम्ब क्षयमागतम ।।४४
क्षीणे कुटुम्बे तु तदा सुभृश दु खपीडित ।
सर्वसङ्गपरित्यागी सोऽगच्छन्मथुरा पुरीम् ।।४५
ब्राह्मणावसथे सोऽपि वसमानो वसुधरे ।
तस्य कर्मशत कृत्वा स्नात्वैव यमुना नदीम् ।
तत्र स्नान च कुरुते नित्यकाल दृढव्रत ।।४६
तत कालेन महता पञ्चत्व समुपागत ।
तस्य तीर्थप्रभावेन जातोऽसौ ब्राह्मणोत्तम ।।४७
तस्मिन् वरगृहे देवि ब्राह्मणो योगिना वर ।

(→नत) दे6 7 यद्वि, मुव स्नातो (→देवि) -d) दे10 मुवे यथा (→स्नातो) न3 °सज्ञिके, ते1 °सज्ञकम (→°सज्ञके), दे4 मम लाके महीयते

३७ ब1 2 ○ -a) त3 कालश्रया (→कालत्रय), न10 वसुत्र (→वसुत्र) -b) ब3 गताश्रम दे4 10 गत श्रमम, मुवे गतश्रम (→गतश्रमम) -c) ब3 प्रदक्षिण भीरु दे1 3 4 प्रदक्षिणा (दे3 °ण) दवि (→प्रदक्षिणे द्वे तु) -d) ब3 °लोकञ्च (→°लोक स), न1 3 4 विष्णुलोके महीयते

३८ ब1 2 ○ -a) ब3 चान्यतर, दे10 चान्य पर (→चान्यत्पर) -c) न1 तस्मिन, दे6 स्नाति दे8 स्नात्वा (→स्नातो), दे 4 भद्रे (→देवि) -d) दे5-9 11 लोक, मुवे लोक- (→लोके), दे2 5-9 11 मुवे प्रपद्यते (→महीयते)

३९ ब1 2 ○ -a) ब3 तीर्थ हि, ते1 तीर्थात्तु (→तीर्थ तु) -c) त1 दे1 2 4 10 ते1 तस्मिन् (→यस्मिन) -d) दे6 7 वह्नि° (→अग्नि°), दे8 भवेत् (→लभेत), दे5 9 मम लोक प्रपद्यते

४० ब1 2 ○ -b) दे6 7 नरो वै (→नरोऽसौ), ब3 दे7 दिवि, दे3 देव (→देवि) -c) ब3 तत्रात्र, दे1 4 तत्राथ, दे3 तत्राप्य-, दे10 तथात्र (→अथात्र) -d) दे6 7 च (→स)

४१ ब1 2 ○ -a) दे5-9 11 मुवे नाम (→तीर्थ) -b) ब3 गुह्य चैव पर मम, दे2 8 गुह्य तीर्थ पर मम, दे5-9 11 मुवे तीर्थ गुह्य मर मम, ते1 गुह्य क्षेत्रे पर मम -c) दे10 स्नात° (→स्नान°) -d) दे6 7 प्रमोदते (→स मोदते)

४२ ब1 2 ○ -a) ब3 दे5 क्षेत्रे (→क्षेत्र) -e) ब दे1 4 10 तस्मिन (→अस्मिस), ते1 क्षेत्रे (→तीर्थे), दे7 वृत्ते (→वृत्त)

४३ ब1 2 ○ -a) दे 4 6 10 ते1 पचाल° (→पाचाल°) -d) दे6 मालित (→पालितम) -f) ब दे1 3 10 मुवे नापित (→नामत)

४४ ब1 2 ○ -b) दे10 पुरोत्तमो (→पुरोत्तमे) -c) दे5 तस्या (→तस्य) -d) दे5 9 11 मुवे कुटुम्ब च (दे8 7 हि) क्षय गतम

४५ ब1 2 ○ -a) दे1 क्षीणो, दे8 क्षणे (→क्षीणे), दे7 ते1 तथा (→तदा) -b) ब सदृश (→सुभृश), दे3 4 भृश दु खप्रपीडित -c) दे5-9 °सग, मुवे °सज्ञ (→°सग-), दे5-9 11 मुवे परित्यज्य (→-परित्यागी) -d) दे5 9 11 मुवे तदा (→पुरी)

४६ ब1 2 ○ -a) ते1 ब्राह्मणान वसुधे सोऽपि -c) दे2 धम-, ते1 धम (→कम) -d) दे1 गता च, ते3 4 ता चैव (→स्नात्वैव) -e) ब दे1 तु (→च), दे5-9 11 मुवे नित्य स यमुना स्नाति -f) दे3 4 10 नित्यकाल-, दे5-9 11 मुवे चिरकाल (मुवे °ल) (→नित्यकाल)

४७ ब1 2 ○, दे4 d○ -c) दे5-9 11 मुवे स च (→तस्य), दे9 मुवे °प्रभावेण (→°प्रभावेन), ब3 तस्य तेनैव भावेन

४८ ब1 2 दे4 a e ○ -b) दे6 योगिनो (→योगिना) -c) दे10 °प्राज्ञा (→°प्राज्ञो) -e) दे5-9 11 मुवे

जातिस्मरो महाप्राज्ञो विष्णुभक्तो वसुधरे ।
तस्य तीर्थप्रभावेन प्राप्ता मुक्ति सुदुर्लभा ।।४८
तत पर सूर्यतीर्थं सर्वपापप्रमोचनम् ।
वैरोचनेन बलिना सूर्यस्त्वाराधित पुरा ।
भ्रष्टराज्येन बलिना धनकामेन वै पुरा ।।४९
ऊर्ध्वबाहुर्निराहारस्तप्तवानुत्तम तप ।
साग्र सवत्सर देवि तत काममवाप्नुयात् ।।५०
[तस्य प्रसन्नो भगवान् द्युमणि प्रत्यभाषत ।
कि कारण बले ब्रूहि तपस्यसि महत् तप ।।]५१
बलिरुवाच ।❀
भ्रष्टराज्योऽस्मि देवेश पाताले निवसाम्यहम् ।
वित्तेनापि विहीनस्य कुटुम्बभरण कुत ।।५२
मुकुटात् तस्य वै सूर्यो ददौ चिन्तामणि तत ।
चिन्तामणि तु संप्राप्य पातालमगमत् तदा ।।५३
तस्मिन् तीर्थे नर स्नात सर्वपापै प्रमुच्यते ।
तत्राथ मुञ्चते प्राणान् मम लोक स गच्छति ।।५४
आदित्येऽहनि सक्रान्तौ ग्रहणे चन्द्रसूर्ययो ।
तस्मिन् स्नातो नरो देवि राजसूयफल लभेत् ।।५५
यत्र ध्रुवेण सतप्त इच्छया परम तप ।
तत्र वै स्नानमात्रेण ध्रुवलोके महीयते ।
तत्राथ मुञ्चते प्राणान् मम लोके महीयते ।।५६
ध्रुवतीर्थे तु वसुधे य श्राद्ध कुरुते नर ।
पितॄ स्तारयते सर्वान् पितृपक्षे विशेषत ।।५७
दक्षिणे ध्रुवतीर्थस्य तीर्थराज प्रकीर्तितम् ।
तस्मिन् स्नातो नरो देवि मम लोके महीयते ।।५८
तद्दक्षिणे महादेवि ऋषितीर्थं पर मम ।
तत्र स्नातो नरो देवि ऋषिलोक प्रपद्यते ।
तत्राथ मुञ्चते प्राणान् मम लोक स गच्छति ।।५९
दक्षिणे ऋषितीर्थस्य मोक्षतीर्थं वसुधरे ।
स्नानमात्रेण वसुधे मोक्ष प्राप्नोति मानव । वे १५२ ६४

तत्तीथस्य प्रभावेन (मुवे °ण) –f) दे5-9 11 मुवे जाता, ते1 प्राप्तो (→प्राप्ता), ब3 दे5 मुवे सुदुर्लभा, दे1 3 4 च दुर्लभा (दे4 °भ), द10 शु*ल्लर्भा, ते1 सुदुर्लभ (→सुदुर्लभा)

४९ ब1 2 ○ –a) दे8 °तीर्थे (→°तीथ) –b) ब3 °प्रणोदन (→°प्रमोचनम) –d) दे1 6 10 पुरा (→पुरा) –e) द5-9 11 मुवे हि तथा (→बलिना) –f) दे5 9 11 मुवे सुन्दरि (→वै पुरा)

५० ब1 2. ○ –b) दे5 9 11 मुवे तताप परम तप –c) दे2 ते1 साय (→साग्र), ब3 दे4 सवत्सर–, दे10 सवत्सर (→सवत्सर), ब3 –शत (→देवि) –d) दे6 तत्तत (→तत), दे5-9 11 मुवे अवाप्तवान (→अवाप्नुयात्)

५१ ब1-3दे1-4 10ते1 ○ –b) दे6 प्रति (→प्रत्य–) –d) दे5 9 तपस्यति (→तपस्यसि)

❀ ब1 2 ○, दे1 वलिरु०, दे6 बलि

५२ ब1 2 ○ –c) दे1 विहीन स्या (→विहीनस्य) –d) दे2ते1 कृतु, मुवे कृत (→कुत)

५३ ब1 2 ○ –a) ब3 कुटुम्बा° (→मुकुटा°) –c) दे5-9 11 मुवे समासाद्य (→तु सप्राप्य) –d) दे5-9 11 मुवे वलि, ते1 तथा (→तदा)

५४ ब1 2 ○ –a) ब3दे6 7 10 स्नात्वा, दे4 स्नान (→स्नात) –c) दे2.3ते1 तत्राप्य, दे7 मुवे तथात्र (→तत्राथ) –d) दे5 8 9 11 लोक च, दे6 7 लोकाय (→लोक स)

५५ ब1 2दे1 3 4 ○ –a) मुवे आदित्याहनि (→आदित्येऽहनि), दे5 9 सप्राप्तौ (→सक्रान्तौ) –b) दे6 7 शशि° (→चन्द्र°) –c) दे6 7 स्नात (दे7 °ता) तस्मिन (→तस्मिन् स्नातो) –d) दे5 8 9 भवेत (→लभेत्)

५६ ब1 2दे1 3 4 ○ –a) दे5-9 11 मुवे ध्रुवेण यत्र सन्तप्त –b) दे5 9 11 मुवे स्वेच्छया (→इच्छया), ब3दे11 तत (→तप) –c) दे10ते1 अत्र (→तत्र), दे6 7 स्नात° (→स्नान°) –d) दे6 7 ध्रुवलोकस्यमा(दे7 °मवा)प्नुयात –e) द2ते1 तत्राप्य, दे7 मुवे तथात्र (→तत्राथ) –f) दे7 मम लोकाय गच्छति

५७ ब1 2दे1 3 4 6 ○ –c) मुवे सव(→सर्वान), ब3 पितॄन् स तारयेत् सर्वान –d) ब3 प्रेत° (→पितॄ°)

५८ ब1 2 दे1 4 ○ –a) दे6 दक्षिणी (→दक्षिणे) –b) ब3दे10 ऋषितीथ (→तीथराज) –c) दे6 7 तत्र(→तस्मिन), मुवे स्नाते (→स्नातो) –d) दे5 9 11 मुवे मम लोक प्रपद्यते

५९ ब1 2 दे1 3 4 ○, ब3 दे2 10 abcd○ –c) दे7 स्नाति (→स्नातो) –e) दे2ते1 तत्राप्य, दे5 8 9 11 मुवे अथात्र, दे6 अत्राथ (→तत्राथ) –f) दे5 8 9 11 मुवे मम लोके महीयते

६० ब1 2 ○, दे5-9 11 मुवे ef ○ –b) दे5 9 11 मुवे पर मम (→वसुन्धरे) –c) दे5-9 11 मुवे तत्र वै (दे6 7

[तत्राथ मुञ्चते प्राणान् मम लोके महीयते]।।६०
तत्रैव कोटितीर्थं हि देवानामपि दुर्लभम् ।
तत्र स्नानेन दानेन मम लोके महीयते ।।६१
कोटितीर्थे नर स्नातो दान दत्त्वा तु शक्तित ।
तारिता पितरस्तेन तथैव प्रपितामहा ।
कोटितीर्थे नर स्नात्वा ब्रह्मलोके महीयते ।।६२
तत्रत्र बोधितीर्थं तु पितृणामपि दुर्लभम् ।
पिण्ड दत्त्वा तु वसुधे पितृलोक स गच्छति ।।६३
गयापिण्डप्रदानेन यत्फल लभते नर ।
तत्फल लभते देवि ज्येष्ठे बोध्या न सशय ।।६४
द्वादशैतानि तीर्थानि देवाना दुर्लभानि च ।
स्नान दान जप होम सहस्रगुणित भवेत् ।।६५
एषा स्मरणमात्रेण सर्वपापै प्रमुच्यते ।
श्रुत्वा तीर्थस्य माहात्म्य सर्वान् कामानवाप्नुयात्।।६६

।।इति श्रीवराहपुराणे भगवच्छास्त्रे पञ्चाशदधिकशततमोऽध्याय ।।१५०।।

# १५१

श्रीवराह उवाच ।*
उत्तरे शिवकुण्डाच्च तीर्थाना नवसञ्ज्ञितम् ।
नवतीर्थात्पर तीर्थं न भूत न भविष्यति ।।१
तत्रैव स्नानमात्रेण सौभाग्य जायते ध्रुवम् ।

तत्रैव) स्नानमात्रेण –d) दे5-9 11 मुवे मोक्षमेव प्रपद्यते

६१ ब1 ॰ ○, ब3 त1 cd ○ –a) ब3 तथत्र, मुव तत्र वै (→तत्रैव), ब3 च, द1 4 तु, ते1 वै (→हि) –b) ब3 पितणा° (→देवाना°) –d) दे10 लोक (→लोके), दे4 महीयेत (→महीयते)

६२ ब1 दे1 3 4 ○, दे 7 ef ○ –a) दे5-9 11 मुवे स्नात्वा (→स्नाता) –b) दे5-9 11 मुवे सन्तप्य (दे5 8 9 °प) पितृदवता –e) दे2 8-11 स्नातो (दे9 °तौ) (→स्नात्वा)

६३ ब1 ॰ ○, ब3 दे1 ab () –a) दे2 5-9 11 मुवे ते1 वायु° (→बोधि°) –b) दे3 4 देवाना° (→पितृणा°) –c) दे2 ते1 दद्यात्तु (→दत्वा तु), दे5-9 11 मुवे पिण्डदानात्तु तत्रैव

६४ ब1 2 ○ –a) दे6 °प्रधानेन (→°प्रदानेन) –c) दे7 फला त (→तत्फल) –d) दे1 येष्टे यो ध्यान, दे2 ज्येष्ठे बोधाश्च, दे3 4 ज्येष्टे यो ध्यान–, दे6-9 11 मुवे ज्येष्ठे (दे7 °ष्ट) दानाश्च, ते1 एतदेवन्न (→ज्येष्टे बोध्या न)

६५ ब1 2 ○ –b) दे1 3 4 तु (→च) –c) ब3 दे3 4 6 7 जपो (→जप), दे6 7 होम (→होम) –d) ब3 दे5 8 सहस्र (→सहस्र–)

६६ ब1 2 ○ –a) दे3 6 7 9 मुवे येषा, ते1 ** (→ऐषा) –c) दे5-9 11 मुवे तीर्थाना चै (दे6 7 °नामे)व माहात्म्य –d) दे5-9 11 मुवे श्रुत्वा (→सर्वान्), ब3 लोकान् (→कामान्)

**पुष्पिका**—ब1 2 ○

**पुराणनाम**—दे6 ○, ब3 दे3 4 7 इत्यादि वा(दे3 4 श्रीवा, ब3 व) राहपुराणे भगवच्छास्त्रे, दे1 2 5 9-11 इत्यादि वाराहपुराणे, मुवे इति श्रीवराहपुराणे मथुरामाहात्म्ये, ते1 इत्यादि महापुराणे वाराहे **अध्यायनाम**—ब3 मथुरामाहात्म्यतीथप्रभावो नाम, दे1-4 मथुरातीथप्रभाव , दे5 7-9 मथुरातीथप्रशसा नामाध्याय , दे6 मथुरातीथप्रशसा, दे10 मथुरातीथप्रभाव नामाध्याय , दे11मुवे मथुरातीथप्रशसानाम, ते1 मथुरातीथप्रभावो नाम **अध्यायसख्या**—दे1-7 9-11 ○, ब3 प्रथमोध्याय , दे8 ।।५५।।, मुवे द्वापचाशदधिकशततमोऽध्याय ।।१५२।।, ते1 सप्तषष्ट्युत्तरशततमोऽध्याय

## १५१

[ब1 2 अध्यायोऽय नास्ति]

* दे1 वाराह उ॰, दे2 5-9 11ते1 वा(दे2 6 7 ते1 व) राह उवाच, दे3 4 10 श्रीवराह उवाच

अत पर दे10 अधिकम—श्रुत्वा तीथस्य माहात्म्यम् ।

१ –a)ब3 ऋषिकुण्डाच्च, दे1 3 4 त्वसि कुज(दे4 °ड)स्य, दे6 7 शिवकुण्डस्य, दे9 शिवकुण्डा च, दे10 त्वशि कुण्डाच्च, ते1 शिव कु** (→शिवकुण्डाच्च) –b) दे1 3 4 10 तीर्थं तु (→तीर्थाना), दे1 4 तव सज्ञित (दे4 °त ), दे2 10 ते1 नवसज्ञिक, दे3 तव सज्ञिक, दे5-9 11 मुवे नवक स्मृत (→नवसज्ञित) –c) दे2ते1 नदी° (→नव°)

२ ब3 ○ –a) दे5 7 9 तत्र वै (→तत्रैव) –b)

रूपवन्त प्रजायन्ते स्वर्गलोके न सशय ॥२
तस्मिन् स्नातो नरो देवि देवैश्च सह मोदते ।
तत्र सयमन नाम तीर्थं त्रैलोक्यविश्रुतम् ॥३
तत्राथ मुञ्चते प्राणान् मम लोक स गच्छति ।
पुनरन्यत् प्रवक्ष्यामि तच्छृणुष्व वसुधरे ॥४
तस्मिन् सयमने तीर्थे यद् वृत्त हि पुरातनम् ।
कश्चित् पापसमाचारो निषादो दुष्टचेतन ॥५
वसते नैमिषारण्ये सुप्रतीते सुपापकृत् ।
केनचित् त्वथ कार्येण सोगच्छन्मथुरा पुरीम् ॥६
तत्र प्राप्याथ कालिन्दी कृष्णपक्षे चतुर्दशीम् ।
कृष्णपक्षे चतुर्दश्या तर्त्तुकामो निषादज ॥७
तरता यमुना तेन प्राप्त सयमन श्रुतम् ।
[तत्र तीर्थे तु पतितौ शिर स्थौ तदुपानहौ ॥८
स दृष्ट्वा पतितौ तत्र यमुनासलिले शुभे] ।
ममज्जासौ तत पापस्तस्मिस्तीर्थे वरे शुभे ॥९
मग्नमात्रस्य तत्राथ गतप्राणोऽभवत् तदा ।
तस्य तीर्थप्रभावेन जातोऽसौ पृथिवीपति ॥१०
सौराष्ट्रविषये देवि क्षत्रियोऽभूद् धनुर्द्धर ।
नाम्ना क्षत्रधनुर्नाम सोऽभवत् प्रियदर्शन ॥११
पालयामास वसुधा क्षत्रधर्म समाश्रित ।
तेनोढा काशिराजस्य पीवरी नामत शुभा ।
पत्नीशताना मुख्याना प्रवरा सा वसुधरे ॥१२
तयाऽसौ रमयामास उद्यानेषु वनेषु च ।
प्रासादेषु च रम्येषु नदीना पुलिनेषु च ॥१३
प्रजा पालयतस्तस्य दान च ददतस्तदा ।
कालो गच्छति राज्ञस्तु भोगासक्तो न विन्दति ॥१४ ब १५३ १४

---

दे5-9 11 मुवे पर (→ध्रुव) –c) दे1 3 4 प्रजायेत (→प्रजायन्ते) –d) ते1 स्वगलोके महीयते

३ ब3 ○, दे1 3 4 10 cd ○ –a) दे6 10 स्नाने (→स्नाता) –b) दे2 ते1 मम लोक स गच्छति, दे5 9 11 मुवे मम लोक प्रपद्यते

३ श्लोकस्य b चरणात्पर दे2 ते1 अधिकम—
तत्राथ मुञ्चते प्राणान् मम लोक स गच्छति । (=४ab)

४ ब3 ○ –a) दे2 ते1 तत्र स्नातो नरो देवि, दे6 7 तत्रापि (दे7 तत्रैव) स्नानमात्रो वै

५ –b) दे5 9 11 य(दे6 त)द्वृत्त तु, मुवे यद्यद वत्त (→यद वृत्त हि) –d) दे7 निषिद्धो (→निषादो), दे1 2 10 ते1 °चेतस, दे5 9 11 मुवे °मानस (→°चेतन)

५ श्लोकस्य b चरणात्पर दे4 अधिकम—
तत्र प्राप्याथ कालिंदी शुक्लपक्षे चतुदशी । (=७ab)

६ –b) दे1 3 4 सुप्रतीते तु पापकृत, मुवे सुप्रतीतेऽपि पापकृत् –c) ब3 दे10 अथ, दे1 4 चाथ (→त्वथ), मुवे ते1 कालेन (→कार्येण) –d) दे1 3 4 सो गच्छेन्, दे8 यो गच्छन् (→सोगच्छन्), दे5 9 11 मुवे प्रति (→पुरी)

७ –a) दे4 गत्वाथ, दे5-9 11मुवे प्राप्य च (→प्राप्याथ), दे3 6 8 9 11 कालिन्दी (→कालिन्दी) –b) दे1 3 4 शुक्ल° (→कृष्ण°) –c) दे5-9 11 मुवे स निषादस्ततुकामस् –d) दे5 9 11 मुवे तस्या चैव तिथौ तत

८ दे2 5 9 11 मुवे ते1 cd ○ –a) दे5-9 11 मुवे ततार (→तरता), ब3 दे2 ते1 यमुना, दे6 यमनो (→यमुना), दे5 9 11 मुवे सोऽथ (→तेन) –b) दे5 9 11 मुवे प्राप्य (→प्राप्त), दे6 10 सयमने (दे10 °ना), दे7 सयमुने (→सयमन), ब3 शुभ, दे1 श्रुते, दे2 5-11 मुवे ते1 शुभे (→श्रुत)

९ दे2 5-9 11 मुवे ते1 ab ○ –c) ब3 दे1-4 10 ते1 ततो मज्जदसौ पापस –d) ब3 दे1 5 8 9 11 तीथ– (→तीर्थे)

१० –a) दे5 9 11 मुवे मग्नमात्रस्तत पाप –b) ते1 तथा (→तदा), दे5 8 9 11 मुवे सद्य प्राणैर्व्ययुज्यते दे6 7 सद्य पापै वि (दे7 प्र) मुच्यते –c) दे5-9 11मुवे तत्तीथस्य प्रभावेण –d) दे2ते1 जात स (→जातोऽसौ) दे1 2 5 9 10ते1मुवे पृथवी° (→पृथिवी°)

११ –a) दे1 देवी, दे6 भूमि (→देवि) –b) ते1 वरानने (→धनुधर) –c) दे2 5 9 11 मुवे यक्ष्म° (→क्षत्र°) –d) ते1 नामा (→नाम)

१२ दे10 bcd ○ –b) दे1 3 5-7 ते1 क्षत्रधम–, दे4 क्षत्रधर्मा, दे8 9 क्षेत्रधम (→क्षत्रधम) –d) ब3 दे6 7 सुता (→शुभा) –e) दे1 3 4 सुताना (→शताना), ब3 पञ्चाना (→मुख्याना)

१३ दे1 cd○ दे10 a ○ –a) दे5-9 11 मुवे ता (दे6 मा) चैव (→तयाऽसौ), ब3 तत्रासौ वरयामास, दे5 7-9 ता चैव वरयामास –b) दे1 वसुध्नरे, दे4**** (→वनेषु च)

१४ –a) ब3 दे5 8 9 11मुवे ते1 प्रजा, दे1 3 4 6 7 प्रजा (→प्रजा) –b) दे5-9 11मुवे दानानि (→दान च), ब3 दे5-9 11 मुवे ते1 तथा (→तदा) –c) ब3 दे1 6 गच्छतु (→गच्छति), दे3 4 6 राजस्तु, मुवे राजा तु (→राज्ञस्तु) –d) दे2 ते1

१४ भोगासक्तस्य वसुधे वर्षाणा सप्ततिर्गता ।
पुत्रा सप्त तथा जाता कन्या पञ्च सुशोभना ॥१५
राज्ञा पञ्च सुता दत्ता कन्याश्च शुभलोचना ।
पुत्रान् सस्थापयामास स्थानेषु वसुधाधिपान् ॥१६
पीवर्या सह सुप्त स रात्रौ च वसुधाधिप ।
तत्र प्रबुद्धो नृपतिर्हाहेति वदते मुहु ।
स्मृत्वा तु मथुरा देवि स्मृत्वा सयमन परम् ॥१७
तत सा पीवरी राज्ञी भर्तार पर्यपृच्छत ।
कि त्वया भाषित राजन् मथुरेति पुन पुन ॥१८
एव सा पृच्छते देवी भर्तार शुभलोचना ।
प्रियाया वचन श्रुत्वा राजा वचनमब्रवीत् ॥१९
मत्त सुप्त प्रमत्तश्च असम्बद्ध प्रभाषते ।
निद्रावशस्य वचन न त्व प्रष्टुमिहार्हसि ॥२०

पीवर्युवाच ।❀

कथयस्व ममाद्य त्व यद्यह वल्लभा तव ।
प्राणास्त्यक्ष्याम्यह देव यदि गोपयसे मम ॥२१
प्रियाया वचन श्रुत्वा उवाच स नराधिप ।
अवश्य यदि वक्तव्य गच्छावो मथुरा पुरीम् ॥२२
तत्र गत्वा यथातत्त्व कथयिष्यामि भामिनि ।
ददस्व विपुल दान ब्राह्मणेभ्य सुलोचने ॥२३
पुत्रान् स्थाप्य च दौहित्रान् स्वे स्वे स्थाने निवेश्य च ।
कोश रत्नानि ग्रामाश्च पुत्रान् वीक्ष्य पुन पुन ॥२४
तत समानयामास जन पुरनिवासिनम् ।
पितृपैतामह राज्य पालितव्य यथाक्रमम् ।
राज्ये पुत्रान् नियोक्ष्यामि यदि वो रोचतेऽनघा ॥२५

---

भोगासक्ति न, दे5 9 11 मुवे भागासक्ति (दे6 7 °मुक्ति) च (→भोगासक्तो न)

१५ –b) मुव वर्षाणि (→वर्षाणा), मुवे सप्तसप्तति (→सप्ततिगता) –c) द10 याता (→जाता)

१६ –a) दे10 शुभा (→सुता) –b) ब3द10 हिता कन्या सुलोचना, दे1 4 कन्या पञ्चसुशोभना, दे5-9 11 मुवे कन्या कमललोचना –d) द1 4 स्वस्थाने (→स्थानेषु), ब3दे10 °धिप, दे6 °धिपा (→°धिपान्)

१७ ब3 ab ○ –a) द1-4 6 7 10 11ते1 सुप्तस्य (→सुप्त स) –b) दे1-4 10ते1 स(→च), दे6 7 °पते (→°धिप) –c) दे6 प्रवृद्धा (→प्रबुद्धो), दे2ते1 न प्रबुद्धोपि नृपति –d) द2 वद ये, दे6 10 वदतो, ते1 वदयो (→वदते), दे6 7 पुन (→मुहु) –e) दे2 मधुरा (→मथुरा), ब3दे1-4 8ते1 देवी (→देवि) –f) ब3दे1-4 8 10ते1 शुभ, दे6 7 पुन (→पर)

१८ दे1 3 4 मुवे cd ○ –a) दे1 3 तपसा, दे4 तदा सा (→तत सा), दे1 4 राज्ञा, मुवे प्राह (→राज्ञी) –b) दे2 10ते1 पर्य(ते1 परि)पृच्छति (→पर्यपृच्छत), मुवे किमेव भाष स नृप –c) दे2 10 देव, ते1 देवि (→राजन्), ब3 कि******* –d) ते1 मधुरेति (→मथुरेति)

अत पर ब3 अधिकम्—

पीवर्या सह सुप्तश्च रात्रौ स वसुधाधिप । ( = १७ab)

१९. दे1 3 4 ○, मुवे ab ○ –c) दे6 प्रियया (→प्रियाया) –d) दे2ते1 इद (→राजा)

२०. दे1 3 4 ab ○ –a) दे6 सप्त–(→सुप्त) –b) द6 7 न सबद्ध (→असम्बद्ध), दे2 9ते1 प्र(ते1 च) भाषसे (→प्रभाषते) –c) दे6 °वशेभ्यो (→°वशस्य–) –d) दे 4 त्व द्रष्टु, दे6 7 सम्प्रष्टु (→त्व प्रष्टु), दे5 8 9,11 मुवे न सम्प्रष्टु त्वमर्हसि

❀ दे6 7 पीवरी उवाच, दे7 पीवरीरुवाच, दे10 पीवयुचु

२१ –a) ब ममाद्याव, दे3 4 ममा (दे4 °म) त्वद्य (→ममाद्यत्व) –b) ब3 भर्तार शुभलोचना, दे6 7 यद्यह तव वल्लभा –c) ब3 दे10 त्यजाम्यह, दे1 5 त्यक्षाम्यह, दे2 मुवे, तक्ष्याम्यह, दे6 त्यक्त्वास्यहे (→त्यक्ष्याम्यह), दे4 देवि (→देव) –d) दे5-9 11 मुवे गोपयिष्यसि मे यदि

२२ –a) दे4 प्रियाया (→प्रियाया) –b) दे5-9 11 मुवे प्रत्युवाच (→उवाच स) –c) दे1 3 4 गन्तव्य (→वक्तव्य) –d) ब3 दे1 4 6 10 ते1 गच्छामो (→गच्छावो), दे3 ते1 मधुरा (→मथुरा), दे7 प्रिये (→पुरी)

२३ दे6 ○ –b) दे5 7-9 11 मुवे वदिष्यामि शुभानने

२४ दे6 ○ –a) ब3 स्थाप्य स, दे2 10 ते1 प्रस्थाप्य, दे5 7-9 11 मुवे सस्थाप्य (→स्थाप्य च) –b) दे5 7-9 11 मुवे शुभान् प्रिये, दे7–धिपान् प्रिये (→निवेश्य च) –c) मुवे ग्रामाश्च कोश रत्नानि

२५ दे6 ○ –b) दे10 जनान् (→जन), दे10 °निवाशिन (→°निवासिनम्) –d) ब3 पालयस्व, दे5 7 9 11 मुवे पालनीय (→पालितव्य) –f) दे1 3 4 ते, दे7 वै, ते1 नो (→वो), ब3 नरा, दे1 [अ] नघ, दे2 ते1 मया, दे3 [अ] नघ (→[अ] नघा)

राज्य पुत्रकलत्र च बन्धुवर्ग तथैव च ।
नित्यमिच्छन्ति वै लोके यमस्येच्छन्ति चान्यथा ।।२६
एव ज्ञात्वा प्रयत्नेन कर्तव्य चात्मनो हितम् ।
तस्मात् सर्वं परित्यज्य गच्छामो मथुरा पुरीम्।।२७
अहो कष्ट यदस्माभि पुरा राज्यमनुष्ठितम्।
इदानी तु मया ज्ञात त्यागान्नास्ति पर सुखम् ।।२८
नास्ति विद्यासम चक्षुर्नास्ति चक्षुस्सम बलम् ।
नास्ति रागसम दु ख नास्ति त्यागात् पर सुखम् ।।२९
य कामान् कुरुते सर्वान् यश्चैतान् केवलास्त्यजेत् ।
प्रापणात् सर्वकामाना परित्यागो विशिष्यते ।।३०
अभिषिच्य सुत ज्येष्ठमनुयोज्य परान् बहून् ।
तत पौरजन दृष्ट्वा चतुरङ्गबलान्वित ।
तत कालेन महता सप्राप्तो मथुरा पुरीम् ।।३१
तेन दृष्टा पुरी रम्या वासवस्य पुरी यथा ।
तीर्थैर्द्वादशभिर्युक्ता पुण्या पापहरा शुभा ।। ३२
रम्य मधुवन नाम विष्णुस्थानमनुत्तमम् ।
त दृष्ट्वा मनुजो देवि सर्वान् कामानवाप्नुयात् ।।३३
वन तालवन चैव द्वितीय वनमुत्तमम् ।
[एकादशी शुक्लपक्षे मासि भाद्रपदे हि या ।]
तत्र स्नातो नरो देवि कृतकृत्यो हि जायते ।।३४
वन कुन्दवन नाम तृतीय चैवमुत्तमम् ।
तत्र गत्वा नरो देवि कृतकृत्यो हि जायते ।।३५
[एकादशी कृष्णपक्षे मासि भाद्रपदे हि या ।]
तत्र स्नातो नरो देवि रुद्रलोके महीयते ।।३६
चतुर्थं काम्यकवन वनाना वनमुत्तमम् ।
तत्र गत्वा नरो देवि मम लोके महीयते ।।३७ वे १५३ ३७

२६ दे6 ○, दे7 cd ○ –a) दे5 8 9 11 मुवे राज्य– (→राज्य), दे5 7 9 11 मुवे कलत्राणि (→कलत्र च) –c) दे1 3 4 10 इच्छति (→इच्छंति), ब3 मुवे लोको (→लोके) –d) ब3 दे1 4 10 यम स्वेच्छा न चा (दे1 4 °निवा) न्यथा, दे2 ते1 यम स्वेच्छामि चा(ते1 वा)न्यथा, दे3 5 8 9 11 यमस्वेच्छानि चा यथा मुवे यमस्येच्छन्ति नान्यथा

२७ दे6 ○ –a) दे2 मुवे प्रसन्नेन (→प्रयत्नेन) –c) ब3 दे5 7-9 मुवे सव– (→सव), दे5 7 9 11 मुवे प्रयत्नेन (→परित्यज्य) –d) मुवे गच्छावो (→गच्छामो), ब3 मरका (→मथुरा)

२८ –a) दे5 8 9 ममास्माभि , दे6 7 पुरास्माभि (→यदस्माभि ) –b दे6 7 यथा (→पुरा) –d) दे6 पर पर (→पर सुखम)

२९ दे1 7 ○ –c) दे10 रोग°(→राग°) –d)दे6 नास्ति त्यागसम सुख

३० –a) ब3 दे1 ॰ 4 10 नाप्नुयात (→कुरुते) –c) दे1 3 4 प्रापण, दे2 5 9 11 मुवे प्रायेण(→प्रापणात) –d) दे1 3 4 विवीयते (→विशिष्यते)

३१ –b) दे6 7 अनुयुज्य (→अनुयोज्य), दे2 ते1 पुरा (→परान) –c) दे4 5 9 दष्टा, दे6 पष्ट्वा, दे7 पष्टा (→दष्ट्वा) –e) दे6 7 कालेन महता गच्छन्

३२ –a) ते1 तत्र (→तेन), दे7 दष्ट, दे10 ते1 दष्ट्वा (→दष्टा), दे1 3 4 च रम्या च, दे2 10 ते1 च सा रम्या (→पुरो रम्या) –c) दे5 9 तीर्थे, दे6 तीथ, दे7 तीर्था (→तीर्थैर) –d) दे6 7 सव , दे9 11 पुण्य, ते1 पुण्ये (→पुण्या)

३३ –a) ब विष्णु(→नाम) –b) ब3 तत्र(→विष्णु–) –c) ब3 यद, दे1 4 10 य, दे6 7 तद(→त), दे5 9 द ष्टा (→दष्ट्वा) ब3 दे4 मनुजा (→मनुजो), ते1 देवी (→देवि) –d) दे5 8 9 11 मुवे कृतकृत्यो हि जायते, दे7 सर्वान कामानवाप्तवान्

३४ दे10 ○, ब दे5 9 11 ab ○, दे1 4 ते1 cd○, दे6 f○ –b) दे6 7 पुण्य(→वन) –c) ब3 कृष्ण°(→शुक्ल°) –d) मुवे तथा (→हि या) –e) दे5 8 9 तस्मिन, दे7 मुवे तस्या (→तत्र), दे5-9 11 मुवे स्नातो (→स्नात्वा) –f) दे4 सर्वान कामानवाप्नुयात,

३४ श्लोकात्पर दे5 8 9 अधिकम—

*द्वितीय तालुवन नाम वना तामुत्तमोत्तमम ।
धेनुको नाम दैत्यो वै मया तत्र निपातित ।

३४ श्लोकस्य b चरणात्पर दे6-8 अधिकम—

*तदष्ट्वा मनुजो दवि कृतकृत्यो हि जायते ।

३५ ब3 दे6 ○, दे 4 7 d ○ –a) दे1 3 4 मुदगवन, दे5 8 9 कुमुदक दे10 कुमुदवन (→कुन्दवन), ते1 गत्वा (→नाम) –c) ते1 स्नात्वा (→गत्वा), दे1 ते1 देवी (→देवि)

३६ ब3 दे1 ○, दे3 4 6 7 abc ○ –a) दे5 8 9 शुक्ल° (→कृष्ण°) –b) दे2 ते1 मासे (→मासि) –c) ते1 देवी (→देवि) –d) दे4 रुद्रे (→रुद्र–)

३७ –a) दे1 4 च काम्य°, दे5 8 9 वहुल° (→काम्यक°) –b) दे2 ते1 वनस्थ (→वनाना), दे8 9 (नाम) वनाना वनमुत्तम –c) दे1 मत्वा (→गत्वा), दे1 ते1 देवी (→देवि) –d) दे2 8 9 अग्निस्थान स गच्छति

३३८ विमलस्य च कुण्डे तु सर्वपापैः प्रमुच्यते ।
यस्तत्र मुञ्चते प्राणान् मम लोकं स गच्छति ॥३८
पञ्चमं बहुलवनं वनस्थानमनुत्तमम् ।
तत्र गत्वा नरो देवि अग्निस्थानं स गच्छति ॥३९
यमुनाया परे पारे देवानामपि दुर्लभम् ।
अस्ति भद्रवनं नाम वनानां वनमुत्तमम् ॥४०
तत्र गत्वा तु वसुधे मद्भक्तो मत्परायणः ।
तद्वनस्य प्रभावेन नागलोकं स गच्छति ॥४१
सप्तमं तु वनं भूमे खादिरं लोकविश्रुतम् ।
तत्र गत्वा नरो भद्रे मम लोकं स गच्छति ॥४२
महावनं चाष्टमं तु सदैव तु मम प्रियम् ।
तस्मिन् गत्वा तु मनुज इन्द्रलोके महीयते ॥४३

लोहजङ्घवनं नाम लोहजङ्घेन रक्षितम् ।
नवमं तु वनं देवि महापातकनाशनम् ॥४४
वनं बिल्ववनं नाम दशमं देवपूजितम् ।
तत्र गत्वा तु मनुजो ब्रह्मलोके महीयते ॥४५
एकादशं तु भाण्डीरं योगिनां प्रियमुत्तमम् ।
तस्य दर्शनमात्रेण नरो गर्भं न गच्छति ॥४६
भाण्डीरं समनुप्राप्य वनानां वनमुत्तमम् ।
वासुदेवं ततो दृष्ट्वा पुनर्जन्म न विद्यते ॥४७
वृन्दावनं द्वादशमं वृन्दया परिरक्षितम् ।
मम चैव प्रियं भूमे सर्वपातकनाशनम् ॥४८
वृन्दावने च गोविन्दं ये पश्यन्ति वसुधरे ।
न ते यमपुरं यान्ति यान्ति पुण्यकृतां गतिम् ॥४९

॥ इति श्रीवराहपुराणे भगवच्छास्त्रे एकपञ्चाशदधिकशततमोऽध्यायः ॥१५१॥

---

३८ –a) ब, दे 5 8 9 तु (→च) दे6 7 च (→तु) –b) दे5 10 सव (→सर्व–), दे1 3 4 10 सवपाप (दे10° प) विमोक्षते –c) दे1 3 4 10 यस्तु प्र–(→यस्तत्र)

३९ दे5 8 9 ○ –a) दे6 7 मुवे पचम वहु (मुवे °कु) ल नाम –b) दे6 7 मवे वनानामुत्तमं वनं –c) दे1 4 ते1 तत्र (दे4 °त्रा) गत्वा नरो देवी (दे4 °वि) –d) दे6 7 प्रपद्यते (→स गच्छति)

४० –a) दे2 10 ते1 यमुनाया, दे4 यामुनया (→यमुना-या) –d) दे2 ते1 वनमत्यन्तमुत्तमम, दे3 5-9 मुवे षष्ठ (दे5 °ष्टे) वनमनुत्तमम, दे10 11 पष्ठ वनमुत्तम

४१ –a) दे4 तत्रागत्वा तु वासुधे –b) दे2 ते1 मद्भक्ता (→मद्भक्तो), दे2 4 ते1 परायणा (दे4 °णा) (→परायण ) –c) दे1 3 10 ते1 तस्या वन–, दे4 तस्या तेन (→तद्वनस्य) –d) दे6 मम (→नाग–), °दे7 नागलोके****

४२ दे7 ○ –a) दे2 ते1 वने (→वन), दे1 3 4 भद्रे (→भूमे) –d) दे6 लोकाय (→लोक स)

४३ दे7 ○ –b) दे6 सदैवैहि समप्रिय –c) ब3 दे2 10 ते1 यस्मिन्, दे1 तत्र, दे5 9 11 मुवे यत्र (→तस्मिन्), दे2 ते1 स्नात्वा(→गत्वा), दे1 वसुधे (→मनुज), दे6 यत्र गत्वा मनुष्येन्द्रा –d) दे1 मद्भक्तो मत्परायण

४४ दे6 7 ○ –c) दे3 4 ममैव (→नवम), दे5 8 9 11 मुवे नाम (→देवि) –d) दे1 3-5 8-11 मुवे सव° (→महा°)

४५ दे6 7 ○ –b) दे1 3 दशमे, दे9 दशवा (→दशम)

४६ –a) दे1 6 भाण्डार, दे4 गर्भार (→भाण्डीर) –b) मुवे योगिन (→योगिना) –c) दे4 तस्यार् (→तस्य) –d) दे4 गर्भं (→गभ )

४७ ते1 a ○ –a) दे3 4 तण्डीर (→भाण्डीर) –b) ब3 दे10 वनानामुत्तम वन –c) दे5 9 दष्टा (→दृष्ट्वा) –d) ते1 गच्छति (→विद्यते)

४८ –a) ब3 द्वादश वन, दे6 द्वादश च, मुवे द्वादशक (→द्वादशम) –c) दे6 7 ममातीव (→मम चैव) –d) दे2 5 9 11 मुवे महा° (→सर्व°)

४९ –a) दे1-9 11 मुवे वृन्दावन (→वृन्दावने), ते1 गोविन्दे (→गोविन्द) –c) दे6 8 °पुरी (→°पुर ) –d) ब3 पुरी (→गतिं), दे2 ते1 पुण्यमन्तो (ते1 °न्ते) कृता गति, दे4 10 **पुण्य (दे4 °ण्या) कृता गति

**पुष्पिका—**

**पुराणनाम**—दे6 ○, ब3 इत्यादि वराहपुराणे भगवच्छास्त्रे दे1 2 5 8-11ते1इत्यादि वाराहपुराणे, दे3 4 इत्यादि श्रीवाराहपुराणे भगवच्छास्त्रे दे7 इतिश्रीआदिवाराहपुराणे भगवच्छास्त्रे, मुवे इति श्रीवाराहपुराणे भगवच्छास्त्रे मथुरामाहात्म्ये **अध्यायनाम**– ब3 मथुरामाहात्म्ये, दे1-4 10 मथुराप्रभावो, दे5 8 11 मथुरातीर्थ वनवर्णनो नाम, दे6 मथुरावनवर्णन, दे1 श्रीमथुरावर्णन नामाध्याय , दे8 9 मथुरातीर्थवनवर्णनो नाम अध्याय , मुवे मथुरातीर्थमाहात्म्य नाम, ते1 मथुराप्रभावो नाम **अध्यायसंख्या**—दे5-9 11 ○, ब3 द्वितीयोध्याय , दे1-4 10 ते1 द्वितीय , मुवे त्रिपञ्चाशदधिक-शततमोध्याय ॥१५३॥

# १५२

श्रीवराह उवाच ।❀

एवविधा च मथुरा दृष्ट्वा तौ मुदमापतु ।
एव तु वसतस्तस्य राज्ञस्तत्र वसुधरे ॥१
पप्रच्छ च तदा भार्या गुह्य पूर्वं सुदुर्लभम् ।
कथित च पुरा तेन यद्वृत्त हि पुरातनम् ॥२
तवापि यत्पुरा वृत्त गुह्य तत्कथयस्व मे ।
विहस्य पीवरी राज्ञी त्विद वचनमब्रवीत् ॥३
अह तु पीवरी नाम गङ्गातीरनिवासिनी ।
आगता मथुरा द्रष्टु कुमुदस्य तु द्वादशीम् ॥४
नावमारुह्य यान्तीऽह पतिता यमुनाजले ।
गतप्राणा समुत्पन्ना तत्रैव वसुधाधिप ॥५
अस्य तीर्थप्रभावेन जाता काशिपते सुता ।
त्वया विवाहिता राजन् जातिस्मरणसम्भवा ।
अस्य तीर्थप्रभावेन धर्मयुक्ता तथाऽनघ ॥६
धारापतनके तीर्थे त्यक्त्वा जीवितमात्मन ।
त्यक्त्वा चात्मतनु देवि धारापतनके शुभे ।
त्यक्त्वा प्राणाश्च वसुधे नागलोक गता हि सा ॥७
यमस्वसार सप्राप्य त्यक्त्वा जीवितमात्मन ।
विष्णुलोक च सप्राप्य दिव्यमूर्तिश्चतुर्भुज ॥८ वे १५८।१८

---

१५२

[ब1 2 अध्यायोऽय नास्ति]

❀ ब3दे6 7 मुवे ते1 वराह उवाच, दे1 वाराह उ०, दे2 वाराह उवाच, दे3-5 8 10 11 श्रीवाराह उवाच, दे9 श्रीवाराह उ०

१ -a) दे6 7 तु (→च) -b) दे4 6 9 दष्टा (→दृष्ट्वा) दे1 3 4 मथुरा ययु, दे6 मुदमापतौ, दे10 मुदमाययु (→ मुदमापतु ) -c)ब च (→तु), ब3 तत्र(→तस्य) -d) दे1 3 4 तदा राज्ञो, दे10 राज्ञस्तस्य, ते1 राज्ञस्य च (→राज्ञस्तत्र)

२ दे5 9 11 मुवे cd ○ -a) ब3 पप्रच्छ त, दे4 प्रपच्छे च, दे6 7 पयपृच्छत (→पप्रच्छ च) -b) दे5 9 11 मुवे यत गुह्य पूवभाषितम् -d) दे2ते1 च (→हि)

२ b, c मध्ये दे5 6 8 9 11 मुवे अधिकम–

पुरस्थेन तदा राज्ञा (दे6 राजन्) वक्ष्यामि मथुरा प्रति ।

३ दे7 ○, दे5 6 8 9 11 मुवे ab ○ -a) दे2ते1 तव प्रिय (→तवापि यत्), दे3 दत्त, दे4 वत्त (→वृत्त) -cd) दे5 6 8 9 11 मुवे प्रोवाच चैव राजान मनस प्रीतिकारणम

३ श्लोकस्य b चरणात्पर दे5-9 11 मुवे अधिकम—

*तन्मे वद महाराज यद्गोप्य पूवभाषित ।
राजाप्युवाच ता राज्ञी त्वयाप्युक्त पुरा मम ।
तद्वदस्व स्वक गुह्य पश्चाद्वक्ष्याम्यह तव ।

इत्युक्त्वा पीवरी राज्ञी (मुवे ज्ञात्वा) प्रहस्य तु गुणालया ।

४ -c) मुवे आगते (→आगता) मुवे मा पुरी (→ मथुरा) -d) ब3 च (→तु)

५ -a) दे6 वन° (→नाव°), दे1-4ते1 –मानाया , दे9 मुवे यान्तीह (→यान्तीह), ब, नावमारुहमाणा च, दे10 नावमानुह्यमानाया -c) दे2ते1 समुत्पन्नस (ते1 °न्नास्) (→समुत्पन्ना), दे5 9 11 मुवे सद्य प्राणैर्वियुक्ता च (दे7 °क्त्वा च) -d) दे5 9 11 मुवे तत्तीथस्य प्रभावत

६ -a) ब3दे2 10ते1 तस्य (→अस्य), दे5-9 11 मुवे काशी(दे6 8 11 °शि)राजपते कन्या -b) दे5 9 11 मुवे या (दे5 6 11 जा)तास्मि वसुधाधिप (दे6 वसुधे तले) -d) दे1-9 11 मुवे ते1 °सम्भव (→°सम्भवा), दे5 8 9 11 मुवे न च मा विजहात्स्मति , दे6 7 न विजहाति मा स्मृति -e) ब3दे1 3 4 तस्य, दे5 9 11 मुवे एतत(→अस्य) -f) दे4 कृत्वा दे। –युक्तास (→–युक्ता) दे2ते1 धमयुक्ताथवानय

७ ब cd ○, दे2ते1 ७c–८b ○ -b) दे6 7 त्यक्त (→त्यक्त्वा), दे7 च जीवितात्मन (→जीवितमात्मन ) -c) दे5 9 11 मुवे तीर्थे (→देवि) -d) दे5 9 11 मुवे धारा पतनसज्ञके -e) ब3दे1 10 त्यक्त– (→त्यक्त्वा), ब3 –प्राणा च दे1 3 4 –प्राणाश्च(→प्राणाश्च), दे5-9 11मुवे नाकलोकमवा नोति -f) दे5 9 11 मुवे त्यक्तपापो न सशय

७ bc मध्ये दे5 9 11 मुवे अधिकम–

*एतच्छ्रुत्वा ततो राजा कथा प्राग्जन्मसम्भवाम् ।
स्वा चाप्यकथयत्तस्यै यथा सयमने मृत ॥
एव तौ मथुरा प्राप्य स्नात्वा यामुनतीथके ।
मा पश्यन्तौ नियमतस्तत्रैव निधन गतौ ।
सवकमपरित्यक्तौ गतौ मम स लोकताम । [5]
एतत्ते कथित देवि आश्चय यदभून्महत ।

[-1 दे5-7एव (→एतत),दे8 राज्ञा, दे9 11 राज्ञा (→राजा) -3 दे5-9 11 °तीथयो (→°तीथके) -5 मुवे मतौ सव° (→सवकम°) ]

८ दे2 ते1 ab ○ (द्र ७ पा वि ) -a) दे1 3 4 या सुस्वर तु, दे10 यमनश्वसार (→यमस्वसार), दे5 9 11 मुवे यमु

१८ धारापतनके स्नात्वा नाकपृष्ठे स मोदते ।
अथात्र मुञ्चते प्राणान् मम लोक स गच्छति ॥९
अत पर नागतीर्थं तीर्थानामुत्तमोत्तमम ।
यत्र स्नाता दिव यान्ति ये मृतास्तेऽपुनर्भवा ॥१०
घण्टाभरणक तीर्थं सर्वपापप्रमोचनम ।
यस्मिन् स्नातो नरो देवि सूर्यलोके महीयते ।
अथात्र मुञ्चते प्राणान् मम लोक स गच्छति ॥११
पुनरन्यत् प्रवक्ष्यामि तच्छृणुष्व वसुधरे ।
तीर्थानामुत्तम तीर्थं ब्रह्मलोकेति विश्रुतम् ॥१२
तत्र स्नात्वा च पीत्वा च नियतो नियताशन ।
ब्रह्मणा समनुज्ञातो विष्णुलोक स गच्छति ॥१३
सोमतीर्थं तु वसुधे पवित्रे यमुनाम्भसि ।
यत्र मा पश्यते सोमो द्वापरे युगसस्थिते ॥१४
तत्राभिषेक कुर्वीत स्वकर्मपरिनिष्ठित ।
मोदते सोमलोके तु एवमेतन्न सशय ।
तत्राथ मुञ्चते प्राणान् मम लोक स गच्छति ॥१५
सरस्वत्याश्च पतन सर्वपापहर शुभम् ।
तत्र स्नात्वा नरो देवि अवर्णोऽपि यतिभवेत् ॥१६
पुनरन्यत् प्रवक्ष्यामि माथुरे मम मण्डले ।
यस्तत्र कुरुते स्नान त्रिरात्रोपोषितो नर ॥१७
स्नानमात्रेण मनुजो मुच्यते ब्रह्महत्यया ।
तत्राथ मुञ्चते प्राणान् मम लोक स गच्छति ॥१८
दशाश्वमेधमृषिभि पूजित सर्वदा पुरा ।
तत्र ये स्नान्ति नियतास्तेषा स्वर्गो न दुर्लभ ॥१९
मथुरापश्चिमे पार्श्व सतत ऋषिपूजितम् ।
ब्रह्मणा सृष्टिकाले तु मनसा निर्मित पुरा ॥२०
मानस नाम तीर्थं तु ऋषिभि पूजित पुरा ।
तत्र स्नाता दिव यान्ति ये मृतास्तेऽपुनर्भवा ॥२१

---

नेश्वरमागात्र -b) दे 7 जाविनु° (→जीवित°) -c) दे० 4 10 तो तु (→च) दे5-9 11 मुवे विष्णुलोकमवाप्नोति

९ -a) न2ते1 स्नानान (→स्नात्वा) -b) दे5-9 11 मवे °लोके (→°पृष्ठे), दे1 3 ममामन, दे6 7 प्रमोदते (→स मोदते)

१० दे2 10 ते1 १० b-११ a ○ -a) दे1 नाम** (→नागतीर्थ) -c) दे1 तत्र (→यत्र), न दे5 ( 1 मुवे स्नात्वा (- स्नाता) -d) दे6-9 मतास्तेन (दे6 7 °श्चेन)पुनभवा

११ ने2 10 ते1 a ○ (द्र १०पा वि ) -c) दे5 8-9 11 मुवे याति, दे6 यानि (→देवि) -d) दे1 3 4 स्वर्ग° (→सूर्य°), दे5 7 9 11 मुवे सूर्यलोक न सशय, दे6 सूर्यलोके महेयते -e) दे11*** (→मुञ्चते) -f ) दे6 मम लाकाय गच्छति

१२ -a) दे2 पुनरन्य (→पुनरन्यत्) -b) दे10 तद्विरणुष्व (→तच्छृणुष्व) -d) दे6 7 °लोकेऽपि, मुवे °लोकेषु (→°लोकेति), ते1 विसृतम (→विश्रुतम), दे1 3 ब्रह्मलोकमिति श्रुतम, दे4 ब्रह्मलोक स गच्छति

१३ -b) दे6 भुक्ता च, दे7 भूत्वा च (→नियतो) -d) दे5-9 11 मुवे मम (→विष्णु-)

१४ -a) ब3 दे1 3 5 8-11 मुवे ते1 °तीर्थे (→°तीर्थ), दे6 7 च (→तु) -b) दे1 पतित्वे (→पवित्रे) -c) दे1 सोमे, दे6 भूमे (→सोमो), दे3 4 यत्र मा पश्य सोमेति, मुवे यत्र पश्यति मा सोमो -d) दे6 7 °सस्थितौ (→°सस्थिते)

१५ -b) ब3**** प्रतिष्ठित, दे1 4 म्न म्न कमप्रतिष्ठित -c) दे7 मम (→सोम-), ब3 °लोकेषु (→°लोके तु) -d) मुवे एवमेव न सशय -e) दे5 ( 8 9 11 मवे अथात्र (→तत्राथ) -f) दे6 7 लोकाय (→लोक स)

१६ -a) दे1 4 पतित (→पतन) -c) दे1 3 4 यत्र (→तत्र), मुवे स्नातो (→स्नात्वा), 1 देवी (→देवि) -d) दे1 3 4 स्ववर्णोऽपि (- अवर्णोऽपि), दे3 पतिर् (→यतिर्)

१७ दे2 ते1 १७d-१८a ○ -a) न1 दे2 पुनरन्य (→पुनरन्यत्) -b) दे1 मथुरे, ते1 मधुरे (→माथुरे)

१८ न2 ते1 a ○ (द्र १७ पा वि ) -c) दे2 तथात्र, दे5-9 11 मुवे अथात्र (→तत्राथ) -d) दे6 लोकाय, दे7 लोक च, दे10 लोके स (→लोक स)

१९ दे6 7 १९b-२१a ○ (द्र स ), दे8 १९b-२० a ○ -a) दे6 7 दशा (दे6 चाश्वा) श्वमेधिक नाम -b) दे5 7 9 11 मुवे मुदा (→पुरा) -c) दे2 ते1 तत्र येषानि नयतस्

२० दे6 7 ○ (द्र १९ पा वि ), दे8 a ○ -b) दे8***** पूजितम्

२१ दे2 10 ते1 ab ○, दे6 7 a ○ (द्र १९पा वि) -c) दे1 स्नातो, दे स्थातो, मुवे स्नात्वा (→स्नाता), दे6 7 तत्र स्नानाभि (दे7°दि) चर्याभिर् -d) ब3 दे1 3 4 मृतास्तेन पुनभवा, दे8 ये मृतास्तु पुनभवा

तीर्थं तु विघ्नराजस्य पुण्य पापहर शुभम् ।
तत्र स्नातस्तु मनुजो गणेशेन न पीड्यते ॥२२
अष्टम्या च चतुर्दश्या चतुर्थ्या तु विशेषत ।
तस्मिस्तीर्थवरे स्नातो न पीडयति विघ्नराट् ॥२३
विद्यारम्भेषु सर्वेषु यज्ञदानक्रियासु च ।
करोत्यविघ्न वसुधे सतत पार्वतीसुत ।
तत्राथ मुञ्चते प्राणान् मम लोक स गच्छति ॥२४
तत पर कोटितीर्थ पवित्र परम शुभम् ।
तत्र वै स्नानमात्रेण गवा कोटि फल लभेत् ॥२५
तत्राथ मुञ्चते प्राणान् लोभमोहविवर्जित ।
सोमलोकमतिक्रम्य मम लोक स गच्छति ॥२६
अत पर शिवक्षेत्रमर्द्धक्रोश तु दुष्करम् ।
तत्र स्थितो हरो देवो मथुरा रक्षते सदा ॥२७
तत्र स्नात्वा च पीत्वा च माथुर लभते फलम् ।
अथात्र मुञ्चते प्राणान् मम लोक स गच्छति ॥२८

॥ इति श्रीवराहपुराणे भगवच्छास्त्रे द्वापञ्चाशदधिकशततमोऽध्याय ॥१५२॥

# १५३

श्रीवराह उवाच ।❀
पुनरन्यत् प्रवक्ष्यामि मर्त्यलोके सुदुर्लभम् ।
अनन्त विदित तीर्थमचल ध्रुवमव्ययम् ॥१
तत्र नित्य स्थितो देवि लोकाना हितकाम्यया ।
मा दृष्ट्वा मनुजा देवि मुक्तिभाजो भवन्ति ते ॥२
अयने विषुवे चैव सक्रान्तौ च वसुधरे । वे १५५ ३

२२ –c) ब3 दे2 यत्र (→तत्र), ब स्नातञ्च, दे2 4 ते1 स्नातश्च, दे7 स्नातस्य (→स्नातस्तु), ब3 मनुज (→मनुजो), दे5 9 11मुवे तत्र (द5मुवे यत्र) स्नातान्मनुष्याश्च (दे6 7°स्तु) –d) ब3 दे2 5 9 11 मुव ते1 विघ्नराजो (ब °जा, ते1 °जे) न पीडयेत, दे10 विघ्नराजो न जीजयेत

२३ –a) दे7 तु (→च) –b) दे10 चतुर्थ्य च (→ चतुर्थ्या तु) –c)दे4 तीथ, दे5 8 10 तीर्थे(→तीथ–), ब3दे6 मुवे स्नात, दे5 8 9 स्नातु, दे11 स्नान(→स्नातो) –d)दे11 त (→न)

२४ दे6 ef ○, दे7 f ○ –c) ब3 दे8 9 11 मुवे अविघ्न कुरुते तस्य (ब3 नित्य), दे2 10 ते1 अविघ्न करोति वसुधे –e) द7 तथात्र (→तत्राथ)

२५ दे1 3 4 6 7 ○ –a) मुवे परे (→पर) –b) दे5 8 9 11मुवे स्मृतम(→शुभम) –c) ब3 दे10 तत्रैव(→तत्र वै)

२६ दे1 3 4 ○, दे7 a○, दे8 bcd ○ –a) दे6 अथात्र, मुवे तथात्र (→तत्राथ) –b) दे10 मम लोक स गच्छति –c) ब सोमलोक परिक्रम्य –d) दे5-7 9 11 मुवे च (→स)

२७ दे1 3 4 8 ○ –b) ब3 सुदुष्कर, दे6 तु पुष्कर, दे7 च दुष्कर, दे10 सुच कर (→तु दुष्कर) –c) ब3 दे2 10 ते1 वरारोहे (→हरो देवो) –d) दे6 रक्ष्यते, दे7 रक्षता (→रक्षते)

२८ दे1 3 4 ○, दे8 abc ○ –a) ब3 दे10 दृष्ट्वा (→पीत्वा) –b) दे2 मथुरा, ते1 मधुरा (→माथुर) –c) ब3 तत्राथ (→अथात्र)

पुष्पिका—

**पुराणनाम**—दे6 ○, ब3 इत्यादि वाराहपुराणे भगवच्छास्त्रे मथुरामाहात्म्ये, दे1 2 5 8 11 ते1 इत्यादि वाराहपुराणे, दे 4 इत्यादि श्रीवाराहपुराणे भगवच्छास्त्रे, दे7 इति श्रीआदिवाराहपुराणे भगवच्छास्त्रे, मुवे इति श्रीवराहपुराणे मथुरामाहात्म्ये **अध्याय-नाम**—ब दे1 4 6 10 11ते1 यमुना (दे3°ना)तीथप्रभाव (दे1°व), दे5 9 यमुनातीथप्रभावो नाम अध्याय, दे7 यमुनातीथप्रवाहो नामाध्याय, दे8 यमुनातीथप्रभावो नामाध्याय, मुवे यमुनातीथप्रभावो नाम **अध्यायसख्या**—दे1 7 9 11ते1 ○, ब3 तृतीयोऽध्याय, दे8 ॥५७॥, मुवे चतुष्पञ्चाशदधिकशततमोऽध्याय ॥१५४॥

**१५३**

[ब1 2 अध्यायोऽय नास्ति]

❀ ब3 दे6 7 वराह उवाच, दे1 9 वाराह उ०, दे2 5 8 11 ते1 वाराह उवाच, दे3 4 10 श्रीवाराह उवाच

१ दे10 bcd ○ –a) दे2 पुनरन्य (→पुनरन्यत) दे10 पुनरन्य****

२ –a) दे6 7 नित्य– (→नित्य), दे1 देवी (→देवि) –c) दे1 या (→मा), दे1-3 10 मनुजो, दे6 मनुजा (→मनुजा) –d) दे6 मुक्तिर्भाजा (→मुक्तिभाजो), दे1 3 4 हि (→ते)

३ –a) द6 विषये (→विषुवे) –b) दे5-9 11 मुवे तथा

अनन्त तीर्थमासाद्य मुच्यते सर्वपातकै ।।३
अक्रूरे च पुन स्नात्वा राहुग्रस्ते दिवाकरे ।
राजसूयाश्वमेधाभ्या फल प्राप्नोति मानव ।।४
तीर्थराज हि चाक्रूर गुह्याना गुह्यमुत्तमम् ।
तत्फल समवाप्नोति सर्वतीर्थावगाहनात् ।
अस्मिस्तीर्थ पुरावृत्त तच्छृणुष्व वसुधरे ।।५
नाम्ना तु सुधनो नाम मम भक्त सदैव हि ।
धनधान्यसमायुक्तो बन्धुपुत्रसमन्वित ।।६
बन्धुपुत्रकलत्रैश्च गृहे वसति चोत्तमे ।
पुत्रदाराममत्वेन मम भक्तो वसुधरे ।।७
गच्छन्ति दिवसास्तस्य मासा सवत्सरास्तथा ।
करोति गृहकृत्यानि धनोपायेन नित्यश ।।८
मानकूट तुलाकूट न करोति स कर्हिचित् ।
एव च वसतस्तस्य बहवो वत्सरा गता ।।९
नित्यकाल च कुरुते हरे पूजनमुत्तमम् ।
पुष्पदीपप्रदानेन चन्दनेन सुगन्धिना ।।१०
उपहारेण दिव्येन धूपेन च सुगन्धिना ।
एकादश्या तु कुरुते पक्षयोरुभयोरपि ।
सोपवासस्तु वसुधे रात्रौ जागरण शुभम् ।।११
स गच्छति सदा कालमक्रूर चैव जागरे ।
स गत्वा नृत्यते सुभ्रु ममाग्रे चैव सर्वदा ।।१२
सुधनस्तु वणिक्श्रेष्ठ कदाचिद् रात्रिजागरे ।
गच्छमानो गृहीतस्तु चरणे ब्रह्मरक्षसा ।।१३
कृष्णवर्णो महाकाय ऊर्ध्वकेशो भयकर ।
पादे गृहीत्वा सुधन वचनं चेदमब्रवीत् ।।१४
राक्षसोऽह वणिक्श्रेष्ठ वसामि वनमाश्रित ।
त्वामद्य भक्षयिष्यामि तृप्ति यास्यामि शाश्वतीम्।।१५

विष्णुपदीपु च -c) दे5 9 11 मुवे अन त (दे6 °त) त समासाद्य

४ -a) द2 ता अक्रूरेति पुन स्नात्वा, दे5 9 11 मुवे अक्रूरेति च विख्यात

४ a, b मध्य दे5-9 11 मुवे अधिकम—

*मम क्षेत्र (दे8 9 11 °त्रे) वसुन्धरे तत्र स्नात्वा महाभागे ।

५ -a) द1 °राजस (→°राज), दे1 4 तथाक्रूर, द2 10 ता हि साक्रूर (→हि चाक्रूर) -c) दे5 8 9 11 मुवे तत्स्नानात्फलमाप्नोति, दे6 7 तत्र स्नाना समाप्नोति -d) दे5 9 11 प्रयागस्नानज (दे5 °त) फलम -e) द1 3 9 11 वृत्ते, दे11 दत्त (→वृत्त), द6 7 अस्मिस्तीर्थे तु यद्वृत्त

६ दे1 4 ○ -a) दे10 नाम्ना (→नाम्ना), ब3* स्तधनो, द5 तस्तवता, दे6 7 11 तु स्तवनो, दे8 तस्तस्ततो, दे10 तुस्तवना (→तु सुधनो) -b) दे7 भक्तो मम (→मम भक्त), दे10 मम भक्तस्तु सदैव हि -d) दे5 7-9 11 वधुयुक्त (दे5 °क्त) सदैव हि, दे6 चेदु युक्त स देवति मुवे सुतयुक्त सदैव हि

७ द1 3 4 ○ -a) दे7 युक्त (→बन्धु-), दे6 युक्त पुत्र कलत्रै च -b) दे6 गृही (→गृहे), दे5-9 11 मुवे गृहे प्रीतिरनुत्तमा (दे10 °मा) -c) दे5-9 11 मुवे पुत्रदारसमेतस्य -d) दे5 8 9 मम भक्तिर्, दे6 भक्तिभक्तिर्, दे7 11 मुवे मयि भक्तिर् (→मम भक्तो)

८ -a) दे6 दिवसस् (→दिवसास्) -b) दे5 6 8 9 मासा (→मासा), दे6 7 सवत्सरस् (→सवत्सराम्)

९ -a) ब3 मणिकूट, ते1 मानकुण्ड (→मानकूट), दे3 4 शिला° (→तुला°) -b) दे1 न* रोति, दे6 7 न चकार (→न करोति), दे1 3 4 च, ते1 न (→स) -c) दे2 ता1 तु द6 7 नि-(→च)

१० दे5 8 cd ○ -a) मुवे नित्य (→नित्य-), द1 तु (→च) -b) दे5 9 11 मुवे हरि- (→हरे)

११ द5 8 ○, ब3 दे7 ab○ -a) दे1 4 उपचारेण (→उपहारेण) -c) दे6, एकादशा (दे7 °श्या) च, ते1 एकादश्या* (→एकदश्या तु) -e) दे7 9 11 मुवे उपवास तु (दे7 प्र) कुरुते, दे6 तथावास प्रकुरुते -f) दे6 7 9 11 मुवे तथा (→शुभम)

१२ दे5 8 ab ○ -a) दे3 4 कदा, दे6 7 9 11 मुवे यथा (→सदा), दे6 7 काम (→काल) -b) दे2 ते1 जायत (→(→जागरे), दे6 9 11 मुवे अक्रूर तीर्थमुत्तमम् -c) दे2 सा (→स), दे2 ते1 नृपते (→नृत्यते), दे5 9 11 मुवे तत्रा (दे6 °त्र) गत्य ममाग्रेऽसौ, दे10 स गत्यानृतशुभ्रु -d) दे5-9 11 मुवे नृत्यते शुभदर्शन

१३ -a) द2 ते1 सुधनो वणिज श्रेष्ठ -c) दे1 3 4 नृत्य°, मुवे चल° (→गच्छ°) -d) दे3 °राक्षस, दे5 8 9 °राक्षसा (→°रक्षसा)

१४ -a) दे1 3 4 कृष्णकेशो, मुवे कृष्णवर्णो (→कृष्णवर्णा), ब3 महा**, दे2 महाकाय, दे3 4 6 7 महाकाय (→महाकाय) -c) दे3 पाद (→पादे), दे2 5-9 11 मुवे ते1 वसुधे (→सुधन) -d) दे2 5-9 11 मुवे ते1 इद वचनमब्रवीत्

१५ ब3 ○ -c) दे10 त्वामाद्य (→त्वामद्य) -d) ते1 शाश्वतम (→शाश्वतीम्)

सुधन उवाच ।❀

प्रतीक्षस्व दिन मेऽद्य दास्यामि तव पुद्गलम् ।
भक्षयिष्यसि मे गात्र मिष्टान्नपरिपोषितम् ।।१६
जागर देवदेवस्य कर्त्तुमिच्छामि राक्षस ।
मम व्रत सदा देवभक्त्या जागर्त्ति चक्रिणे ।।१७
तत्र जागरण कृत्वा प्रभाते तव सन्निधौ ।
आगमिष्याम्यह शीघ्रमादित्योदयन प्रति ।
पश्चात् खादसि मे गात्र जागराद् विनिर्वात्तत।।१८
विष्णो सतोषणार्थाय ममैतद् व्रतमुत्तमम् ।
मा रक्षो व्रतभङ्ग हि देव नारायण प्रति ।
जागरे विनिवृत्ते तु मा भक्षय यथेप्सितम् ।।१९
सुधनस्य वच श्रुत्वा ब्रह्मरक्ष क्षुधार्दित ।
उवाच मधुर वाक्य वणिज तदनन्तरम् ।।२०
मिथ्या प्रभाषसे साधो त्व पुन कथमेष्यसि ।
को हि रक्षोमुखाद् भ्रष्टो मानुषो यो निवर्त्तते।।२१
राक्षसस्य वच श्रुत्वा स वणिग्वाक्यमब्रवीत् ।
सत्यमूल जगत्सर्व सर्व सत्ये प्रतिष्ठितम् ।।२२
यद्यह च वणिक् पूर्व कर्मणा न हि दूषित ।
प्राप्तश्च मानुषो भावो विहितेनान्तरात्मना ।।२३
श्रृणु मत्समय रक्षो येनाह पुनरागमम् ।
कृत्वा जागरण तत्र नर्त्तयित्वा यथा सुखम् ।
पुनरेष्याम्यह रक्षो नासत्य विद्यते मयि ।।२४
सत्यमूल जगत्सर्व सर्व सत्ये प्रतिष्ठितम् ।
सिद्धि लभन्ति सत्येन ऋषयो वेदपारगा ।।२५
सत्येन दीयते कन्या सत्य जल्पन्ति ब्राह्मणा ।
सत्य वदन्ति राजान सर्व सत्ये प्रतिष्ठितम् ।।२६ वे १५५

---

❀ ब3 दे7 ते1 ○, दे1 सुधनु उ०, दे5 8 धन उवाच दे6 10 सुधनु (दे10 °नु), दे7 स्वधनो

१६ ब3 ab ○ –a) दे1 7 धन, दे वन, मुवे क्षण (→दिन), दे4 प्रीतीक्ष वचन मेद्य –b) दे6 मगलम, दे, 9 मुदगलम मुवे पुष्कलम (→पुद्गलम), दे1 3 4 10 ते1 तव दास्यामि पुष्कलम (दे10 मुदगलम) –c) दे2 गात्र–, दे10 यात्र, दे11 मात्र (→गात्र), ब3 दे7 भक्षयिष्यामि ते (दे7 मे) गात्र –d) दे3 4 °शोषितम (→°पोषितम)

१७ –a) दे10 जागरण देवदेवे –b) दे3 4 कथम (→कर्त्तुम), दे3 6 8 राक्षस (→राक्षस), दे10 (नरा) कर्त्तुमिच्छामि गप्यसा –c) दे2 10 सदा देवि, दे5-9 11 मुवे सा(दे6 7 स)वकाल (→सदा देव–) –d) ब3 –भक्त्या नागर चक्रिशि, दे5 9 11 मुवे यज्जागर्मि हरे पुर (दे7 °न)

१८ –a) ब दे1 4 10 रात्रौ (→तत्र) –b) दे1 3 4 प्रभाते सन्निधौ तव –e) दे पश्य खादसि मे गात्र, दे4 पश्चात खादय मे गात्र, दे5 9 11 मुवे तत खादिष्यसे गात्र –f) दे3 °र्वात्तितु (→°र्वात्तितम्), दे1 जागराद्धि निवर्त्तितु, दे5 7 9 11 मुवे विनिवृत्त (दे5 °ष्ट) स्य जागरात, दे8 विनिविष्टस्य जागरात

१९ –a) दे5-9 11 मुवे विष्णुतुष्ट्यै (दे6 °ष्टौ) व्रतमिद, –b) दे5-9 11 मुवे आरब्ध सवकामदम –c) दे2 मा रक्षो, दे5 7 9 11 मुवे मा कुरु, दे6 सा कुरु (→मा रक्षो), दे5 9 11 मुवे मे (→हि) –d) ब3 विष्णु (→देव), दे5-9 11 मुवे रक्षो नारायणस्य हि –e) ब3 दे2 3 ते1 जागरे विनिवर्त्ते तु

२० –a) दे7 स्वधनस्य (→सुधनस्य) –b) दे5 8 11 क्षुधार्दितम दे6 7 क्रुधार्दित (दे7 °तम) (→क्षुधार्दित) –d) दे5 9 11 मुवे वणिज प्रतिसादरम

२१ –a) ते1 मिथ्या (→मिथ्या) –d) ब3 विनिवत्तते (→यो निवत्तते)

२२ –a) दे4 10 राक्षस्यस्य (→राक्षसस्य) –b) ब3 सुधनो (→स वणिग) –c) दे7 सत्यामूल (→सत्यमूल) –d) दे4 सत्यसर्वे, दे5 9 मवसत्ये, दे6 7 सत्ये सव (→सव सत्ये)

२२ श्लोकानन्तर दे5-9 11 मुवे अधिकम—
सिद्धि लभन्ते सत्येन ऋषयो वेदपारगा । (=२५cd)

२३ –a) दे6 7 सत्य (→पूव) –c) ते1 भावे (→भावो) –d) दे10 विहते°, ते1 विदते° (→विहिते°)

२४ दे7 bcd ○ –a) ब3 तत, दे1 3 4 ते1 यत् (→मत), दे10 यश्शृणु यन्समय रक्षो –c) दे1 10 दत्वा (→कृत्वा), दे4 तत्रा (→तत्र) –d) ब3 दे3 वतयित्वा, दे5 6 8 9 11 मुवे नृत्य (दे6 °त्त) कृत्वा (→नतयित्वा) –e) दे6 पुनरेष्यामहे (→पुनरेष्याम्यह)

२५ दे5-9 11 मवे ○, ब3 ab ○ –a) दे4 सत्य मूला (→सत्यमूल) –b) दे4 सव सत्य, दे10 सर्वे सत्य (→सव सत्ये) –c) दे2 ते1 लभेत (→लभन्ति) –d) दे3 देव° (→वेद°)

२६ –a) दे6 10 स तेन (→सत्येन) –b) दे1 3 4 वाडवा, दे6 ब्राह्मण (→ब्राह्मणा) –c) दे5 मुवे सत्योत्तीर्णा हि, दे6-9 11 सत्यात्तीर्णा हि (→सत्य वदति) –d) दे5-9 11 मुवे सत्येन वसुधा धता, ते1 सत्य सत्येन श्रेष्ठितम्

सत्येन गम्यते स्वर्ग मोक्ष सत्येन गम्यते ।
सत्येन सूर्यस्तपति सोम सत्येन राजते ।।२७
यम सत्येन हरति सत्यादिन्द्रो विराजते ।
[वरुणश्च कुबेरश्च तौ च सत्ये प्रतिष्ठितौ ।।२८
न चासत्य वदिष्यामि ब्रह्मराक्षस मे व्रतम् ।
तत् सत्य मम नश्येत यद्यह नागमे पुन ।।२९
परदारास्तु यो गच्छेत् काममोहप्रपीडित ।
तेन पापेन लिप्येऽह यद्यह नागमे पुन ।।३०
गत्वा रजस्वला नारी काममोहप्रपीडित ।
तेन पापेन लिप्येय यद्यह नागमे पुन ।।३१
दत्त्वा च भूमिदान तु अपहार करोति य ।
तेन पापेन लिप्येऽह यद्यह नागमे पुन ।।३२
पूर्वभुक्ता स्त्रिय चैव आत्मीया च सुसहिनाम् ।
वर्जयन्ति च ये द्वेषात् तेषा पाप भवेन्मम ।।३३
पाकभेद तु य कुर्यादात्मनो हि परस्य च ।
तेन पापेन लिप्येऽह यद्यह नागमे पुन ।।३४
अमावस्या महारक्ष श्राद्ध कृत्वा स्त्रिय व्रजेत् ।
तेन पापेन लिप्येऽह यद्यह नागमे पुन ।।३५
षष्ठ्यष्टमी अमावास्या उभे पक्षे चतुर्दशी ।
अस्नातो या गति गच्छेद् यद्यह नागमे पुन ।।३६
भार्या विसृज्य वसुधे शिष्ट गच्छति निर्घृण ।

२७ –a) ब13 स्वर्गा (→स्वग), दे5 8 9 11 स्वग गच्छन्ति सत्यन, मुवे स्वगमिच्छन्ति सत्यन –b) ब3 दे1 3 4 7 9 11 मुवे माक्ष, द1 6 8 माक्ष–(→माक्ष), द2 1 प्राप्यते, दे5 9 11 मुवे लभ्यत (→गम्यत) –d) ब3 सत्येन सोमो विज*, दे2 10 ते1 सत्य (दे10 °त्ये) सोमे विराज (ना °जि) न

२८ द2 ना bcd○, दे5-9 11 मुवे cd ○ –b) दे1 यदिद्रसत्यराजत –c) दे3 वरुणस्य कुबरस्य –d) दे10 ते (→तौ)

२९ दे2 ता abc ○, ब cd○, दे5-9 11 मुवे ab○ –b) ब3 ब्रह्मराक्षसमद्भुत, दे10 ब्रह्मराक्षसतद्व्रतम –c) दे1 4 वदामि चव ते सत्य, द7 तत्सत्य समनुज्ञाते, द10 नाम्नाश्यामि चव सत्य तु –d) दे2 ते1 नागम, दे3 नागमेन, दे4 नागमत (→नागमे)

३० दे10 ○ –a) ब3 दे2 गत्वा च परदारा च (ब3तु), दे1 3 4 गत्वा तु (दे4च) परदारा तु, द6-9 11 परदारा (द6 7°र) तु यो गच्छेत्, ते1 गत्वा च परदाराश्च –c) दे5-9 11 मुवे तस्य (→तेन), दे5 ते1 लिप्येत (→लिप्येऽह) –d) ब3 दे2 3 ते1 नागम, दे4 नागमेत् (→नागमे), दे5-9 11 मुवे यदि नायामि ते पुर.

३१ दे1 3 10मुवे ○, दे4 cd ○. –a) दे4 गत्वा च परदारा तु, दे5-9 11 यो वै रजस्वाला गच्छेत् –c) दे6 तस्य (→तेन), दे6 7 लिप्येह (→लिप्येय) –d) ब3 दे2 ते1 नागम (→नागमे), दे5-9 11 ते1 यदि नायामि ते पुन (दे4°र, दे8 9°र)

३२ दे10 ○, दे6 cd ○. –a) ब3 चान्नञ्च, दे2 ते1-दान च, दे5 8 9 11 मुवे –दान यो, दे6 –दान ये, दे7 –दानो ये (→–दान तु). –b) दे2 ते1 अपकार करोति च, दे5 8 9 11 मुवे ह्यपकार करोति च, दे6.7 ह्यपहार करोति वै –c) दे2 5 8 9 11 ते1 लिप्येय (→लिप्येऽह) –d) दे2 ते1 नागम, दे3 4 नागमेत् (→नागमे), दे7 यदि नायामि ते पुन

३३ दे11 d ○ –a) ब3 पूवभक्ता, द1 पूवाभक्ता, द2 पूवभक्ता, दे पूर्वाभुक्त्वा, द4 पूव भुक्ता, दे पूव भुक्ता, दे7-9 11 मुवे पूव भुक्त्वा, ते1 पूवभुक्ता (→पूवभुक्ता), दे2 ता स्त्रिया य तु, दे3 4 स्त्रिया चैव, दे5 9 11 मुवे स्त्रिय यस्तु (→स्त्रिय चैव) –b) ब3 दे2 10 ते1 आत्मीय (ब °या) सुममाहितम (ब °ता), दे4 अत्मा य वसुसहिता, द5 9 11 मुवे सुसमाप्य विहृत्य च –c) द5 8 9 मुवे द्वेषात्ता यदि चेज्जह्यात, द6 7 द्वेषात्तामथ चेज्जह्यात, दे11 द्वेषात्ता यदि*** –d) दे5 - 9 मुवे तस्याघ मे भवत्वलम्, दे6 तस्याघ्योमेभवत्तल, द10**पाप भव मम

३४ दे11 abc ○, दे6 d ○ –a) दे5 9 मुवे पक्ति-भेद (दे6 7 °द) (→पाकभेद), ब3 हि, दे3 च (→तु) –b) दे1 3 4 तु (→च), दे5 9 मुवे एकपक्त्याशिना (दे6 °ना, दे7 °न) त्रुवम् –c) दे5 8 9 मुवे तस्य (→तेन), दे3 लिप्याह, दे6*** (→लिप्येऽह) –d) ब3 दे2 3 ते1 नागम (→नागमे), द5 8 9 मुवे नागन्तायदि ते पुर (दे8 °न ), द7 यदि नायामि ते पुन

३५ –a) दे1-3 8 9 ते1 अमावास्या (दे9 °स्या) (→अमा-वस्या), दे1 5 8 9 ते1 महारक्ष (→महारक्ष ), दे6 7 श्राद्ध कृत्वा तु भुक्ता वै –b) दे6 7 यो रात्रौ तु (→श्राद्ध कृत्वा), दे1 3 4 व्रजेत्स्त्रिय (→स्त्रिय व्रजेत्) –c) ब3 दे5 8-11 लिप्येय (→लिप्येऽह) –d) ब3 दे2 10 ते1 नागम, दे3 4 नागमेत (→नागमे)

३६ –a) दे1 मुवे अष्टाष्टमी (→षष्ट्यष्टमी), ब3 दे2 5-9 11 मुवे ते1 त्वमावास्या (दे6 8 11 ते1 °स्या) (→अमावास्या) –b) ब3दे2 11 ते1 चतुर्दशी (→चतुदशी) –c) दे2 5-9 11 ते1 अस्नाताना (दे2 ते1 या) गति गच्छेद् –d) दे2 8 ते1 नागम, दे3 नागमेत (→नागमे), ब3 सा गतिर्वै भवेन्मम –cd) मुवे अस्नाताना गति यास्याम्यह वै नागमे पुन

३७ दे5-9 11 मुवे ○ –a) ब3 स्वीया भार्या परित्यज्य,

**तेन पापेन लिप्येय यद्यह नागमे पुन ।।३७**
**गुरुपत्नी राजपत्नी योऽभिगच्छति मोहित ।**
**तेन पापेन लिप्येय यद्यह नागमे पुन ।।३८**
**दास्यामीति वचश्चोक्त्वा नैव दद्यात् कथचन ।**
**तेन पापेन लिप्येय यद्यह नागमे पुन ।।३९**
**यस्तु कन्या सकृद्दत्वा अन्यस्मै य प्रयच्छति ।**
**तेन पापेन लिप्येय यद्यह नागमे पुन ।।४**
**घातकाना च ये लोका ये लोका मित्रघातिनाम्।**
**तेषा गति प्रपद्येय यद्यह नागमे पुन ।।४१**
**ब्रह्मघ्ने च सुरापे च चौरे भग्नव्रते तथा ।**
**तेषा गति प्रपद्येऽह यद्यह नागमे पुन ।।४२**
**श्रीवराह उवाच । ❀**
**सुधनस्य वच श्रुत्वा सतुष्टो ब्रह्मराक्षस ।**
**उवाच मधुर वाक्य गच्छ शीघ्र नमोऽस्तु ते ।।४३**
**ब्रह्मराक्षसमुक्तोऽसौ वणिजो विधिनिश्चय ।**
**पुनर्नृत्यति चैवाग्रे मम भक्तिव्यवस्थित ।।४४**
**अथ प्रभातसमये नृत्यविक्षेपकोविद ।**
**नमो नारायणायेति उच्चार्य च पुन पुन ।।४५** वे १५१ ४७

दे1 4 10 सरयुभार्या विसृष्टा हि, दे2 भार्यामित्रभार्याव –b) ब3 योभिगच्छति पुश्चली, दे1 3 4 10 योभि (दे10 हि) गच्छति निघण –c) दे1 3 4 लिप्येह् (→लिप्येय) –d) ब3 दे9 ते1 नागम (→नागमे)

३७ श्लोकात्पर ब अधिकम—
सरयुभार्या विसृष्टा हि योभिगच्छति निघण ।
तेन पापेन लिप्येय यद्यह नागम पुन । ( = ३७)

३७ श्लोकात्पर दे5 9 11 मुवे अधिकम—
*गुरोर्भ्रातु सुतस्यापि सरयुर्वै मातुलस्य च ।
पितव्य यो गच्छेन्मोहेन हि विमोहित ।
अभिगच्छति मन्दात्मा त पाप मे भवेत्तदा ।
[–2 दे6 7 11 पितव्यस्य च पत्नी यो मोहेन हि विमोहित ]

३८ दे6 dO –a) दे1 3 9 11 मुवे राजपत्नी (→गुरुपत्नी), दे1 3 4 गुरो (दे1 °रु) पत्नी, दे5-8 9 11 मुवे ब्रह्मपत्नी (→राजपत्नी) –b) दे1 मोदित (→मोहित ), दे5-9 11 मुवे विधवा योऽभिगच्छति –c) दे5 9 11 मुवे तस्य (→तेन), दे1 -5 8 9 11 मुवे लिप्येह, दे7 लिप्यामि (→लिप्येय) –d) ब3 दे2 ते1 नागम, दे3 4 नागमेत (→नागमे), दे5 8 9 11 यदि नायामि तेतिकम्

३९ ते1 cd O, दे6 dO –a) ब3 ते1 घा(ते1 पा) तकानाञ्च ये लोका, दे11 मुवे यस्तु कन्या सकृद्दत्वा –b) ब3 ते1 ये लोका मित्रघातिनाम, दे11 मुवे अन्यस्मै चेत्पुनददेत –c) दे5-9 मुवे तस्य (→तेन), दे1 3 4 मुवे लिप्येह, दे6***, दे7 लिप्यामि (→लिप्येय), ब3 तेषा गति प्रपद्येह् –d) ब3 दे2 नागम, दे3 4 नागमेत (→नागमे)

३९ श्लोकात्पर दे5-9 11 मुवे अधिकम—
*राजयाजकयाज्याश्च ये च व (दे6 7 चैव) ग्रामयाजका ।

४० ब3दे2 6 7 11मुवे ते1 O, दे1 cdO –b) दे5 8 9 चेत पुनददेत (→य प्रयच्छति) –c) दे 4 9 लिप्येह (→लिप्येय)

४१ ब3 दे6 O, दे1 2 7 9 11 मुवे ते1 ab O, दे10 cd O –ab) दे5 8 10 यस्तु कन्या सकृद्दत्वा अन्यस्मै चेत्पुन ददेत (दे10 य प्रयच्छति) –c) दे3 4 प्रपद्येह (→प्रपद्येय), दे1 5 7-9 11 मुवे तेषां (दे1 °न) पापेन लिप्येह (दे5 8 9 11 °य) –d)दे2ते1 नागम, दे3 4 नागमेत (→नागमे) दे7यद्यनायामि ते पुन

४२ –b) दे7 10 भग्ने (→भग्न–), दे5 9 11 मुवे शठे (→तथा), ब3 गोघ्ने भग्नव्रते तथा, दे1 3 4 गुरुनारी गमे तथा –c) दे5 9 11 मुवे या गतिस्ता (→तेषा गति), दे5 8-11 प्रपद्येय (→प्रपद्येऽह) –d) ब3 दे2 10 ते1 नागम, दे 4नागमेत(→नागमे)

❀ ब3 दे2 6 7 ते1 वराह उवाच, दे1 5 8 9 11 वाराह उवाच, दे3 4 10 श्रीवाराह उवाच

४३ –a) दे7 स्वधनस्य, दे10 सुधन्यस्य (→सुधनस्य), दे10 वचन (→वच ) –b) ते1 °रक्षस (→°राक्षस )

४४ –a) दे1 चोक्तोसौ, दे2ते1 –मुक्तो वै (→–मुक्तोऽसौ) –b) दे1-4°निश्चित (→°निश्चय ), दे5-9 11 मुवे वणिक तु (दे6 7 स, दे8 11 सु) दृढनिश्चय –c) ते1 वै चाग्रे(→चैवाग्रे) –d)ब3 दे3 4 10 भक्त्या, दे1 भक्ता, मुवे भक्तो, दे5 7-9 11 भक्तौ (→भक्ति–)

४४ b चरणानन्तर दे6 7 अधिकम—सूत उवाच ।

४५ –b) दे1 °चिक्षेप–, दे2 °चित्ते*, दे5 8 9 11 मुवे °चित्तोति–, दे7 °गीतादि–, ते1 °चित्ते स (→°विक्षेप–), दे6नृतु गीतादि कोटित –c) दे5 8 9 11 मुवे पुन पुनर्वै उच्चाय दे6 7 पुन पुन समुच्चाय –d) दे5 9 11 मुवे नमो नारायणाय च

निवृत्ते जागरे सोऽथ कालिन्दीसलिले प्लुत ।
दृष्ट्वा मा दिव्यरूप तु गतोऽसौ मथुरा पुरीम् ॥ ४६
दृष्टश्चाग्रे त्वह तेन पुरुषो दिव्यरूपधृक् ।
स च पृष्टो मया देवि क्व भवान् प्रस्थितो द्रुतम् ॥४७
पुरुषस्य वच श्रुत्वा सुधनो वाक्यमब्रवीत् ।
अह गच्छामि त्वरितो ब्रह्मराक्षससन्निधौ ॥ ४८
निवारयामास स तदा न गन्तव्य त्वयाऽनघ ।
जीवतो धर्ममाहात्म्य मृते धर्म कुतो यश ॥ ४९
पुरुषस्य वच श्रुत्वा स वणिग्वाक्यमब्रवीत् ।
न चासत्य वदिष्यामि यास्ये राक्षससन्निधौ ॥ ५०
ब्रह्मराक्षसमासाद्य सत्यवाक्यपरायण ।
उवाच मधुर वाक्य तत्र राक्षसससदि ॥ ५१
आगतोऽह महाभाग नर्त्तयित्वा यथासुखम् ।
विष्णवे लोकनाथाय मया दत्त हि जागरम् ॥ ५२
इद शरीर मे रक्षो भक्षयस्व यथेप्सितम् ।
यथान्यायविधानेन यथा वा तव रोचते ॥ ५३
नोक्तपूर्वं मयाऽसत्य कदाचिदपि राक्षस ।
तेन सत्येन मा भुङ्क्ष्व ब्रह्मराक्षस दारुण ॥ ५४
वणिजस्य वच श्रुत्वा ततोऽसौ ब्रह्मराक्षस ।
उवाच मधुर वाक्य सुधन तदनन्तरम् ॥ ५५
साधु तुष्टोऽस्मि भद्र ते सत्य धर्म च पालितम् ।
वणिजश्चातिविज्ञश्च यस्य ते बुद्धिरीदृशी ॥ ५६
जागरस्य समस्तस्य मम पुण्य प्रयच्छ वै ।
तस्य पुण्यप्रभावेन यथाऽह मुक्तिमाप्नुयाम् ॥ ५७

सुधन उवाच । ❀

नाह ददामि ते पुण्य नृत्यस्य नरभोजन ।
अर्द्धं वाऽद्य समस्त वा प्रहर चार्द्धमेव वा ॥ ५८
सुधनस्य वच श्रुत्वा प्रब्रवीद् ब्रह्मराक्षस ।
एकनृत्यस्य मे पुण्य देहि त्व शूद्रसत्तम ।

---

४६ -b) ब3 दे1 3 4 कालिन्द्या (→कालिन्दी–), दे9 10 ते1 –सलिले प्लत, दे5-9 11 मुवे –सलिलाप्लुत (→–सलिले प्लुत) -c) दे1 दृष्टवा दे, दृष्ट्वे, दे– द्रष्ट दे9 दृष्टा (→दृष्ट्वा), ब3 च (→तु)

४७ -a) दे 10 दृष्टा चाग्रे, दे ते1 पृष्टश्चाग्रे, दे3 4 दृष्ट्वा चाग्र (→दृष्टश्चाग्रे) -b) दे9 -11 मुवे ते1 °रूपवान् (→°रूपधृक) -c) ब स सपृष्टो, दे8 स्व च पृष्टो, दे10 स च दृष्टो (→स च पृष्टो) दे1 देवीं, दे7 देव (→देवि) -d) दे1 3 4 त्वमद्य (→क्व भवान्), दे1 हृतम, दे4 7 ध्रुतम् (→द्रुतम)

४८ दे6 7 bcd ○ -c) दे1 3 4 त्वरित (→त्वरितो)

४९ दे6 7 ○ -c) दे2 10 ते1 जीवितो (→जीवतो) -d) ब3 दे5 11 मुवे धर्म (→धर्म), दे1 3 4 मृते धर्म यश कुरु (दे4 °त )

५० दे6 7 a ○ -c) दे2 5-9 11 मुवे तत्र सत्य (→न चासत्य) -d) दे6 7 गत्वा (→यास्ये)

५१ दे5 8 मुवे ○ -d) ब3 दे9 11 °सन्निधौ (→°ससदि)

५२ -a) ब3 दे1 4 10 आगतोस्मि (→आगतोऽह), ब3 दे1 7 महाभागे (दे4 °ग) (→महाभाग) -b) दे1 3 4 सुख तत्र (→यथासुखम्) -d) दे5-9 11 अर्पिता (दे6 7 11 °तो) हरि जागर, मुवे चागतो हरि जागरात

५३ -b) दे1 भक्ष्यश्च, दे10 द्रक्षयास्व (→भक्षयस्व) -c) ब3 दे5-9 11 मुवे °न्याय (→°न्याय–)

५४ -c) ब3 दे1 4 10 मे भुङ्क्ष्व, दे, मा भक्ष्व, दे6 मा भुक्त्वा (→मा भुङ्क्ष्व) -d) दे8 दारुण, दे10 दारुणा (→दारुण)

५५ -a) ब दे3 5 9 11 मुवे वणिजस्तु (→वणिजस्य) -b) दे7 गतोसौ, दे10 तत्वोसौ (→ततोऽसौ)

५५ श्लोकस्य b चरणात्पर दे6 7 अधिकम्–ब्रह्मराक्षस उवाच ।

५६ -b) दे1 धर्मे च, दे5-9 11 मुवे धर्मश्च (→धर्म च), दे4 9 11 मुवे पालित (→पालितम) -c) ब वणिजस्यति विज्ञस्य, दे1 3 4 वणिजश्च विधिज्ञश्च, दे5-9 11 मुवे वणिक त्व चातिविज्ञस्तु (दे6 7 धीरस्तु), ते1 वणिजस्यातिविज्ञस्य -d) दे5 8 9 11 मुवे गति°, दे6 7 मति° (→बुद्धि°)

५७ -a) दे6 मतस्तस्य (→समस्तस्य) -b) दे3 प्रयच्छत, ते1 प्रयच्छति (→प्रयच्छ वै) -c) दे7 9 11 मुवे ते1 सत्य–, दे4 तस्या (→तस्य), ब3 मुवे °प्रभावेण (→°प्रभावेन) दे1 10 °माप्नुयात (→°माप्नुयाम)

❀ दे7 सुधनोवाच

५८ -a) दे7 मुवे दास्यामि (→ददामि), ब नाह ददामि नृत्यस्य -b) ब3 पुण्य ते, दे6 नृतस्य, दे7 नृत्तस्य (→नृत्यस्य), दे5 8 °भोजन, दे10 °भोजन (→°भोजन) -c) ब3 दे6 7 मुवे वाथ समस्त, दे1 3 4 वा तत्समस्त, दे10 वाच्य समस्त (→वाऽद्य समस्त) -d) दे5 8 9 11 प्राहर (→प्रहर), दे6-8 10 11 वार्ध° (→चार्ध°), दे1-4 10 च (→वा)

५९ -a) ब3* ब्रवीद्, दे1 4 चाब्रवीद्, दे2 नाब्रवीद्, दे3

सुधन उवाच ।❁

नाह दास्यामि ते पुण्य यथोक्त च समाचर ॥५९
केन त्व कर्मदोषेण राक्षसत्वमुपागत ।
यत्ते गुह्य महाभाग सर्व तत्कथयस्व मे ॥६०
सुधनस्य वच श्रुत्वा विहसित्वा तु राक्षस ।
कि त्व मा च न जानासि प्रतिवासी ह्यह तव ॥६१
अग्निदत्तस्तु वै नाम छन्दोगो ब्राह्मणोत्तम ।
इष्टकास्तु हरन्नित्य पारकीयास्तु सर्वदा ।
हृतास्तु गृहकामेन राक्षसत्वमुपागत ॥६२
मया त्व हि यथाप्राप्त उपकार कुरुष्व मे ।
एकविश्रामपुण्य मे देहि त्व शूद्रसत्तम ॥६३
कृपया तु समायुक्तो स वणिग् वाक्यमब्रवीत् ।
दत्त्वा दान तु नृत्यस्य एकविक्षेपकस्य तु ।
एकनृत्यप्रभावेन राक्षसो मुक्तिमाप्नुयात् ॥६४

श्रीवराह उवाच ।❁

सुधनस्तु ततो देवि विश्वरूप जनार्दनम् ।
अग्रतस्तु स्थित देव दृष्ट्वाऽसौ धरणी गत ॥६५
उवाच मधुर वाक्य देवदेवो जनार्दन ।
चतुर्भुजो दिव्यतनु शङ्खचक्रगदाधर ॥६६
विमानवरमारुह्य मम लोक व्रजस्व च ।
इत्युक्त्वा माधवो देवि तत्रैवान्तरधीयत ॥६७
सुधन सशरीरोऽपि सकुटुम्बो दिव ययौ । वे १५ ७०

---

वाब्रवीद, दे7 प्रोवाच, मुवे अब्रवीद ते1 सोब्रवीद (→प्रब्रवीद), दे6 प्रोवाच ब्रह्मसत्तम -c) ब3 एक (→एक-) -d) दे5 9 11 मुवे दद (→देहि), दे5 8 9 11 वणिजोत्तम, दे6 7 मनुजोत्तम, मुवे वणिगुत्तम (→शूद्रसत्तम)

❁ दे1 4 7 ○

-f) दे2 10 ते1 समीहितम (→समाचर)

६० -a) दे2 ते1 यम° (→कम°) -b) दे10 रक्षसत्व मुपागता -c) दे2 °महाभागे (→°महाभाग) -d) ब3 सवञ्च (→सव तत)

६१ -b) ब3 विहसित्वा च, दे6 7 विहस्य स तु, मुवे विहसित्वाह (→विहसित्वा तु) -c) दे4 त्वा, दे6 त (→त्व) दे6 7 न (→च), दे2 10 ते1 न जानामि, दे5-9 11 मुवे विजानासि (→न जानासि) -d) दे1 3 5 9 मुवे प्रतिवासि, दे7 पतिवासे, ते1 प्रतिनाशा (→प्रतिवासी), दे6 प्रत्यवासीत्यह तव

६२ दे8 ○, ब3 d ○ -b) ब3 दे3 6 7 10 11 छदोगी, दे1 छदोगा, दे4 छदो*, दे5 छदोगा, मुवे छान्दसो (→छन्दोगो), दे2 °त्तम (→°त्तम) -c) दे3 इष्टकाष्ट-, दे6 द्रष्टतस्तु, दे10 इष्टकामस्तु, मुवे इष्टकास्तु (→इष्टकास्तु), दे4 इष्टकाष्टहर नित्य -d) दे1 पारका यास्तु, दे2 पराकीयास्तु, दे5 9 11 ते1 परकीयास्तु, दे6 परिकीयस्तु, दे7 परधीयास्तु, मुवे परकीयाश्च (→पारकीयास्तु) -e) ब3***, दे5 8 11 धतास्तु, दे6 7 मृतस्तु, दे9 मृतास्तु, मुवे ते1 मृतस्सु (→हृतास्तु)

६३ -a) दे3 4 -प्राप्त, दे6 प्रात, दे8-प्राप्य, दे10 -प्राप्ता (→-प्राप्त) -b) दे4 उपकार तथा कुरु -c) दे6 7 एक(→एक-) -d) ब3 देवि त्व, दे6 देहित्वे (→देहि त्व), दे3 10 शूद्रसत्तम, दे5-9 11 वणिजोत्तम, मुवे वणिगुत्तम (→शूद्रसत्तम)

६४ -b) दे5 9 11 मुवे वणिग्वचनमब्रवीत -ab) ब3 कृपय*********** ब्रवीत -c) दे5-9 11 मुवे साधु राक्षस दत्त ते -d) दे1 3 4 चित (→तु), दे5 8 11 मुवे एकनृत्य मया तव, दे6 7 एकव (दे7 °न) त्तफल मया -e) दे4 एकनित्य°, दे6 एकवृत्त°, दे7 एकनत्त° (→एकनृत्य°), ब3 मुवे °प्रभावेण (→°प्रभावेन) -f) दे5-9 11 मुवे आगत (→आप्नुयात)

६४ श्लोकस्य b चरणानन्तर दे6 7 अधिकम—सुधन उवाच

❁ ब3 दे2 6 7 वराह उवाच, दे1 5 8 11 ते1 वाराह उवाच, दे3 4 10 श्रीवाराह उवाच, दे9 वाराह उ०

६५ ब3 b ○ -a) दे1 देवी (→देवि) -b) दे1 4 स्व रूप तु (→विश्वरूप) -c) दे10 अनतस्तु (→अग्रतस्तु) ब3 दष्ट्वा (→देव) -d) दे4 5 6 दष्टासौ (→दृष्ट्वाऽसौ)

६६ -a) दे6 7 तस्योवाच तदा वाक्य -c) दे6 देवि (→दिव्य-)

६७ ब3 a ○ -a) दे4 विमान (→विमान-), दे6 विमनोपरमारुह्य, दे10 विमानवर मारूढ -b) दे1 व्रजस्व तु दे3 4 व्रजस्य तु, दे6 7 व्रजेति च (→व्रजस्व च), ब3****व्रजस्व च, दे10 मम लोके प्रजस्व व -c) दे6 10 इत्युक्ता (→इत्युक्त्वा), दे5 7 9 11 मुवे देवस दे6 देवास (→देवि) -d) दे1 °धीयते, दे4 8 10 °धीयत (→°धीयत)

६८ ब3 d ○ -a) दे1 3 सुधनस्य, दे6 सुधन सु- (→सुधन स-) -b) दे10 शकुदो वा (→सकुटुम्बो), ब3 दे1 3 4 वसुधरे (→दिव ययौ) -d) दे1 3,4 10 विष्णुलोक, दे6 मम लोक,

७० विमानवरमारुह्य विष्णोर्लोक ततो गत ।
एष तीर्थप्रभावो वै कथितस्ते वसुधरे ।।६८
अक्रूराच्च पर तीर्थ न भूत न भविष्यति ।
तस्य तीर्थप्रभावेन सुधनो मुक्तिमाप्नुयात् ।।६९
द्वादशी शुक्लपक्षे तु कुमुदस्य तु या भवेत् ।
तस्मिन् स्नातस्तु वसुधे राजसूयफल लभेत् ।।७०
कार्तिकी समनुप्राप्य तत्तीर्थे तु वसुधरे ।
वृषोत्सर्ग नर कुर्वंस्तारयेत् स कुलोद्भवान् ।।७१
श्राद्ध य कुरुते सुभ्रु कार्तिक्या प्रयतो नर ।
पितरस्तारितास्तेन सदैव प्रपितामहा ।।७२

।। इति श्रीवराहपुराणे भगवच्छास्त्रे त्रिपञ्चाशदधिकशततमोऽध्याय ।।१५३।।

# १५४

श्रीवराह उवाच । ॐ
वत्सक्रीडनक नाम तीर्थं क्षेत्रे पर मम ।
तत्र रक्तशिलाबद्ध रक्तचन्दनभूषितम् ।।१
स्नानमात्रेण तत्रैव वायुलोक व्रजेन्नर ।
तत्राथ मुञ्चते प्राणान् मम लोके महीयते ।। २
पुनरन्यत् प्रवक्ष्यामि तच्छृणुष्व वसुधरे ।
अस्ति भाण्डीरक नाम तीर्थं परममुत्तमम् ।। ३
शालैस्तालैश्च तरुभिस्तमालैरर्ज्जुनैस्तथा ।
इङ्गुदै पीलुकैश्चैव करीरै रक्तपुष्पकै ।। ४
तस्मिन् भाण्डीरके स्नातो नियतो नियताशन ।

---

दे7 विष्णुलोके (→विष्णोर्लोक), दे2 ते1 स गच्छति, दे5 8 9 11 मवे जगाम ह, दे6 व्रजेति च, दे7 सनातनम (→ततो गत ) –e) दे2 ते1 एक– दे6 7 एव (→एष), ब3****** वो वै –f) ते1 कथिताम (→कथितस)

६८ श्लोकस्य d चरणानन्तर दे6 अधिकम्—

*विष्णुलोक सनातनम ।

६९ –a) दे6 7 अक्रूरश्च (→अक्रूराच्च) –b) दे2 5 8 9 ते1 भूतो (→भूत) –c) दे4 तस्या (→तस्य), ब3 मुवे °प्रभावेण (→°प्रभावेन) –d) दे7 11 मुवे आप्तवान्, दे9 आप्नुवान (→आप्नुयात)

७० ब3 ab ○, दे6 7 cd ○ –b) दे5 7-9 11 मुवे च या, दे6 यथा (→तु या) –c) दे2-5 8 9 11 मुवे ते1 स्नातस्य (→स्नातस्तु) –d) दे5 8 9 मुवे भवेन (→लभेत)

७१ ब3 d ○ –a) दे6 7 कार्तिकी (→कार्तिकी), दे1 तु समाप्राप्य, दे3 4 तु समासाद्य (→समनुप्राप्य) –b) दे1 3 4 तस्मिंस्तीर्थे, दे2 तत्तीर्थं तु, दे6 7 तत्र तीर्थे (→तत्तीर्थे तु) –c) दे6 7 कुर्यात (→कुर्वस), ब3 वृषोत्सग**** –d) दे1 3 4 च, मुवे स्व– (→स)

७२ –a) दे7 स्वभ्रु, दे10 शुभ्र (→सुभ्रु) –b) दे4 प्रयाता (→प्रयतो), दे6 7 कार्तिक्या तत्र मानव –d) दे6 7 तथैव (→सदैव)

**पुष्पिका—**

**पुराणनाम—**दे6 ○, ब3 दे1 3 4 इत्यादि वा(ब3 व, दे3 4 श्रीवा)राहपुराणे भगवच्छास्त्रे, दे2 ते1 इत्यादि वाराहपुराणे मथुरामाहात्म्ये, दे5 8 10 मुवे इति श्रीवा (दे5 मवे व) राहपुराणे मथुरामाहात्म्ये, दे7 इति श्रीआदिवाराहपुराणे भगवच्छास्त्रे, दे11 इति वाराहपुराणे मथुरामाहात्म्ये **अध्यायनाम—**ब3 दे1 4 6 11 ते1 अक्रूरतीर्थप्रभाव, दे5 8 9 मुवे अक्रूरतीर्थप्रभावो नाम, दे7 अक्रूरतीर्थप्रभावो नामाध्याय, दे10 अक्रूरतीर्थप्रभाव नाम **अध्याय संख्या—**दे1-7 9-11 ते1 ○, ब चतुर्थोऽध्याय, दे8 ।।५८।।, मुवे पञ्चपञ्चाशदधिकशततमोऽध्याय ।।१५५।।

**१५४**

[ब1 2 अयमध्यायो नास्ति]

ॐ ब3 दे2 6 7 वराह उवाच, दे1 वाराह उ०, दे3 4 10 श्रीवाराह उवाच, दे5 8 9 11 ते1 वाराह उवाच

१ ब3 दे5 10 cd ○ –a) दे1 °क्रीडनकै, दे10 °क्रीलनक (→°क्रीडनक) –b) ब3 दे1 4 6 7 10 ते1 क्षेत्र, मुवे वक्ष्ये(→क्षेत्रे), दे11 तीर्थं परममुत्तमम् –d) दे1 3 4 °सन्निभम (→°भूषितम)

२ दे11 ○, दे5 abc ○, ब3 a ○ –b) ब3 मम (→वायु–) –d) दे3 लोक–, दे5 8 9 लोक (→लोके), ते1 मम लोक स गच्छति

३ दे11 ○, ब3 c ○ –a) दे10 पुनरन्य(→पुनरन्यत) –c) दे1 भाण्डारक (→भाण्डीरक) –d) ब3** परममुत्तम, दे5 तीर्थ परमसत्तम, मुवे यत्तीर्थ परमुत्तमम

४ दे7 bc ○ –a) ब3 दे1 3 4 10 शालैस्तालस्तमालैश्च, दे6 7 शालैश्च तरुभिश्चैव, दे8 मुवे ते1 सालैस्तालैश्च तरुभिस –b) ब3 दे1 3 4 10 तरुभिश्चार्जुनस्तथा –c) दे6 पालुकै, ते1 ईलुकैश् (→पीलुकैश)

५ –a) मुवे भाण्डरिके (→भाण्डीरके) –d) मुवे चेन्द्र°

सर्वपापविनिर्मुक्त इन्द्रलोक स गच्छति ।
तत्राथ मुञ्चते प्राणान् मम लोक स गच्छति ॥५
पुनरन्यत् प्रवक्ष्यामि क्षेत्र वृन्दावन मम ।
तत्राह क्रीडयिष्यामि गोभिर्गोपालकै सह ।
सुरम्य सुप्रतीत च देवदानवदुर्लभम् ॥६
तत्र कुण्डे महाभागे बहुगुल्मलतावृते ।
तत्र स्नान प्रकुर्वीत एकरात्रोषितो नर ॥७
गन्धर्वैरप्सरोभिश्च क्रीडमान स मोदते ।
तत्राथ मुञ्चते प्राणान् मम लोक स गच्छति ॥८
पुनरन्यत् प्रवक्ष्यामि महापातकनाशनम् ।
तस्मिन् वृन्दावने तीर्थे यत्र केशी निपातित ॥९
गङ्गाशतगुण पुण्य यत्र केशी निपातित ।
काश्या शतगुण पुण्य यत्र विश्रमते हरि ।
तस्माच्छतगुण पुण्य नात्र कार्या विचारणा ॥१०
तत्रापि च विशेषोऽस्ति केशितीर्थे वसुधरे ।
तस्मिन् पिण्डप्रदानेन गयातुल्यफल भवेत् ॥११
गयापिण्डप्रदानेन यत्फल प्राप्यते नरै ।
स्नाने दाने तथा होमे अग्निष्टोमफल लभेत् ॥१२
सूर्यतीर्थे तु वसुधे द्वादशादित्यसज्ञके ।
कालियो रमते तत्र कालिन्द्या सलिले शुभे ॥१३
आदित्यो वीक्षितो भूमौ शीतार्त्तेन मया तदा ।
द्वादशास्तु तथादित्यास्तपन्ति मम सन्निधौ ॥१४
कालियो दमितस्तत्र आदित्या स्थापिता मया ।
वर वृणुध्व भद्र वो यद् वो मनसि वर्त्तते ॥१५

आदित्या ऊचु । ❀

वर ददासि वै देव वरार्हा यदि वा वयम् ।
अस्मिस्तीर्थवरे स्नानमस्माक सप्रदीयताम् ॥१६ वे १५६ १६

(→इन्द्र°) -e) दे2 तत्राप्य (→तत्राथ) -f) दे5 7 9 11 मुवे च (→स)

६ ब3 c○ -a) दे2 10 पुनरन्य (→पुनरन्यत) -c) दे6 तत्र क्रीडा चयिष्यामि -e) दे5 सुरम्या, मुवे रम्य च (→सुरम्य), ब3 दे10 सुप्रतीकञ्च, दे6 च प्रतीत च, दे7 स्वप्रतीत च (→सुप्रतीत च)

७ -b) दे4 °लताकुले (→°लतावृते) -c) दे6 तु (→प्र-) -d) दे10 ऐक°, मुवे चक° (→एक°), ब3****** नर

८ -a) दे5 गधर्वै रक्षसोभिश्च -c) दे3 तत्राप्य (→तत्राथ) -d) ब3 दे5-9 11 मुवे च (→स)

९ -a) दे2 10 पुनरन्य (→पुनरन्यत) -b) दे10 °नाशने (→°नाशनम) -c) मुवे तत्र (→तस्मिन), ब3*****ने तीर्थे, दे4 तस्मिन वृ दावन तीर्थे -d) दे3 4 निपातिता (→निपातित)

१० दे5 7 8 ab ○, दे7 e ○ -a) मुवे तीथ (→गगा-) -b) दे6 केशे (→केशी) -c) ब3 केश्या, दे5 8 9 11 मुवे केश्य, दे6 7 केश (→काश्या), दे4 8 °गुणा (→°गुण) -d) ब3 विश्रामितो, दे5 ते1 विश्राम्यते, दे10 विश्रमतो (→विश्रमते) -e) ब3 तस्मात्****** -f) दे4 विचारणा, दे7 विचारिणा (→विचारणा)

११ -a) दे6 7 विशेषास्ति (→विशेषोऽस्ति) -b) ब3 दे10 ते1 मुवे केशी, दे6 7 काशि- (→केशि-) -c) दे6 °प्रभावेन (→°प्रदानेन) -d) दे1 3 4 °तुल्य (→°तुल्य-), ब3 दे1 2 6 7 10 11 ते1 लभेत (→भवेत्)

१२ दे5 6 8 ○, ब3 bc○, दे7 9 मुवे ab○ -a) दे3 4 °प्रभावेन (→°प्रदानेन) -d) दे7 मुवे भवेत, दे9 शुभे (→लभेत)

१३ -a) दे1 3-5 7-9 11 मुवे °तीर्थेषु, दे2 ते1 तीथ तु, दे6 °क्षेत्रेषु (→°तीर्थे तु) -b) दे1 °साज्ञिके, दे3 4 °सज्ञित, मुवे °सज्ञिते (→°सज्ञके) -c) दे1 3 4 10 कालिको ते1 कालीयो (→कालियो), ब3 कालियो दमितस्तत्र

१४ मुवे ○ -a) दे3-5 8 आदित्या (→आदित्यो), ब3 ***, दे1 वाकिते, दे2 10 वीक्षते, दे3 4 चाकितो, दे5 वीक्षतो (→वीक्षितो), ब3**, दे1 3 4 भद्रे (→भूमौ) -b) दे2 केशी तीर्थे मया तदा -c) दे1 3 4 द्वादशस्तु (→द्वादशास्तु), दे1 यथा° (→तथा°) -d) दे7 तपन्ति बहुरूपिण

१५ दे6 7 ○ -a) दे1 3 4 10 कालिको (→कालियो), दे1 3 दमतिस्तत्र (→दमितस्तत्र) -b) दे1 3 4 आदित्य-, दे2 5 8 10 आदित्या (→आदित्या), दे1 4 स्थापिता (→स्थापिता) -c) दे1 3 4 10 ते1 वृणीष्व (→वृणुध्व), दे1 3 4 त (→वा)

❀ दे6 7 ○

१६ दे6 a ○ -a) ब3 दे5 8 9 11 ददासि वो देव (दे5 °व), दे1 ददासि चेद्धे च, दे3 4 ददासि देवेश, मुवे ददासि नो देव (→ददासि वै देव), दे7 तपस्विनो वेदरूपा -b) दे2 ते1 वराह, दे3 वराय, दे4 वरदा, दे6 7 वराहा (→वरार्हा) -c) दे3 8 9 अस्मिस्तीर्थे, दे5 अस्मिस्तीथ (→अस्मिस्तीथ-), दे1 3 4 स्नाने (→स्नान) -d) दे1 अस्माक सज्ञ हि स्थान मे

[आदित्याना वच श्रुत्वा ततोऽह वाक्यमब्रुवम् ।
द्वादशादित्यसज्ञ हि स्थानमेतद् भविष्यति ।।१७
चैत्रमासे नर षष्ठ्या शुक्लपक्षे वसुधरे ।
अस्मिन् स्नातो नरो देवि सर्वान् कामानवाप्नुयात् ।१८
आदित्येऽहनि सक्रान्तावस्मिस्तीर्थे वसुधरे ।
मनसाऽभीप्सित काम नर प्राप्नोति सयत ।।१९
सूर्यतीर्थे नर स्नातो दृष्ट्वाऽऽदित्य वसुधरे ।
आदित्यभुवन प्राप्य कृतकृत्य स मोदते ।
अथात्र मुञ्चते प्राणाण् मम लोक स गच्छति] ।।२०
कालियस्य ह्रद गत्वा क्रीडा कृत्वा वसुधरे ।
स्नानमात्रेण तत्रैव मुच्यते सर्वकिल्बिषै ।।
अथात्र मुञ्चते प्राणान् मम लोक स गच्छति ।।२१
उत्तरे हरिदेवस्य दक्षिणे कालियस्य तु ।
अनयोर्देवयोर्मध्ये ये मृतास्तेऽपुनर्भवा ।।२२

।। इति श्रीवराहपुराणे भगवच्छास्त्रे चतुष्पञ्चाशदधिकशततमोऽध्याय ।।१५४।।

# १५५

श्रीवराह उवाच ।※
यमुनापारमुल्लङ्घ्य तत्रैव च महामुने ।
मलयार्जुनक तीर्थं कुण्ड तत्र च विद्यते ।।१
पर्यस्त तत्र शकट भिन्नभाण्डकुटीघटम् ।
तत्र स्नानोपवासेन अनन्त फलमश्नुते ।।२
द्वादश्या शुक्लपक्षस्य ज्येष्ठमासे वसुधरे ।
तत्र स्नानेन दानेन महापातकनाशनम् ।।३
ज्येष्ठस्य शुक्लद्वादश्या स्नात्वा सुनियतेन्द्रिय ।
मथुराया हरि दृष्ट्वा प्राप्नोति परमा गतिम् ।।४
यमुनासलिले स्नातः शुचिर्भूत्वा जितेन्द्रिय ।

---

[दे2 7 11मुवे ते1 १७-२० श्लोका न सन्ति]

१७ दे1 ○ पाठान्तर नास्ति

१८ -c) ब दे1 4 तस्मिन् (→अस्मिन्)

१९ ब3 cd ○ -ab) ब आदित्येहनि सक्रान्त्यामस्मिस्तीर्थे वसुन्धरे, दे 4 आदित्येहनि सकान्ता तस्मिस्तीर्थे वसुधरे -c) ?1 मनस भाषित काम -d) दे1 सश* (→सयत)

२० ब १९c-२०d स्थाने पाठ —
प्रस्कन्दन नाम क्षेत्र सवपापहर शुभ ।
तस्मिन् स्नातश्च मनुज सवपापै प्रमुच्यते ।

२१ -a) दे2 5 11 मुवे ते1 आदित्याना वच श्रुत्वा -c) दे6 7 तत्रैष (→तत्रैव) -d) दे4 मुच्येत, दे7 मुचते (→मुच्यते) -e) दे8 अथोत्र (→अथात्र)

२२ -b) दे1-4 10ते1 कालिकस्य (→कालियस्य), दे6 7 च (→तु) -d) ब3 दे1 3 4 मृतास्ते न पुनर्भवा

**पुष्पिका**—ब3 ○

**पुराणनाम**—दे1 2 5 8-11 ते1 इत्यादि वाराहपुराणे, दे3 4 इत्यादि श्रीवाराहपुराणे भगवच्छास्त्रे, दे6 इति वराह पुराणे, दे7 इत्यादि वाराहपुराणे भगवच्छास्त्रे मथुरामहात्म्ये, मुवे इति श्री वाराहपुराणे मथुरामाहात्म्ये **अध्यायनाम**—दे1 3 ( 11 मथुराप्रादुर्भाव, दे2ते1 मथुरामाहात्म्ये प्रादुर्भाव, दे5 7-10 मथुराप्रादुर्भावो नामाध्याय, मुवे मथुराप्रादुर्भावो नाम **अध्यायसख्या**—ब दे1-7 9-11ते1 ○, दे8 ।।५९।।, मुवे षटपचाशदधिकशततमोऽध्याय ।।१५६।।

**१५५**

※ ब1 ○, दे1 9 वा (दे9 व) राह उ०, दे2 5-8 11 ते1 व (दे7 8 11 ते1 वा) राह उवाच, दे3 4 10 श्रीवाराह उवाच

१ ब3 ○ -b) दे1 3 4 तु (→च), दे10 °वने, ते1 °मते (→°मुने) -c) दे3 10 ते1 य (दे10 ज) मलाजुनक तीथ -d) दे1 3 4 न (→च)

२ ब3 ○ -b) दे6 छिन्न, दे7 भिन्न (→भिन्न-), दे3 4 °कुवीरक (→°कुटी घट) -c) दे5-9 11 मुवे °वासाभ्या (→°वासेन) -d) दे1 3-11 ते1 अनन्त-(→अनन्त)

३ ब3 ○ -b) दे10 ज्येष्ठे (→ज्येष्ठ-) -d) दे1 अनन्तफलमश्नुते

४ -b) ब3 दे3 4 10 तु (→सु-) -c) दे2 मुवे ते1 मघुराया, दे5 6 8 मथुराया (→मथुराया), दे4 5 दृष्टा (→दृष्ट्वा) -d) दे10 परा* गति (→परमा गति)

समभ्यर्च्याच्युत सम्यक् प्राप्नोति परमा गतिम् ।।५
अपि चास्मत्कुले जात कालिन्दीसलिले प्लुत ।
अर्चयिष्यति गोविन्द मथुरायामुपोषित ।
इति गायन्ति पितर परलोकगता सदा ।।६
ज्येष्ठमासे तु द्वादश्या समभ्यर्च्य जनार्दनम् ।
धन्योऽसौ पिण्डनिर्वाप यमुनाया प्रदास्यति ।।७
[निचुलाया परिक्रामन् वसन्तस्यारिबन्धनात् ।
गोविन्दे जागर कृत्वा कृतकृत्यो भविष्यति ।।८]
तत्रैव तु महातीर्थे वने बहुलसज्ञके ।
तत्र स्नातो नरो देवि रुद्रलोके महीयते ।।९
चैत्रमासे च द्वादश्या शुक्लपक्षे वसुधरे ।
तत्र स्नातो नरो याति मम लोक न सशय ।।१०

अस्ति भाण्डह्लद नाम परे पारे सुदुर्लभम् ।
दृश्यन्त्यहरहस्तत्र आदित्या शुभकारिण ।।११
तत्र चार्कस्थले कुण्डे स्नान य कुरुते नर ।
सर्वपापविनिर्मुक्त सूर्यलोके व्रजेन्नर ।
तत्राथ मुञ्चते प्राणान् मम लोक स गच्छति ।।१२
अर्कस्थलसमीपे तु कूप तु विमलोदकम् ।
सप्तसामुद्रक नाम देवानामपि दुलभम् ।।१३
तत्र स्नानेन वसुधे स्वच्छन्दगमनालय ।
अथात्र मुञ्चते प्राणान् मम लोक स गच्छति ।।१४
तत्र वीरस्थल नाम क्षेत्र गुह्य पर मम ।
आसन्नसलिल चैव पद्मोत्पलविभूषितम् ।।१५ व १५७ १

५ पाठा तर नास्ति

६ ब3 दे1-4 10 ते1 ef ○ –a) दे2 3 10 ते1 चा (दे3 वा) स्मिन, दे4 वास्मत (→चास्मत) –b) ब3 दे1 4 10 ते1 कालिन्द्या (→कालिन्दी–) –c) दे2-4 अच यिष्यन्ति गोवि द –d) दे1 3 4 मथुराया सुखप्लुत –f) दे5 8 9 °लोक (→°लोक–)

६ श्लोकस्य d चरणानन्तर ब3 अधिकम—
*भूभूव स्वस्तलेनापि न पातालतलेऽमल ।
ऊद्धवलोके मया दष्ट तादृक क्षेत्र वसुन्धरे ।
न तत्र पुण्यैन तद्दानैन तपोभिन तज्जपै ।
न लभ्य विविधैयज्ञैलभ्य मदनुभावत ।
श्रीविष्णो कृपया नून तत्र वासो भविष्यति ।
विना विष्णो प्रसादेन दिनमेक न तिष्ठति ।
अन्यैव काचित सा सृष्टिविधातव्या विवेकिनी ।
न मतक्षेत्रगुणान वक्तुमीश्वरोपीश्वरो मत ।
अहो मात सुदौबल्यमहो भाग्यस्य दुविष ।
आत्ममोहस्य महिमा मथुरा नैव सोच्यते ।
सापद सम्पद ज्ञात्वा सापाय कायमुच्चकै ।
चपला चापल चैव मत्वा मत्पुरमाश्रयेत ।
त्रिरात्रमपि ये तत्र वसन्ति नियतेंद्रिया ।
तेषा पुनन्ति नियत स्पृष्ट्वा तव न रेणव ।
यस्तत्र निवसेद्देवि सयतात्मा जितेन्द्रिय ।
त्रिकालमपि भुञ्जानो वायुभक्ष समाहित ।
न योगैर्या गतिलभ्या मन्वन्तरशतैरपि ।
अन्यत्र हेलया सोऽत्र लभते मतप्रसादत ।
ज्येष्ठमासे तु द्वादश्या समभ्यर्च्य जनार्द्दन ।

७ –a) मुवे द्वादश्या ज्येष्ठमास तु –b) दे7 शुक्लपक्षे बसुधरे –c) ब3 °दानन्तु (→°निर्वाप) –d) दे5 7-9 11 मुवे करिष्यति, दे6 करोति च (→प्रदास्यति)

अत पर ब3 अधिकम—
इत्यादि वराहपुराणे भगवच्छास्त्रे मथुरामाहात्म्ये पञ्चमोऽध्याय ।
वराह उवाच ।
यमुनापारमुल्लघ्य तत्रैव तु महावने । ( = १ab)
यमलाजुनक तीथ कुण्ड तत्र च विद्यते ।
पयस्त यत्र शकट भिन्नभाण्डकुटीघट ।
तत्र स्नानोपवासेन अनन्त फलमश्नुते ।
द्वादश्या शुक्लपक्षस्य ज्येष्ठमासे वसुधरे ।
तत्र स्नानेन पानेन महापातकनाशनम् । ( = १a-३b)

८ दे5 9 11 मुवे ○ –b) दे2 व** स निबन्धनात् ते1 वक्त सन्ध्या निबन्धनात

९ ते1 cd ○ –a) दे2 5 11 मुवे ते1 °तीर्थे (→°तीथ) –b) दे3 4 6 7 °सज्ञिके (→°सज्ञके)

१० ते1 ab ○ –a) ब3 दे1 3 4 10 चतुदश्या, दे5-9 11 तु द्वादश्या (→च द्वादश्या), मुवे द्वादश्या चैत्रमासे तु –c) ब3 स्नानान (→स्नातो), दे2 याति (→याति)

११ दे5 ○ –a) दे3 ते1 अस्मिन (→अस्ति) –b) दे1 3 4 परै पारैस्सु (दे1 °स्तु) दुलभम, मुवे परपारेषु दुलभम् –c) ब3 दृश्यन्ते बहवस्तत्र, दे6-9 11 मुवे दृश्यन्तेऽहरहस्तत्र –d) दे1 3 8 9 आदित्या (→आदित्या ), दे1 3 4 °कारिणी (→°कारिण )

१२ –a) दे3 4 वाकस्थले (→चाकस्थले), दे5****मले कुण्डे –d) ब3 दे6 7 11 मुवे °लोक (→°लोके), ब3 दे1 3 4 व्रजेच्च स (→व्रजेन्नर ) –e) दे2 ते1 तत्राप्य– (→तत्राथ)

१३ दे1 3 4 7 ○ –a) दे2 आर्वाकि° (→अक°) –b) दे2 ते1 कूप तु कमलोदकम् –c) ब3 मुवे ते1 सप्तसामुद्रिक नाम

१४ दे1 3 4 7 ○ पाठान्तर नास्ति

१५ दे1 3 4 cd ○ –b) दे1 3 4 तीथ त्रैलोक्य विश्रुत –c) ब3 प्रसन्न (→आसन्न–)

यस्तत्र कुरुते स्नानमेकरात्रोषितो नर ।
स मत्प्रसादात् सुश्रोणि वीरलोके महीयते ।
अथात्र मुञ्चते प्राणान् मम लोक स गच्छति ।।१६
कुशस्थल च तत्रैव पुण्य पापहर शुभम् ।
तत्र स्नातो नरो देवि ब्रह्मलोके महीयते ।
अथात्र मुञ्चते प्राणान् मम लोक स गच्छति ।।१७
तत्र पुष्पस्थल नाम शिवक्षेत्रमनुत्तमम् ।
तत्र स्नानेन मनुज शिवलोके महीयते ।।१८
एते पञ्चस्थला ख्याता महापातकनाशना ।
तेषु स्नातस्तु वसुधे ब्रह्मणा सह मोदते ।।१९
तत्र गोपीश्वरो नाम महापातकनाशन ।
कृष्णस्य रमणार्थं हि सहस्राणि च षोडष ।
गोप्यो रूपाणि चक्रे च तत्र क्रीडनकेशवम् ।।२०
यदा बालेन कृष्णेन भग्नार्जुनयुग तथा ।
शकट च तदा भिन्न घटभाण्डकुटीरकम् ।।२१
ताभिस्तत्रैव गोविन्द क्रीडन्त च यदृच्छया ।
परिष्वक्त हि धर्मेण व्याजेन च सुगोपितम् ।।२२
मातलिस्तत्र चागत्य देवैरुक्त यथोदितम् ।
गोपवेषधर देवमभिषेक चकार ह ।।२३
आनीय सप्त कलशान् तत्रौषधिपरिप्लुतान् ।
गोपीमण्डलपानेन स्नापितो हेमकुण्डल ।
गोप्यो गायन्ति नृत्यन्ति कृष्ण कृष्ण इति ब्रुवन् ।।२४
तत्र गोपीश्वर देव मातलिस्थाप्यपूजितम् ।
कूप च स्थापयामास माङ्गल्यै कलशै शुभै ।।२५
सप्तसामुद्रिक नाम कूप तु विमलोदकम् ।
देवस्याग्रे तु वसुधे गोपीशस्य महात्मन ।
पितरश्चापि नन्दन्ति पानीय पिण्डमेव च ।।२६
सप्तसामुद्रिके कूपे य श्राद्ध सप्रदास्यति ।

---

१६ दे1 3 4 ○ –d) दे6 वीरलोक**** –e) ब3 अत्राथ (→अथात्र)

१७ दे1 a-d ○, दे7 cd ○ –ab) दे10 तत्र पुष्पस्थले नाम तीर्थ त्रैलोक्यविश्रुत –d) दे1 3 4 10 पुण्यलोक व्रजेन्नर –e) ब3 दे1 4 तत्राथ (→अथात्र)

१८ –a) दे1 3 4 महाबल तु तत्रैव –b) दे1 3 4 मम (→शिव–), ब तीर्थ त्रलोक्यविश्रुत –c) ब3 तत्र स्नातो नरा देवि, दे1 3 4 तत्र स्नान नर कृत्वा –d) ब3 ब्रह्म° (→शिव°)

१८ श्लोकात् पर ब1 अधिकम—

महास्थलञ्च तत्रैव शिवक्षेत्रमनुत्तम ।
तत्र स्नानेन मनुज शिवलोके महीयते । ( = १८)

१९ –a) ब1 °स्थला (→°स्थला), मुवे ख्याता एते पञ्चदेशा –b) मुवे महापापविनाशना –c) दे1 3 4 10 तेन स्नातस्तु वसुधे, दे2 ते1 तेषु स्नातस्य वसुधे, दे5-9 11 मुवे तेषु स्नानेन (दे5 9 मुवे °षु) वसुधे

२०,–a) दे1 3 4 गोपीसरो (→गोपीश्वरो) –b) दे2 4 ते1 °नाशन (→°नाशन ) –c) दे1 3 4 कृष्णस्य रममाणस्य, दे6 7 कृष्णस्य श (दे7 म) रणार्थं हि –d) दे1 3 4 तु षोडश (दे1 °शा), दे6 7 वशानि च (→च षोडष) –e) ब3 चक्रुश्च, दे10 शक्रे च (→चक्रे च), दे1 3 4 गोपीरूपेण शक्रेण –f) दे5-9 11–शव, मुवे हरि (→–शव), ब3 तत्र क्रीडन्ति केशव

२१ –a) दे6 यदा चालेन बालेन, दे10 ज (?) दा वाण न कृष्णेन, ते1 यथाभावेन कृष्णेन –b) दे1 नग्न्यार्जुन–, ते1 भिन्ना-र्जुन–(→भग्नार्जुन–), दे3 4 –यम (→–युग) –c) ब3 ते1 तथा (→तदा) –d) दे2 ते1 घटभाण्डकुटीघटम्

२२ –b) दे6 7 क्रीडन (→क्रीडन्त) –c) दे2 10 परिषक्त, मुवे परिस्वज्य, ते1 परिपिक्त (→परिष्वक्त), ब3 कामेन, दे4 10 कर्मेण (→धर्मेण) –d) ब3 दे1 3 10 व्यानेनव (→व्याजेन च)

२३ दे7 cd ○ –a) दे1 10 मातरिस्, दे3 4 मातरस (→मातलिस), ते1 वागत्य (→चागत्य) –b) दे1 3 4 दिविमुक्त (→दवैरुक्त) –c) दे1 3 4 गोपि° (→गोप°) –d) ब1 अभिषिक्त (→अभिषेक)

२४ दे7 ab ○ –a) ब3 आनीय रामफलसान् –b) ब3 दे5 8 9 11 रत्नौ°, दे2 ते1 रात्रौ° (→तत्रौ°) –c) दे1 3 4 10 °मङ्गल–(→°मण्डल–), दे1 –पासेन, दे3 4 –पाणेन, दे9 मुवे –पातेन (→–पानेन) –d) दे6 7 °कुण्डलै (→°कुण्डल ) –f ) ब3 दे1-3 10 ते1 कृष्णम् (→कृष्ण)

२५ –a) दे6 7 गोप्ये° (→गोपी°) –b) दे9 11 मुवे मातलि (→मातलि–), दे1 3 4 मातरिश्वा प्रपूजित –d) ब3 दे3 4 मङ्गल्यै (→माङ्गल्य ), दे1 3 4 कौशलै , दे5 8 9 कवचै (→कलशै )

२६ –b) दे1 3 4 कूप सु–, दे6 इय तु, दे7 तोय तु, दे10 कृष्म तु (→कूप तु) –d) मुवे गोपा यस्य (→गोपीशस्य) –e) दे3 4 चाभि– (→चापि), दे7 निन्दन्ति (→नन्दन्ति) –f) दे1 3 4 तु (→च)

२७ –a) दे7 सप्तसामुद्रिक कूप –b) दे2 ते1 श्राद्धे (→

पितरस्तारितास्तेन कुलाना सप्तसप्तति ।।२७
सोमवारे त्वमावास्या पिण्डदान करोति य ।
गयापिण्डप्रदान तु कृत स्यान्नात्र सशय ।।२८
गोविन्दस्य च देवस्य तथा गोपीश्वरस्य च ।
मध्ये तु मरण यस्य शक्रस्येति सलोकताम् ।।२९
तथा बहुलरुद्रस्य गोविन्दस्यैव मध्यत ।
तद्वद् ब्रह्माणमीशस्य गोपीशस्यैव मध्यत ।।३०
एतेषु स्नानदानेन पिण्डपातेन भामिनि ।
नरस्तारयते पुसा दश पूर्वान् दशापरान् ।।३१
एव स्नातो नरो देवि देवैश्च सह मोदते ।
तत्राथ मुञ्चते प्राणान् मम लोक स गच्छति ।।३२
वत्सपुत्र महापुण्य तीर्थं परमक मम ।
[मथुरादक्षिणे पार्श्वे वत्सरागविभूषितम् ।
तत्र स्नानेन दानेन वाञ्छित फलमाप्नुयात् ।।३३]
मथुरादक्षिणे पार्श्वे क्षेत्र फाल्गुनक तथा ।
तत्र स्नात्वा च पीत्वा च वीरलोके महीयते ।।३४
तत्र फाल्गुनके चैव तीर्थे परमदुर्लभे ।
वृषभाञ्जनक नाम क्षेत्र मे दुर्लभ महत् ।।३५
तत्राभिषेक य कुर्यात् स देवै सह मोदते ।
तत्राथ मुञ्चते प्राणान् मम लोके महीयते ।।३६
अस्ति तालवन नाम धेनुकासुररक्षितम् ।
मथुरापश्चिमे भागे अदूरादर्द्धयोजनम् ।।३७
तत्र कुण्ड स्वच्छजल नीलोत्पलविभूषितम् ।
तत्र स्नानेन दानेन वाञ्छित फलमाप्नुयात् ।।३८
अस्ति सवीटक नाम अस्मिन् क्षेत्रे पर मम ।
तत्र कुण्ड विशालाक्षि प्रसन्नसलिल शुभम् ।।३९
तत्र स्नान च य कुर्यादेकरात्रोषितो नर ।
अग्निष्टोमफल चैव लभते नात्र सशय ।
अथात्र मुञ्चते प्राणान् मम लोक स गच्छति ।।४०
मथुरापश्चिमे भागे अदूरादर्द्धयोजने । वे १५७

श्राद्ध) –c) दे6 7 तारितस° (→तारितास) –d) दे। °सप्त च (→°सप्तति )

२८ –a) ब3 दे10 त्वमावस्या, दे5 9 11 मुवे त्वमाया वँ (→त्वमावास्या) –c) दे2 10 ते1 मया(→गया–), ब दे2 10 ते1 च (→तु), दे5 9 11 मुवे पितरस्तस्य तप्यति –d) ब3 दे2 10 ते1 नास्त्यत्र (→स्यान्नात्र), दे5 9 11 मुवे कोटिवषशतान्यलम

२९ –a) दे1 3 4 तु (→च) –b) दे4 तु (→च), दे1 तथा गोपिचरस्य तु, दे3 तया योगी चरस्य तु –d) दे2 मुवे शक्र-स्यति (→शक्रस्येति)

३० –a) दे6 तदा (→तथा) –b) दे1 3 4 मध्यम (→मध्यत ) –c) ब3 तद्वद ब्राह्मण ईशस्य, दे6 9मुवे तद्वद ब्रह्मा (दे7 ब्राह्म)णमाश (मुवे °शा)स्य

३१ –a) दे6 7 तेषु स्नानेन दानेन दे1- 10 एतेषु स्नान-दानेषु, ते1 एतेषु पिण्डदानेन –b) ब3 दे6 7 पिण्डदानेन भामिनि, ते1 स्नानेन च सुभामिनि –c) दे7 पुसो (→पुसा)

३२ –a) दे5 9 एष, दे6-8 11 एषु (→एव), दे6 7 स्नाने (→स्नातो), दे3 4 एव स्नानेन देवेशि –c) दे7 तथात्र (→तत्राथ)

३३ दे1 2 5 11 मुवे ते1 c–f ○ –a) ब3 वत्स पुत्र, दे2 ते1 वस पुत्र, दे4 वश्य पुत्र, दे8 9 11 वसु पन्न (→वत्सपुत्र), दे1 सदा (→महा–) –b) ब3 तीथ परमदुलभ, दे2 5 9 11 मुवे पुण्य (दे2 तीथ) परममुत्तम, दे3 तीथ परम*मम

३४ –a) दे5 पार्थे (→पार्श्वे) –b) दे10 क्षेत्रे (→क्षेत्र) –d) दे5 9 11 वर°, मुवे पर° (→वीर°), दे1 3 4 स मोदते (→महीयते)

३५ ब3 cd ○ –a) दे1 3 4 स च (→तत्र), दे1 3 4 फाल्गुनक, दे2 7 ते1 फाल्गुणके (→फाल्गुनके) –b) दे1 3 5 8 तीथ(→तीर्थे), दे1 3-6 8 9 °दुलभ (→°दुलभे) –c) दे10 वृक्ष– (→वृष–) –d) दे6 7 तीथ ते1 क्षेत्रे (–क्षेत्र)

३६ ब3 ○ –c) दे2 ते1 तत्राप्य–, दे4 अथात्र, दे5-9 11 मुवे तत्र यो (→तत्राथ) –d) दे5 9 11 मुवे लोक (→लोके), दे5-9 11 मुवे स गच्छति (→महीयते)

३७ ब3 ○ –b) दे3 °रक्षितु (→°रक्षित)

३८ ब3 ○, दे10 cd○ –a) दे2 5 8 9 11ते1 कुडे (→कुण्ड), दे6 7 तत्र स्वच्छजल कुण्डे –c)दे6 7 पुरुषो, दे8*** (→दानेन)

३९ दे10 ○ –a) दे2 5-9 11मुवे सपीठक(→सवीटक), दे3 अस्थि सवीटे क नाम –b) ब3 गुह्य क्षेत्र, दे1 2 ते1 अस्म त्क्षेत्रे (→अस्मिन् क्षेत्रे) –d) दे4 5 8 °सलिले (→°सलिल)

४० –a) दे3 4 तु (→च), ब3 दे2 5-9 11 मुवे ते1 ये कुयुर द10 ये कयुर् (→य कुर्याद) –b) मुवे एकरात्रोषिता नरा –d) ब3 दे2 5 9 11 मुवे ते1 लभन्ते (→लभते) –f ) दे6 च (→स)

४१ मुवे ○ –b) दे6 7 ह्यदूरादधयोजने –d) ब3दे2 10

मया तत्र तपस्तप्त पुत्रार्थं हि वसधरे ।।४१
देवकीगर्भसभूतो वसुदेवगृहे शुभे ।
तत्र पुण्येन हि मया रविराराधितस्तदा ।।४२
लब्धप्रज्ञो मया पुत्रो रूपवाश्च गुणान्वित ।
तत्रैव तु मया दृष्ट पद्महस्तो दिवाकर ।।४३
मासि भाद्रपदे देवि तिग्मतेजा विभावसु ।
सप्तम्या शुक्लपक्षस्य रविस्तिष्ठिति सर्वदा ।।४४
तस्मिन्नहनि य स्नान कुर्यात् कुण्डे समाहित ।
न तस्य दुर्लभ लोके सर्वदाता दिवाकर ।।४५
आदित्येऽहनि सप्राप्ते सप्तम्या तु वसुधरे ।
नरो वाऽप्यथवा नारी प्राप्नोत्यविकल फलम् ।।४६
तत्रैव तु तपस्तप्त राज्ञा शन्तनुना पुरा ।
आदित्य तु पुरस्थाप्य प्राप्तो भीष्मो महाबल ।।४७
शन्तनु प्राप्य त पुत्र गतोऽसौ हस्तिनापुरम् ।
तत्र स्नानेन दानेन वाञ्छित फलमाप्नुयात् ।।४८

।।इति श्रीवराहपुराणे भगवच्छास्त्रे पञ्चपञ्चाशदधिकशततमोध्याय ।।१५५।।

# १५६

श्रीवराह उवाच । ❀
विशतिर्योजनाना तु माथुर मम मण्डलम् ।
यत्र तत्र नर स्नातो मुच्यते सर्वकिल्बिषै ।।१
वर्षाकाले तु स्थातव्य यच्च स्थान तु हर्षदम् ।
पुण्यात् पुण्यतर चैव माथुरे मम मण्डले ।।२

तै1 तु (→हि)

४२ –c) ब3 पुत्र (→तत्र), दे6 7 यया, दे10 तया (→मया), दे1 तत्र रण्ये बहुतया, दे 4 तत्रारण्यबहुविधे –d) दे5-9 11 मुवे शुभ (→तदा), ब3 रविरारावधिस्तदा, दे3 4 पारे विराधितस्तथा

४३ –a) ब3 दे6 7 मुवे लब्ध (→लब्ध-), ब3 दे2-11 मुवे प्राज्ञो (→-प्रज्ञो), ब3 यया (→मया) –b) ब3 सु–, दे1 3 4 तु(→च) –c) दे5 6 8 9 11मुवे तत्रैव(→तत्रैव), दे2 5-11 मुवे तै1 ततो (→मया), दे2.6 8 10 11 तै1 दृष्टा (→दृष्ट)

४३ श्लोकात्पर ब3 अधिकम्—
आदित्येहनि सप्राप्ते सप्तम्यान्तु वसुन्धरे । (=४६ab)

४४ –a) दे1 मुवे देवी (→देवि) –c) दे2 5-9 11 मुवे तै1 कृष्ण° (→शुक्ल°)

४५ –a) ब3 दे2 10 तै1 यत् (→य) –b) दे2 तै1कुण्ड (→कुण्डे) –c) दे6 7 दुर्लभो (→दुर्लभ) –d) दे3 4 सवदा हि, तै1 सवदा स (→सवदाता)

४६ –a) दे4 तै1 आदित्यो (→आदित्ये) –b) दे6 च (→तु), दे1 3 4 दिवाकरे (→वसुन्धरे)

४७ –a) ब3 च (→तु), दे1 3 तप्तु (→तप्त) –b) ब शान्तनुना, दे5 8 तै1 शन्तनुना (तै1 °ज) (→शन्तनुना) –c) ब3दे5 मुवे तु पुर , दे1 2 10 तै1 तु पुरा, दे6 7 पुरत(→तु पुर-) –d) दे10 °बला (→°बल)

४८ –a) ब3 शान्तनु, दे5 8 9 11 शान्तनु , दे6 शतुन (→शन्तनु ), ब3 सत पुत्र , दे2तै1 सौ पुत्र , दे3 4 पुत्र त, दे10 मपुत्रो (→त पुत्र ) –d) दे1 3 4 प्राप्नुयात्फलमुत्तम

**पुष्पिका**—दे6 ○

**पुराणनाम**—ब3 इत्यादि वराहपुराणे भगवच्छास्त्रे मथुरामाहात्म्ये, दे1 2 5 8 9 तै1 इत्यादि वराहपुराणे मथुरामाहात्म्ये, दे3 4 इत्यादि श्रीवाराहपुराणे भगवच्छास्त्रे मथुरामाहात्म्ये दे7 इत्यादि वाराहपुराणे भगवच्छास्त्रे, दे10 मुवे इति श्रीवा (मुवे व) राहपुराणे मथुरामाहात्म्ये, दे11 इति वाराहपुराणे मथुरा माहात्म्ये **अध्यायनाम**—ब3 दे1-5 8 11 तै1 ○, दे7 मथुरा माहात्म्य नामाध्याय , मुवे मलयाजुनतीर्थादिस्नानादिप्रशसानाम **अध्यायसख्या**—दे1-7 10 11 तै1 ○, ब3 षष्ठोऽध्याय , दे8 ।।६०।।, मुवे सप्तपञ्चाशदधिकशततमोध्याय ।।१५७।।

**१५६**

❀ दे6 ○, ब3 दे2 7 वराह उवाच, दे1 9 वाराह उ०, दे3 4 10 श्रीवाराह उवाच, दे5 8 11 तै1 वाराह उवाच

१ दे6 १a-२d ○, दे8 १c-२d ○ –b) दे4 8 माथुरे, तै1 मथुर (→माथुर), दे4 8 मण्डले (→मण्डलम) –c) ब3दे10 तत्र (→यत्र) –d) ब3 दे1 4 °पातकै (→°किल्बिषै )

२ दे6 8 ○ (द्र १पा वि ) –a) ब3 स्नातव्य, दे1 3 4 कत्तव्य, दे5*** (→स्थातव्य) –b) दे5 7 9 11 यत्र (→यच्च), दे5 9 स्नान (→स्थान), ब3 दे2 10 तै1 यत्र स्था (ब3 स्ना) न निमोर्दक, दे1 3 4 तत्र स्नाति न दूरके, दे7 यत्र

सप्तद्वीपेषु तीर्थानि पुण्यान्यायतनानि च ।
मथुराया गमिष्यन्ति प्रसुप्ते तु सदा मयि ॥३
शयनोत्थित तु दृष्ट्वा मा मथुराया वसुधरे ।
ते नरा मा प्रपश्यन्ति सर्वकाल न सशय ॥४
सुप्तोत्थितस्य वसुधे दृष्ट्वा मे मुखपङ्कजम् ।
सप्तजन्मकृत पाप तत्क्षणादेव मुच्यते ।
मथुरावासिनो लोका सर्वे ते मुक्तिभाजना ॥५
मथुरा समनुप्राप्य दृष्ट्वा देव तु केशवम् ।
स्नात्वा पुनस्तु कालिन्द्या यो मा पश्यति सर्वदा ।
स तत्फलमावाप्नोति राजसूयाश्वमेधयो ॥६
प्रदक्षिणीकृता तेन सप्तद्वीपा वसुधरा ।
प्रदक्षिणीकृतो येन मथुराया तु केशव ॥७

घृतपूर्णेन पात्रेण समग्रेण च वाससा ।
केशवस्याग्रतो दत्त्वा दीपक तु वसुधरे ॥८
पञ्चयोजनविस्तारमायामे पञ्चविस्तरम् ।
दीपमालासमाकीर्णं विमान लभते नर ॥९
सर्वकामसमृद्ध तदप्सरोगणसेवितम् ।
रम्यमालाभिराकीर्णं विमान सार्वकामिकम् ।
समारोहति वै नित्य प्रभामण्डलमण्डितम् ॥१०
ये देवा ये च गन्धर्वा सिद्धाश्चारणपन्नगा ।
ते स्पृहन्ति सदा देवि पुण्यमस्ति कृत भुवि ॥११
यदि कालान्तरे पुण्य हीयतेऽस्य पुरा कृतम् ।
सता पुण्यगृहे देवि जायते मानवो हि स ॥१२ वे १५८

स्थानोत्तमोत्तमे -c) दे1 3 4 पुण्या, दे2 ते1 पुण्य (→पुण्यात), ब3 °तम, दे5 °तरे (→°तर), दे7 स्नाता तीर्थे तु कालिद्या -d) दे1 3 4 माथुर, ते1 मधुर (→माथुरे)

अत पर दे1 3 4 अधिकम्—

*यत्र तत्र नर स्नातो मुच्यते सवपातक ।

३ दे1 ३b-२३d ○ -a) दे1 3 10 -द्वीपे तु, दे4*** (→-द्वीपेषु) -b) दे1 श्रोणि तुषारसशोपम -c) ते1 मवुराया (→मथुराया)

४ दे1 ○ (द्र ३पा वि) -a) दे6 शयोर्थित, दे7 शयोत्थित, मुवे सुप्तोत्थित, ते1 शय्येस्थित(→शयनोत्थित), दे3 4 10 मा दष्ट्वा (→दष्ट्वा मा) -c) ते1 सदा (→नरा), दे7 प्रपद्यति (→प्रपश्यन्ति)

५ दे1 () (द्र ३पा वि) -a) ब3 दे2 5 8-11 मुवे सुप्तोत्थित तु, दे6 सुप्तोर्थितस्य, ते1 सुप्ते स्थित तु (→सुप्तोत्थितस्य) -b) दे6 पुत्र°, दे7 मुत्र° (→मुख°) -c) दे6 7 °कृतात्पापात् (→°कृत पाप) -d) ब3 मुवे मुञ्चति (→मुच्यते), दे3 4 तत्क्षणा दिवि नश्यति -e) ते1 लोकान (→लोका) -f) दे5 8 त (→ते), दे2 ते1 °भाजन (→°भाजना)

६ दे1 ○ (द्र ३पा वि) -a) दे6 10 मथुरा (→मथुरा), ब3 °प्राप्ता, दे4 °प्राप्या (→°प्राप्य) -c) ब3 पुनन्तु (→पुनस्तु). -d) दे5-9 11 मुवे मम लोके महीयते -e) दे7 सत्फल समवाप्नोति

७ दे1 ○ (द्र ३पा वि) -a) दे7 प्रदक्षिणे, दे10 प्रदक्षिणा- (→प्रदक्षिणी-), दे5 8 9 11 मुवे °कृतो, दे6 °कृतौ, ते1 °कृतस् (→°कृता), दे5 6 8 9 11 मुवे येन (→तेन) -b) दे? 5 6 8 11 मुवे मथुराया तु केशव (दे2 9 °व, दे10 °वे), दे7 सप्तद्वीपास्ससागरा -c) ब3 °कृत, दे2 5 6 8-11 मुवे ते1 °कृता, दे7 °कृतास (→°कृतो), दे5-11 मुवे तेन (→येन) -d) ब3ते1 केशव (→केशव), दे2 5 11 मुवे सप्तद्वीपा वसुन्धरा

दे6 a चरणात्परमधिकम—सप्तद्वीपा स सागरा ।

दे7 b चरणात्परमधिकम—वसुधराकटाक्षेण मथुराया तु केशव ।

८ दे1 ○ -b) दे2 ते1 समस्तेन (→समग्रेण), दे3 4 तु(→च) -c) दे10 गत्वा (→दत्त्वा), दे3 केशवस्याय मे दत्त्वा, दे4 केशवस्यायने दत्त्वा -d) दे6 दीपके (→दीपक)

९ दे1 ○ (द्र ३पा वि) -b) मुवे आयाम (→आयामे), दे2 आयाम च स विस्तर -c) दे4 °समाकीर्णां (→°समाकीण) -d) दे4 लभे* (→लभते), दे10 नरा (→नर)

१० दे1 ○ (द्र ३पा वि) -b) दे10 °सेवित (→°सेवितम्) -c) ब3 रत्न°, दे3 4 पुष्प°, ते1 रक्त° (→रम्य°), दे2 5 9 11 मुवे रक्त(दे2 मुवे °म्य) मालासमाकीण (दे6 °र्णं) -d) दे5 7 9 मुवे भोगाढ्य, दे6 8 11 भोगाद्य (→विमान) दे4 6 7 10 11 मुवे ते1 सर्व° (→साव°) -e) दे3 4 तान (→वै)

११ दे1 ○ (द्र ३पा वि) -a) दे3 4 देव- (→ये च) -b) दे3 4 सिद्धाश्चाप्सरपन्नगा -c) ब3दे2 10ते1 ते स्पशन्ति, दे4 तेस्या हृति, दे6 तस्ये**, दे7 तस्य तीर्थे, मुवे त स्पहन्ति (→ते स्पहन्ति)

१२ दे1 ○ (द्र ३पा वि) -a) वे7 कालान्तर (→कालान्तरे) -b) ते1 ह्लीयते (→हीयते) -c) दे2ते1 सत्य (→सता), दे6 7 श्रुणु, ते1 पुण्य (→पुण्य-) -d) ते1 मानुषो (→मानवो), दे10 सा (→स)

धरण्युवाच ।॥

क्षेत्र हि रक्षते देव कस्त्विद पापनाशनम् ।
यक्षरक्ष पिशाचैश्च भूतप्रेतविनायकै ।
एवमादिभिराजुष्ट क्षेत्र न फलद भवेत् ।।१३

श्रीवराह उवाच ।॥

मत्क्षेत्र ते न पश्यन्ति मत्प्रभावात् कदाचन ।
न विकुर्वन्ति ते दृष्ट्वा मत्पराणा हि देहिनाम् ।।१४
रक्षार्थं हि मया दत्ता दिक्पालास्तु वरानने ।
लोकपालास्तु चत्वारस्तीर्थ रक्षन्ति ये सदा ।।१५
पूर्वां रक्षति इन्द्रस्तु यमो रक्षति दक्षिणाम् ।
पश्चिमा रक्षते नित्य वरुण पाशधृक्स्वयम् ।।१६
उत्तरा तु कुबेरस्तु महाबलपराक्रम ।
मध्य तु रक्षते नित्य शिवो देव उमापति ।।१७
मथुराया गृहे यस्तु प्रासाद पुरवासिनाम् ।
कारयित्वा तु मनुजो जायते स चतुर्भुज ।। १८
मथुराया महाभागे कुण्डे तु विमलोदके ।
गम्भीरे सर्वदा देवि सतिष्ठेत चतुर्भुज ।।१९
तत्राभिषेक कुर्वीत एकरात्रोषितो नर ।
मोदते सर्वलोकेषु सर्वपापविवर्जित ।।२०
तत्राथ मुञ्चते प्राणान् स्नान कृत्वा वसुधरे ।
वैष्णव लोकमासाद्य क्रीडते स सुखो दिवि ।।२१
तत्रैव च सदाऽऽश्चर्यं कथ्यमान मया शृणु ।
यद् दृश्यते वै सुश्रोणि कुण्डे वै विमलोदके ।।२२
हेमन्ते तु भवेच्चोष्ण तेजसा मम शोभने ।

॥ दे1 ○, दे 4 पृथि०युवाच

१३ दे1 ○ (द्र ३पा वि ) –a) दे4 क्षेत्रे (→क्षेत्र), दे4 रक्षेते, दे6 रक्ष्यते (→रक्षते), ब1 देव , दे6 देवि (→देव) –b) दे3 4 कस्येद, दे6 7 कामद (→कस्त्विद) –c) दे2 5 7-11 ते1 यक्षभूत– (दे10 °ता), दे यक्षो भूत–, मुवे पशुभूत– (→यक्षरक्ष ), दे7 –पिशाच वै, दे10 –पिशाचैव(→–पिशाचैश्च) –d) ब3 भूत*तृ°, दे2 10ते1 यक्षभूत°, दे5-9 11 मुवे रक्षो (दे7 °क्ष) भूत° (→भूतप्रेत°) –e) दे2 5-9 11 मुवे ते1 °कृष्ट, दे3 °तुष्टा (→°जुष्ट) –f) दे 5-9 11 मुवे ते1 तत्क्षेत्र (→क्षेत्र न), दे7 मम (→भवेत)

॥दे1 ○, ब3 दे2 6 7 वराह उवाच, दे3 4 10 श्रीवाराह उवाच, दे5 8 9 ते1 वाराह उवाच, दे11 वाराह उ०

१४ दे1 ○ (द्र ३पा वि ) –a) दे2 ते1 मे (→मत), दे5 क्षेत्रे (→क्षेत्र) –b) दे7 कथचन (→कदाचन) –c) दे4 दुष्टा (→दृष्ट्वा) –d) दे10 °पुराणा (→°पराणा)

१५ दे1 ○ (द्र ३पा वि ) –b) दे3 दिक्पालासु, दे6 दिक्पालस्तु (→दिक्पालास्तु) –c) दे6 8 °पालस्तु (→°पालास्तु) –d) दे5 8 तीर्थे (→तीर्थ)

१६ दे1 ○ (द्र ३पा वि ), दे6 7 १६b–१७b ○ –a) ब3 दे6 ते1 पूर्वं, दे5 पूर्वो(→पूर्वां), दे2 ते1 रक्षतु (→रक्षति), ब3 दे4 चेन्द्रस्तु, दे2 3 चन्द्रस्तु, दे6 7 वै**, ते1 शक्रस्तु (→इन्द्रस्तु) –b) ते1 यमो रक्षतु दक्षिणम् –c) दे2 ते1 पश्चिम, दे10 पश्चिमा (→पश्चिमां) –d) दे4 ते1 –दृक्स्वय, दे5 8 9 मुवे –भृत्स्वय, दे10 ... (→–धृक्स्वय)

१७ दे1 ○ (द्र ३ पा वि ), दे10 ○, दे6 7 ab ○ (द्र १६पा वि ) –a) मुवे व (→तु) दे3 4 कुबेरश्च(→कुबेरस्तु) –c) दे5 8 9 11 मध्या ते1 मध्ये (→मध्य), दे4 नित्ये (→नित्य) –d) ब3 दे3 4 स्थितो (→शिवो), दे3 °पति (→°पति )

१८ दे1 ○ (द्र ३पा वि ) –a) दे2 ते1 घृत, दे3-5 8-11 मुवे गह (→गृहे) –b) दे 6 7 10 ते1 प्रसाद (→प्रासाद), दे2 ते1 पुरवासिन, दे5 9 11 मुवे कुरुते नर (→पुरवासिना) –c) दे5-9 11 मुवे चतुभुजस्तु विज्ञेयो –d) दे5 9 11 मुवे जीवनमुक्तो न सशय

१९ दे1 ○ (द्र ३पा वि ) –b) ब3 कुण्डेति, दे5-9 11 मुवे कुण्डे च, दे10 कुपे तु (→कुण्डे तु) –c) दे4 गभीर ते1 गभीरा (→गम्भीरे) –d) ब3 स तिष्ठेच्च, दे2 ते1 तिष्ठते न, दे5-9 11 मुवे तिष्ठते च (दे11*) (→सतिष्ठेत)

२० दे1 ○, (द्र ३पा वि), मुवे ○ –c) दे10 °लोके तु (→°लोकेषु)

२१ दे1 ○ (द्र ३ पा वि ) –a) दे2 ते1 तत्रापि (→तत्राथ), मुवे तत्र मुञ्चत य प्राणान् –b) दे2 ते1 दान (→स्नान) –d) ब3 सु***, दे2 5 8-11 मुवे ते1 सखादिव, दे3 4 मया सह (→सुखो दिवि)

२२ दे1 ○ (द्र ३ पा वि ) –a) ब1 दे2 8-11 मुवे ते1 तु (→च), ब3 महाश्चय, दे2 सदाचक्र , ते1 सदा तत्र (→सदाश्चय), दे6 7 तत्रैव महदाश्चर्यं –c) ब3 दे5-11 मुवे यदुच्यते वै, दे2 यदि छ* वै, ते1 यदि चेद्वै तु (→यद् दृश्यते वै) –d) ब3 कुण्डेषु, दे2 5-11 मुवे ते1 कुण्डे तु (→कुण्डे वै)

२३ दे1 ○ (द्र ३ पा वि ), दे6 7 २३ c–अध्याय समाप्तिपर्यन्त ○ –a) ब3 दे6 7 10 च (→तु), दे4 6 7

ग्रीष्मे भवति सुश्रोणि तुषारसदृशोपमम् ।।२३
न वर्द्धते च वर्षासु ग्रीष्मे चापि न हीयते ।
एतच्च महदाश्चर्यं तस्मिन् कुण्डे पर मम ।।२४
पदे पदे तीर्थफल मथुराया वसुधरे ।
तत्र तत्र नर स्नातो मुच्यते सर्वपातकै ।।२५
वर्षासु स्थलतीर्थेषु स्नातव्य तु प्रयत्नत ।
ह्रदेषु देवखातेषु गर्तेषु च नदीषु च ।।२६
प्रवाहेषु च दिव्येषु नदीना सङ्गमेषु च ।
वर्षासु सर्वत स्नायाद् यदीच्छेत् परमा गतिम् ।।२७
अस्ति क्षेत्र पर दिव्य मुचुकुन्द तु नामत ।
मुचुकुन्द स्वपित्यत्र दानवासुरपातन ।।२८
तत्र कुण्डे नर स्नात्वा प्राप्नोत्यभिमत फलम् ।
अथात्र मुञ्चते प्राणान् मम लोक स गच्छति ।।२९
इहजन्मकृत पापमन्यजन्मकृत च यत् ।
तत्सर्व नश्यते शीघ्र कीर्त्तने केशवस्य तु ।।३०
कि तस्य बहुभिर्मन्त्रैर्भक्तिर्यस्य जनार्दने ।
नरके पच्यमानस्य गतिर्देवो जनार्दन ।।३१
कृत्वा प्रदक्षिण देव मथुराया तु केशवम् ।
[न जायते मर्त्यलोके जातो वा नृपतिर्भवेत् ।।३२
मासे वै कौमुदे देवि य करोति प्रदक्षिणाम् ।]
देवेषु मम रूपेषु सोऽनन्तफलमश्नुते ।।३३
सुप्तोत्थित हरिं दृष्ट्वा मथुराया वसुधरे ।
न तस्य पुनरावृत्तिर्जायते स चतुर्भुज ।।३४
कुमुदस्य तु मासस्य मथुराया वसुधरे ।
नवम्या दक्षिण कृत्वा सर्वपापै प्रमुच्यते ।।३५ वे १५८ ३५

---

भवेदुष्ण (→भवेच्चोष्ण) –b) ब3 तेज******, दे2 5-9 11 मुवे ते1 शीतल ग्रीष्मके भवेत –c) दे2 5 9 11 मुवे ते1 तेजसा मम सुश्रोणि

२४ दे6 7 ○ (द्र २३ पा वि) –a) दे2 ते1 वषत (→वद्धते) –b) दे4 10 ग्रीष्मो (→ग्रीष्मे), ब3**, दे2 4 वापि (→चापि), ब3 महीयते, दे2 ते1 निवत्तते (ते1 °के) (→न हीयते)

२५ दे6 7 ○ (द्र २३ पा वि), ब3 २५ a २८ d ○ दे4 २५ c ३३ b ○ –c) दे1 3 10 यत्र तत्र (→तत्र तत्र) –d) दे3 °किल्विषै (→°पातकै)

२६ ब1 दे4 ○ (द्र २५ पा वि), दे6 7 ○ (द्र २३ पा वि) –a) दे2 5 8 9 11 मुवे ते1 स्थूल° (→स्थल°), दे1 3 °तीर्थे तु (→°तीर्थेषु) –b) दे1 3 वै (→तु) –c) दे1 देवेषु दे3 नदेषु (→ह्रदेषु), मुवे कूपे ह्रदे देवखाते

२७ ब1 दे4 ○ (द्र २५ पा वि), दे6 7 ○ (द्र २३ पा वि) –c) दे8 वर्षा तु (→वर्षासु) –d) ते1 यदि चेत (→यदीच्छेत्)

२८ ब1 दे4 ○ (द्र २५ पा वि), दे6 7 ○ (द्र २३ पा वि) –a) ते1 अस्मिन् (→अस्ति), दे5 ते1 क्षेत्रे (→क्षेत्र), दे1-3 10 ते1 गुह्य (→दिव्य)

२९ दे4 ○ (द्र २५ पा वि), दे6 7 ○ (द्र २३ पा वि) –a) ब3 यत्र कुण्डे**** –b) ब3** त्यभि° (→प्राप्नोत्यभि°), मुवे जलम (→फलम)

३० दे4 ○ (द्र २५ पा वि), दे6 7 ○ (द्र २३ पा वि) –b) दे3 तु (→च), ते1 जन्मजन्मकृत च यत –c) मुवे शीघ्र नश्यति तत्सव –d) दे5 8 9 11 मुवे कीत्तनात् (→कीत्तने), ब3 की*******

३१ दे4 ○ (द्र २५ पा वि), दे6 7 ○ (द्र २३ पा वि), ब3 cd ○ –d) दे2 ते1 देवी, दे5 8 9 11 मुवे देवि (→देवो)

३२ दे4 ○ (द्र २५ पा वि), दे6 7 ○ (द्र २३ पा वि), दे5 8 9 11 मुवे ३२ c–३३ b ○ –a) दे5 8 9 11 मुवे देवि (→देव) –b) दे5 8 9 11 मुवे विश्राम कुरुते तु य –d) दे2 ते1 जायते (→जातो वा), ब3 जातो वा नप***

३३ दे6 7 ○ (द्र २३ पा वि), दे4 ab ○ (द्र २५ पा वि), दे5 8 9 11 मुवे ab ○ –a) ब3** (→मासे), दे10 च (→वै), ते1 मासे वै कौमुदी देवी –b) ब3 दे1 2 ते1 प्रदक्षिण (→प्रदक्षिणा) –cd) दे5 8 9 11 मुवे नारायणसमीपे तु सोऽनन्तफलमश्नुते

३४ दे6 7 ○ (द्र २३ पा वि) –a) दे3 सुप्तो स्थिर्ति, दे10 शुप्तोसित्त, ते1 सुप्ते स्थित (→सुप्तोत्थित) –b) ते1 च सुन्दर (→वसुन्धरे) –c) दे10 पुन्यरावृत्तिर (→पुनरावृत्तिर्) –d) दे5 9 जायते (→जायते), ते1 न (→स)

३५ दे6 7 ○ (द्र २३ पा वि) –a) ब कुमुदस्य**** –b) दे5 8 9 11 मुवे नवम्या तु (→मथुराया) –c) ब3 दे2 10 ते1 प्रदक्षिण (दे2 °णी) (→दक्षिण), दे5 8 9.11 प्रदक्षिणीकृत्य वसुधा, मुवे प्रदक्षिणीकृत्य भुव

१२५ स्वर्णभार च गर्त्तस्थ गृहे तिष्ठति सचितम् ।।२९
निवर्त्त गच्छ सतुष्ट सुहृदा प्रीतिवर्धन ।
एव द्रक्ष्यामि ते मार्गं मथुरा येन गम्यते ।।३०

सूत उवाच ।❀

वणिक् हृष्टमना भूत्वा पुनर्वचनमब्रवीत् ।
इमामवस्था सप्राप्य कथ ज्ञानसमुद्भव ।
तत स कथयामास यद् वृत्त हि पुरातनम् ।।३१
प्रतिष्ठाने पुरवरे विष्णोरायतन महत् ।
प्रभातसमये तत्र विष्णोरायतने शुभे ।।३२
ब्राह्मणा क्षत्रिया वैश्या शूद्रास्तत्र समागता ।
वाचक पठते तत्र कथा पौराणिकी शुभम् ।।३३
मम मित्र च तत्रैव नित्यकाल प्रतिष्ठति ।
तस्मिन् काले तु मित्रेण नीतोऽह विष्णुमन्दिरम् ।।३४
अत्यादरेण महता सतोष्य च पुन पुन ।
तेनाहूतो निवृत्तस्तु मित्रपार्श्वे व्यवस्थित ।।३५
श्रुत मया तत पुण्य कूप तत्पापनाशनम् ।
समुद्रा किल तिष्ठन्ति चत्वारोऽत्र समागता ।।३६
तस्य कूपस्य माहात्म्य श्रुत तत्र महाफलम् ।
वाचकाय ततो दान दत्त सर्वैर्महाजनै ।।३७
मित्रेण प्रेरितो दाने मया मौन समाश्रितम् ।
मित्रेण च पुन प्रोक्त यथाशक्त्या प्रदीयताम् ।।३८
तदा मित्रप्रसङ्गेन दत्त वै स्वर्णमाषकम् ।
तत कालेन महता गतो वैवस्वतक्षयम् ।।३९
वैवस्वतनियोगेन ततोऽह पूर्वकर्मभि ।
प्रेतत्व समनुप्राप्तो दुस्तरं दुर्गम महत् ।।४०
न दत्त न हुत चापि न तीर्थं चावगाहितम् ।
न तर्पितास्तु पितर प्राप्तोऽह प्रेतता गत ।।४१
इत्येतत् कथित सर्वं यन्मा त्व परिपृच्छसि ।
गच्छ त्व सम्मुखस्तत्र यत्र सा मथुरा पुरी ।।४२
प्रेतस्य वचन श्रुत्वा विभुर्वचनमब्रवीत् ।
कथ धारयसे प्राणानिम वृक्ष समाश्रित ।।४३

२९ –b) ब3 तदगृहे (→त्वदगृहे) –c) दे1 सुवर्णतार्ग-गत्तस्थ, दे2 सुवणतार्गगत्तस्था, द 4 सुवणभा (दे4 °भ) रगतस्थ (दे4 °गत्तस्थ), दे5-9 11 मुवे सुवणभारोगत्तस्थो, दे10 सुवणभार गर्भस्थ, ते1 सुवणभारगन्तव्या –d) दे5-9 11 मुवे सञ्चित, दे10 चितित (→सञ्चितम)

३० –a) दे1 3 4 त्वा (दे1 न) तुष्ट, दे10 त्व तुष्ट (→संतुष्ट) –b) दे10 °वद्धन (→°वद्धन) –c) दे5 8 11 एन (→एव), ते1 द्रक्ष्याम (→द्रक्ष्यामि), द4 त (→ते), दे6 हे भद्रेच्छामि त भद्रे, दे7 भद्रे गच्छामि ते माग –d) दे5 8-11 मथुरा (→मथुरा)
❀ दे1 सूत उ०

३१ –a) दे1 हृष्टमनो, दे10 दृष्टमना (→हृष्टमना)

३२ दे10 'विष्णो तत्रैव' (३२d–३४b) ○ (द स) –a) दे10 प्रतिष्ठाने पुनरवने –c) दे3 4 प्राप्य (→तत्र)

३३ दे6 ○ (द्र ३ पा वि) (दृ स) –c) ब3 पाठक (→वाचक), मुवे वाचकास्तत्र पठति

३४ दे6 ab ○ (द्र ३ पा वि) –a) दे1 3 4 चित्त (→मित्रं) –b) दे1 3 4 10 च गच्छति दे5-9 11 मुवे च (दे7 हि) गच्छति (→प्रतिष्ठति) –d) दे6 7 °मन्दिरे (→°मन्दिरम)

३५ –a) दे10 अत्वा° (→अत्या°) –c) दे2 ते1 ततोऽहूतो (→तेनाहूतो), दे5-9 11 मुवे मित्रेण सह तत्रैव –d) दे5-9 11 मुवे तस्य (→मित्र–), दे3 4 °कार्ये (→°पार्श्वे)

३६ –a) दे5 9 11 मुवे श्रुतो (→श्रुत), दे5 9 11 मुवे कूप (→पुण्य) –b) दे2 ते1 रूप (→कूप), ब3 च (→तत), दे5 9 11 मुवे पुण्योऽय पापनाशन –c) दे7 10 समुद्र (→समुद्रा)

३७ –b) दे2 5-9 11 मुवे महतफल (→महाफल) –c) ब3 बाहुकाय (→वाचकाय) –d) दे2 ते1 दत्वा (→दत्त), दे5 सर्वो, दे9 सर्वे, दे10 सव (→सर्वैर्)

३८ दे6 7 ३८ b–३९a ○, दे8 cd ○ –a) दे6**, दे7 धात्रि (→दाने), दे8 मित्रेण प्रेरितो दाने, +मित्रेण चरिते दाने –b) दे8 मया मित्र समाश्रितम् –c) दे10 मया (→पुन)

३९ दे6 7 8 a ○, दे10 bcd ○ –b) दे5 9 11 मुवे दत्तो (→दत्त), दे5-9 11 मुवे °माषक (→°माषक)

४० दे10 a ○ –c) ब3 दे1 3 4 10 प्रेतत्वमनुसप्राप्तो –d) दे1 3 4 दुगम दुस्तर महत

४१ –b) दे1 न तीथ वावगाहित, दे2 10 ते1 न तीथ नावगाहित, दे3 तीथ वापि गाहित, दे4 न तीर्थे चापि गाहित, दे5-9 11 मुवे तीथ नैवावगाहित –d) दे5 7-9 11 मुवे तत (→गत)

४२ –d) ते1 मधुरा (→मथुरा), दे10 पुरी (→पुरी)

४३ –d) दे2 समा शुभा (→समाश्रित), दे5-9 11 मुवे वृक्षमूल समाश्रित

प्रेत उवाच ।❀

कथित हि मया पूर्व यद् वृत्त हि पुरातनम् ।
वाचकाय तु यद् दत्त सुवर्णस्य तु माषकम् ।
तद्दानस्य प्रभावेन नित्य तृप्तोऽस्मि वै विभो ।।४४
अकामेन मया दत्त तस्येद कर्मण फलम् ।
प्रेतभाव गतस्यापि न मे ज्ञानस्य विभ्रम ।।४५
ततश्च स वणिक्श्रेष्ठ आगत्य मथुरा पुरीम् ।
कृत तेन च तत्सर्व यथा प्रेतेन भाषितम् ।
तेन कृत्येन प्रेतोऽसौ मुक्ति प्राप्य दिव गत ।।४६
एतत् ते कथित भूमे माहात्म्य मथुराश्रितम् ।
चतु सामुद्रिके कूपे पिण्डदाने परा गतिम् ।।४७
तीर्थे चैव गृहे वाऽपि देवस्थानेऽपि चत्वरे ।
यत्र तत्र मृता देवि मुक्ति यान्ति न चान्यथा ।।४८
अन्यत्र हि कृत पाप तीर्थमासाद्य नश्यति ।
तीर्थे तु यत् कृत पाप वज्रलेपो भविष्यति ।।४९
मथुराया कृत पाप तत्रैव च विनश्यति ।
एषा पुरी महापुण्या यस्या पाप न विद्यते ।।५०
कृतघ्नश्च सुरापश्च चौरो भग्नव्रतस्तथा ।
मथुरा प्राप्य मनुजो मुच्यते सर्वकिल्बिषै ।।५१
तिष्ठेद् युगसहस्र तु पादेनैकेन य पुमान् ।
तस्याधिक भवेत् पुण्य मथुराया निवासिन ।।५२
परदाररता ये च ये नरा अजितेन्द्रिया ।
मथुरावासिन सर्वे ते देवा नरविग्रहा ।।५३
बलिभिक्षाप्रदातार सुनृता क्रोधवर्जिता ।
तीर्थस्नानरता ये च देवास्ते नरमूर्त्तय ।।५४
यदन्येषा सहस्रेण ब्राह्मणाना महात्मनाम् ।
एकेन पूजितेन स्यान्माथुरेणाखिल हि तत् ।।५५
अऋग् वै माथुरो यत्र चतुर्वेदस्तथापर ।
चतुर्वेदोऽपि नैव स्यान्माथुरेण सम क्वचित् ।।५६ वे १६५

❀ पाठान्तरन्नास्ति

४४ –b) दे1 3 4 तु (→हि) –c) ब3 च (→तु) –d) दे5 9 11 मुवे च (→तु) –e) ब3 मुवे प्रभावेण (→प्रभावेन) –f) दे10 दत्तोस्मि (→तृप्तोऽस्मि), ब3 दे2 6 7 ते1 प्रभो (→विभो)

४५ दे6 b,d ○ –b) ब3 तस्येद कमनि फल, दे7 स्वणमाष वसुन्धरे –c) दे6 प्रेतभाव गतस्य च –d) दे4 नाम (→न मे), दे8 विभ्रुमा (→विभ्रम)

४६ दे7 ef ○ –a) ब3 तत स वणिजा श्रेष्ठ, दे6 ततश्च स विष्वकश्रेष्ठ –b) दे10 आगच्छन (→आगत्य), ते1 मवुरा (→मथुरा) –e) मुवे प्रेतोऽसौ तेन कृत्येन

४७ दे7 ab ○ –a) दे1 भद्रे (→भूमे) –b) दे10 माहात्म्ये (→माहात्म्य), दे2 ते1 मथुरा (ते1 °धुरा) श्रुतम, दे5 6 8 9 11 मुवे मथुराभव (→मथुराश्रित) –c) दे2 °सामुद्रके, दे10 °समुद्रिके (→°सामुद्रिके) –d) ब3 दे1 3 4 10 परागति (→परा गति)

४८ –a) ब3 चौर- (→चैव), ब3 दे2 चापि (→वापि) –b) दे3 4 चत्वर, दे10 चत्वरो (→चत्वरे), ब3 चतुरे पाथ चैव हि –c) दे8 यत्र यत्र मृते देवि –d) ब3 च यान्यथा, दे2 न वान्यथा, दे10 च नान्यथा (→न चान्यथा)

४९ दे7 ४९ b–५० a ○ (द्र स) –a) ब3 अन्यत्राह कृत पाप –b) दे5 6 8 9 11 मुवे गच्छति (→नश्यति) –d) दे6 वसु° (→वज्र°), दे9 °लोपो (→°लेपो)

५० दे7 a ○ (द्र ४९ पा वि) –b) दे1 प्रविनश्यति (→च विनश्यति) –d) ब3 वत्तते (→विद्यते)

अत पर ब3 अधिकम्—

*काश्यादिपुर्यो यदि सन्ति लोके तासा तु मध्ये मथुरैव धन्या ।
आज ममौञ्जीव्रतमत्युदाहै नणा चतुधा विदधाति मुक्ति ।।

५१ –a) दे6 ब्रह्मघ्नश्च (→कृतघ्नश्च) –b) दे6 7 शौच- (→चौरो) –d) दे4 मुच्येत (→मुच्यते)

अत पर ब3 अधिकम—

*सूर्योदये तमो नश्येद्यथा वज्रभयान्नगा ।
ताक्ष्य द । यथा सर्पा मेघा वातहता इव ।।
तद्विह्वलोद्यथा दु ख सिह दृष्ट्वा यथा मगा ।
तथा पापानि नश्यन्ति मथुरादशनात्क्षणात ।।

५२ –a) दे6 7 °सहस्रे (→°सहस्र) –d) ते1 मधुराया (→मथुराया)

५३ दे10 ५३ c–५४ d ○ –a) दे 4 6 7 °रतो (→°रता) –d) दे1 3 4 निरवग्रहा (→नरविग्रहा)

५४ दे10 ○ (द्र ५३ पा वि) –b) ब3*नृता, दे2 5-9 11 मुवे तेऽमता (→सूनृता)

५५ –c) दे3 4 6 7 पूजितो न (→पूजितेन) –d) दे1 4 महत, दे6 हि यत (→हि तत), दे10 माथुरेणाहित खिल

५६ –a) ब3दे7 4मुवे अग्नुवै, दे1 अन्यच्चव, दे2ते1 शूद्रो वै (→अऋग्वै), दे4 मथुरो, दे6 ते1 माथु (ते1°धु) रे (→माथुरो), ब3 यस्तु (→यत्र) –b) दे1 3 4.10 चतुर्वेदास्तथा परे –c)

भवन्ति सर्वतीर्थानि पुण्यान्यायतनानि च ।
मङ्गलानि च सर्वाणि यत्र तिष्ठन्ति माथुरा ।
चतुर्वेद परित्यज्य माथुर पूजयेत् सदा ।।५७
सिद्धभूतगणा सर्वे ये च देवगणा भुवि ।
मथुरावासिनो लोकास्ते पश्यन्ति चतुर्भुजान् ।।५८
मथुराया ये वसन्ति विष्णुरूपाणि ते मता ।
अज्ञानास्तान्न पश्यन्ति पश्यन्ति ज्ञानचक्षुषा ।।५९

।। इति श्रीवराहपुराणे भगवच्छास्त्रे त्रिषष्ट्यधिकशततमोऽध्याय ।। १६३ ।।

# १६४

धरण्युवाच ।❀
श्रुतानि तु महादेव तीर्थानि विविधानि तु ।
असिकुण्डेति सञ्ज्ञेय तन्मे त्व कथय प्रभो ।। १
श्रीवराह उवाच ।❀
सुमतिर्नाम राजासीद् धार्मिको लोकविश्रुत ।
तीर्थयात्रानिमित्तेन स्वर्गलोक गतस्तदा ।।२
गते स्वर्ग तु सुमतौ पुत्रो राज्य चकार ह ।
विमतिर्नाम नाम्ना च राज्ये पैतामहे स्थित ।।३
राज्य च कुर्वतस्तस्य आगतो नारदस्तदा ।
विष्टर पाद्यमर्घ्य च तस्मै दत्त यथोचितम् ।।४
प्रतिगृह्य च तत्सर्वं तमुवाच स नारद ।
पितुर्ह्यनृणता गत्वा स पुत्रो धर्मभाग्भवेत् ।।५

द1 5 11 वेदैश्चतुर्भिर्नैव स्यात, मुवे न च वेदैश्चतुर्भि स्यान -d) ब सम (→सम ), द1 ग्रुचित (→क्वचित्)

५७ -b) दे6 पुण्याना मगलानि च -c) द2 ते1 मङ्गलाना च सर्वाणि -d) दे3 ये च (→यत्र)

ब3 d चरणानन्तरम अधिकम—
*आर्यावर्त्तसमो देशो मथुरा सदृशी पुरी ।
न केशवसमो दवो न माथुरसमो द्विज ।।

५८ -a) मुवे सिद्धा (→सिद्ध-) -b) दे1 विभो, द1 4 विभो, दे10 विभु (→भुवि) -c) दे1 लोकास, दे2-4 लोका, दे10 लाक (→लोकास) -d) मुवे पश्यति च (→त पश्यन्ति), दे1-4 ते1 चतुभुजा (→चतुभुजान)

५९ द6 cd ○ -a) ते1 मधुराया (→मथुराया), दे6 च (→ये) -b) ब3 दे5-9 11मुवे °रूपा हि (→°रूपाणि), ब3 त खलु, दे2 ते1 तेपु ते, दे4 ते मृता दे5-9 11 मुवे ते नरा (→त मता ) -c) दे5-9 11 मुवे ज्ञानिनस्तान्हि पश्यन्ति -d) ब० ***ज्ञानचक्षुष , दे5 9 11 मुवे अज्ञा पश्यन्ति तान्न च, दे7 ब्रह्मभूता हि ये नरा , दे8*****तान्न च

**पुष्पिका—**

**पुराणनाम—**ब3 इति वराहपुराणे भगवच्छास्त्रे मथुरामाहात्म्ये, दे1 इत्यादि वाराहपुराणे कूपमाहात्म्ये, दे2 5 7 9 11 मुवे इत्यादि वाराहपुराणे मथुरामाहात्म्ये कूपप्रभावे, दे3 4 इत्यादि श्रीवाराहपुराणे भगवच्छास्त्रे, दे6 इति श्रीवराहपुराणे कूपप्रभावो, द10 इत्यादि वाराहपुराणे ते1 इत्यादि वाराहपुराणे मथुरामाहात्म्ये रूपप्रभाव **अध्यायनाम—**ब कूपप्रभावस, दे1 6 8 9 11 मुवे ते1 ब्राह्मणमाहात्म्य नाम, दे7 ब्राह्मणमाहात्म्य नामाध्याय , दे10 कूपप्रभावो माहात्म्य नाम **अध्यायसख्या—**दे1 7 9-11 ते1 ○, ब3 त्रयोदशोध्याय , दे8 ।।६९।।, मुवे पञ्चषष्ट्यधिकशततमोऽध्याय ।।१६५।।

१६४

❀ पाठान्तरन्नास्ति

१ -a) ब3 च (→तु), ब3 दे1 3 4 10 मया (→महा-) -b) ब3 द1 2 8 10 ते1 च (→तु) -c) दे6 7 °कुडे (दे6 °ड) तु (→°कुडेति), ब दे6 विज्ञेय, दे3 4 तत् ज्ञेय, दे7 विज्ञाय (→सज्ञय) -d) दे6 यन्मे (→तन्मे)

❀ ब3 द2 6 7 वराह उवाच, दे1 5 8 9 11 ते1 वाराह उवाच, द 4 श्रीवाराह उवाच

२ -a) दे2 ते1 विमतिर् (→सुमतिर्) -b) दे2 ते1 नाम (→लाक-) -d) दे5-9 11 मुव गत पुरा (→गतस्तदा)

३ दे2 ते1 ३a-४b ○ -a) दे5-9 11मुवे नृपतौ(→सुमतौ) -b) द6 पुरो, दे8 10 पुत्रौ (→पुत्रो), दे6 राज्ये (→राज्य) -c) दे3 4 सुमतिर्, दे6 विगतिर् (→विमतिर्), दे1 3 4 तु (→च) -d)द6 पैतामह(→पैतामहे),दे6 7 स्थिता (→स्थित ).

४ दे2 ते1 ab ○ (द्र ३ पा वि ) -b) ब3 दे3 4 10 तथा (→तदा) -c) दे1 3 4 तु (→च)

५ -a) दे10 सर्वे (→सव) -b) दे10 नारद (→

इत्युक्त्वा नारदस्तत्र तत्रैवान्तरधीयत ।
नारदे तु गते राजा प्रपच्छ स्वात्ममन्त्रिण ।।६
तदा किमुक्तमृषिणा नारदेन पितु कृते ।
आनृण्यमिति यद् वाक्य मया बुद्ध न किचन ।।७
मन्त्रिणश्च ततो ज्ञात्वा पितुर्मरणमेव च ।
तीर्थयात्रानिमित्त च तस्मै राज्ञे न्यवेदयन् ।।८
अत एवोक्तमानृण्य नारदेन पितुस्तव ।
श्रुत्वा वाक्य तदा राजा तीर्थलोप चकार ह ।।९
विमतेर्बुद्धिरुत्पन्ना गच्छामो मथुरा पुरीम् ।
चतुरो वार्षिकान् मासान् मथुरायां वसामहे ।।१०
सर्वाणि तत्र तीर्थानि तिष्ठन्ति विविधानि च ।
आगते तु नृपे तत्र तीर्थान्यूचु परस्परम् ।।११
युद्ध विमतिना सार्द्ध स्वय कर्त्तु न शक्नुम ।
कल्पग्राम तु गच्छामो वाराहो यत्र तिष्ठति ।।१२
गतानि तत्र तीर्थानि कल्पग्राम वसुधरे ।
तत्र वाराहरूपेण स्थितोऽह च यदृच्छया ।
यावन् निरीक्षयाम्यग्र तावत्तिष्ठन्ति सन्निधौ ।।१३

तीर्थान्यूचु ।❀

जय विष्णो जयाचिन्त्य जय देव जयाच्युत ।
जय विश्वेश कर्त्तेश जय देव नमोऽस्तु ते ।।१४
तीर्थैं स्तुतोऽह वसुधे वचन चेदमब्रुवम् ।
वर वृणुत भद्र वो यद्वो मनसि वर्त्तते ।।१५

तीर्थान्यूचु ।❀

वराह्र्ं यदि देवेश अभय दातुमर्हसि ।
विमतिना सुपापेन कृतस्त्रास सुदारुण ।
त नियच्छस्व पापिष्ठ यदि पश्यसि न सुखम् ।।१६ वे १६६

नारद ) –c) द2 पितुस्त्वनणता, दे पितुह्यनणता, द4 पितुह्य नणता, दे5 पितुह्यनणा, दे6 पितु ह्यनपतो, दे10 पितुह्यनृणता, ते1 पितत्वमृणता (→पितुह्यनणता), ब दे2 10 ते1 कृत्वा (→ गत्वा) –d) दे 4 °भागवत (→°भाग्भवेत)

६ –a) ब3 दे1 10 तस्य (→तत्र) –b) दे3 4 तस्यै° (→तत्र°) –c) दे1 गते तु नारदे राजा –d) ब3 दे1 3 4 10 स पप्रच्छ स्वमत्रिणा (ब3 दे1 °ण , दे4 °णा)

७ –a) दे2 ते1 विमुक्तमषिणा, दे4 किमुक्तामृषिणा, दे8 किमुक्ते मषिणा (→किमुक्तमषिणा) –c) दे6 आनण्यामिति, दे7 अनृण्यमिति,ते1 अनृणाम्निति(→आनण्यमिति) –d)ते1 पूव (→बुद्ध)

७ श्लोकस्य b चरणानन्तर दे3 4 अधिकम—
श्रुत्वा वाक्य तदा राजा तीथलोक चकार ह। ( = ९ cd)

८ –b) दे10 तु (→च) –d) दे3 10 राज्ञो, दे10 राज्ये (→राज्ञे), ब3 निवेदितम, दे1** दयन, दे2 निवेदयत, दे3 4 6 न्यवेदयेत्, दे7-9 न्यवेदयत, ते1 निवेदयेत् (→न्यवेदयन्)

९ –b) दे1 3 4 पितु कृत (→पितुस्तव) –c) ब3 ततो (→तदा) –d) ब3 तीर्थे कोप, दे2-4 ते1 तीथलोक, दे5 तीर्थे यात्रा, दे6 9 11 मुवे तीथयात्रा (→तीथलोप), दे6 च (→ह)

१० –a) दे1 किमु ते, दे3 4 किमेतद दे9 विमत्ते, दे10 कितु ते (→विमतेर्) –c) दे3 4 चत्वारो (→चतुरो) –d) ब3 मधुपुर्या वसाम्यहम

११ –b) ब3 वसन्ति (→तिष्ठन्ति), दे1 3 4 तु (→च) –c) ब3 आगते च, दे4 आगतेन (→आगते तु) –d) दे1 4 तीर्थाश्चोचु , दे3 तीर्था चोचु , ते1 तीर्थामूचु (→तीर्थान्यूचु )

१२ दे10 १२ a–१३ b ○ –a) ब बुद्ध (→युद्ध) –b)ते1 शक्नुना (→शक्नुम ) –c)दे1 कल्पयास, दे3 कल्पयास, दे4 कल्पयामा (→कल्पग्राम) –d) ब3दे2 11मुवे वराहो (→वाराहो)

१३ दे10 ab ○ (द्र १२ पा वि) –d) दे1 3 4 वा (→च) –e) ब3 निरीक्षयाम्यग्रे, दे1 3 निरीक्षया माग, दे2 ते1 निरीक्षयाम्यत्र, दे4 निरीक्ष या माग, दे10 निरीक्षयाम्यग्न (→ निरीक्षयाम्यग्र)

❀ दे1 3 10 तीर्था ऊचु , दे2 ते1 तीथ उवाच, दे5 8 9 11 तीर्था यूचतु

१४ दे6 ○ –c) दे2 जय विश्वे विकर्ते(च)श, ते1 जय विश्वे विकर्तेश
१४ श्लोकानन्तर मुवे अधिकम—श्रीवराह उवाच ।

१५ दे6 ○ –b)दे1 3 अब्रुवन्, दे10ते1 अब्रवीत(→अब्रुवम)
१५ श्लोकानन्तर दे2 4 8 9 11ते1 अधिकम—वाराह उवाच ।

❀ दे6 10 ○, दे1 3 तीर्था ऊचु , दे2 ते1 तीथ उवाच, दे5 तीर्थोमूचु , दे7 तीर्थानि ऊचतु , दे11 तीर्थान्यूचतु

१६ दे10 ○ –a) ब3 दे2 5-7 11 वराह, दे8 9 ते1 वाराह (→वराह्र्ं) –c) दे1 विसतिमानुपायेन, दे2 ते1 विमतिर्नाम पापेन, दे3 4 विमतिनास्तु पापेन, मुवे सुपापिना विमतिना –d) दे1 कृत स्नान , दे3 कृतस्नान–, दे4 कृतस्नान, दे6 कृताजलि , दे9 कृतस्त्रास (→कृतस्त्रास )

श्रीवराह उवाच ।※

हिताय सर्वतीर्थानां हनिष्यामि महारिपुम् ।
तत्र तीर्थनियोगेन आगतो मथुरा पुरीम् ।।१७
तत्रागते तु वसुधे युद्ध कृत्वा तु तेन वै ।
तदाऽसिना तु दिव्येन स राजा बलदर्पित ।
सूदितो हि मया देवि अस्यग्र वुडित भुवि ।।१८
अग्रेण तु मयोद्धृत्य मृत्तिका वरवर्णिनी ।
तत्र कुण्ड महादिव्य देवर्षिविधिनिर्मितम् ।
असिकुण्डेति सज्ञा च प्राप्ता तेन वसुधरे ।।१९
तत्राश्चर्यं प्रवक्ष्यामि मम कर्मसुखावहम् ।
पश्यन्ति मनुजा सिद्धा सर्वपापविवर्जिता ।।२०
चतुर्दश्या तु द्वादश्या श्रद्दधाना जितेन्द्रिया ।
फलानि तत्र पश्यन्ति लभन्ते च सुनिश्चिता ।।२१

तस्मिन् काले ह्यह देवि मथुराया समागत ।
तत्र तिष्ठाम्यह भद्रे पश्चिमा दिशमाश्रित ।।२२
तत्र कृत्वा च हैरण्या मूर्त्तयश्च चतुर्विधा ।
तीर्थे वराहसज्ञे तु मथुराया व्यवस्थित ।
तासु दृष्टासु स्पृष्टासु सर्वपापै प्रमुच्यते ।।२३
एका वाराहसज्ञा च तथा नारायणी परा ।
वामना च तृतीया वै चतुर्थी लाङ्गली शुभा ।।२४
एताश्चतस्रो य पश्येत् स्नात्वा कुण्डेऽसिसज्ञिते ।
चतु सागरपर्यन्ता क्रान्ता तेन धरा ध्रुवम् ।
तीर्थाना माथुराणा च सर्वेषा फलमश्नुते ।।२५
तीर्थं सस्थापितस्तत्र असिकुण्डस्ततो वर ।
या सज्ञा कथिता पूर्वं कोटी वे दक्षिणोत्तरे ।
असिकुण्डादिभि कृत्वा तीर्थक्रमणिका वरा ।।२६

※ दे1 5 8 9 11 ते1 वाराह उवाच, दे2 6 7 वराह उवाच, दे3 4 श्रीवाराह उवाच

१७ –a) दे1.3 4 हित्वा च (→हिताय), दे1 3 4 °तीर्थानि (→°तीर्थाना) –c) ब3 दे1 3 4 ततस्तीथ–, दे2 ते1 तव तीथ–, दे5 तत्रा तीर्थ–, दे7 तत्र तीर्था, दे8 तत्र तीर्थे (→तत्र तीर्थ–)

१८ –b) दे2 ते1 वपु , दे8 युद्धे (→युद्ध) –c) दे6 7 तदा पिता (→तदाऽसिना) –f) ब3दे2 7 8 अस्याग्र, दे1 अव्यग्र, दे3 आप्याय, दे4 अथाय (→अस्यग्र ), ब3 त्रुटित, दे2 ते1 व्यूहित, दे4 वुडितो, दे5-9 11मुवे निहित, दे10 विदित (→वुडित)

१९ –a) दे5 8 9 11 असेरग्रेण तू(दे8 9 11 उ)द्धृत्य, दे1 आसीरेण तु उद्धृत्य, दे7 अमरेणे तु उद्धृत्य –c) दे5 9 11 मुवे महद्दिव्य (→महादिव्य) –e) दे1 साज्ञे तु, दे2 सज्ञाय, दे3 4 सज्ञेति (→सज्ञा च) –f ) दे1 3 4 प्राप्यते हि (→प्राप्ता तेन)

२० –b) दे2 ते1 मन कम–, दे5 8 9 11 मुवे मन कण–, दे6 मन कण (→मम कर्म–) –c) दे7 तत्र (→सिद्धा ) –d) दे4 6 7 °विवर्जित (→°विवर्जिता )

२१ दे4 cd ○ –a) दे5-9 11 मुवे द्वादश्या च चतुर्दश्या, दे10 चतुर्दश्या द्वादश्यां वा –b) ब3दे6ते1 श्रद्धधाना, दे1 3 4 श्रद्दधानो, दे7 श्रद्धदाना (→श्रद्दधाना), दे1-4 6 7 ते1 जितेन्द्रिय (→जितेन्द्रिया ) –c) मुवे तस्य (→तत्र) –d) दे1 3-11मुवे न (→च), दे6-3 सुनिश्चित (दे8°ता )(→सुनिश्चिता)

२२ –a) दे7 ह्व (→ह्यह) –b) दे6 7 समागता (→समागत ) –c) दे5 8 भद्र (→भद्रे) –d) ब3 दे3 दिशमास्थित , दे1 दिशिमास्थित , दे2 दिशमात्रित, दे4 दिशमास्थिता , दे6 ते1 दिशिमाश्रित , दे7 10 दिशिमाश्रिता (→दिशमाश्रित )

२३ दे1 ○ –a) ब3 दे3 4 10 तथा (→तत्र), दे2 ता कृत्य, दे3 10 कृत्या, दे6 गत्वा (→कृत्वा), दे7 तत्र कृत्वा महाभागे –b)दे3 4 तु (→च), दे7 स्वर्गे भूयश्चतुर्विधा , दे10 मूर्तापत्तेश्चतुर्विधा –c) दे2 तीथ (→तीर्थे), ब3 दे8 9 वाराह° (→वराह°) –d) दे2 4 ते1 व्यवस्थिता, दे5-9 11 मुवे व्यवम्थिता (→व्यवस्थित ) –e) ब3 तासु*ष्टासु पृष्टासु, दे1 3 तासु दष्टासु पृष्टासु, दे2 5 8 9 11 मुवे ते1 सुदृढासुस्पृ(मुवे °दृ)श (द2 ते1°शा)सुभ्रु –f ) दे5-9 11 मुवे य पश्यति स मुच्यते

२४ –a) दे10 एष (→एका), ब3 दे2 5 7-9 11 मुवे ते1 वराह– (→वाराह–), दे6–सज्ञ तु, दे7–सज्ञाश्च (→–सज्ञा च) –b) दे1 नारायणी (तथा) पुरा, दे2ते1 नारायणस्य वा, दे5-9 11 मुवे नारायणस्य च (→नारायणी परा) –c) दे2 5-9 11 मुवे ते1 वामनस्य (→वामना च), दे4 तृतीया वै, दे6 तृतीया च (→तृतीया वै), ब3 वामनाय च तृतीया वै –d) दे2 ते1 चतुर्था लागुली शुभा, दे5-9 11 चतुर्था (दे6°र्थे) लागलस्य च, मुवे चतुर्थी राघवस्य च

२५ –a) दे1 3 श्तृताश्–, दे10 एकाश् (→एताश्), दे6 7 एता व्यवस्थिता पश्येत् –b) ब3 दे10 °सज्ञके, दे1 °साज्ञके, दे2-4 ते1 °सज्ञिके (→°सज्ञित) –c) ते1 °पर्यन्त (→°पर्यन्ता), दे2ते1 क्रीडतेन (→क्रान्ता तेन) –d) ब3 वसुन्धरा ( →धरा ध्रुवम्)

२६ दे2 ते1 c–f ○ –a) दे2 ते1 तीर्थे सस्थापिते तत्र, दे5 8 9 11 तत्रस्थेषु तीर्थेषु, दे6 तत्रस्थेषु च कुण्डेषु, दे7 तत्र-

सुप्तोत्थितोऽपि द्वादश्यामसि कुण्डाप्लुतो नर ।
मूर्त्तय स्पर्शयेत् पश्येत् चत्वार पूजयेत् तथा ।
नास्येह पुनरावृत्तिर्भवेत् कालविपर्यये ॥२७

॥ इति श्रीवराहपुराणे भगवच्छास्त्रे चतुषष्ट्यधिकशततमोऽध्याय ॥ १६४ ॥

# १६५

श्रीवराह उवाच ।❀
शृणु देवि यथासञ्ज्ञा विश्रान्ते कीर्तिता पुरा ।
राक्षसेन पुरा प्रोक्ता ब्राह्मणाय महात्मने ॥१

पृथिव्युवाच ।❀
किमर्थं राक्षसेनोक्ता सञ्ज्ञा विश्रान्तिसञ्ज्ञिता ।
किमर्थं पृष्टवान् विप्र सर्वं कथय मे प्रभो ॥२

श्रीवराह उवाच ।❀
उज्जयिन्यामभूद् विप्र सदाचारविवर्जित ।
न स पूजयते देवान् न स साधून् नमस्यति ॥३
पुण्यतीर्थं समासाद्य न च स्नान करोति स ।
वेददेवाग्निरहित परदाररत सदा ॥४
सन्ध्ये द्वे शयनस्थश्च नित्यकाल च तिष्ठति । वे १

---

स्थेषु च सर्वेषु, मुवे तत्र सर्वेषु तीर्थेषु –b) दे5 9 11 मुवे असिकुण्ड महत्तरम –c) ब या य*, दे5 9 11 मुवे या सख्या (→या सञ्ज्ञा) –d) दे5-9 11 मुवे तीर्थाना (→कोटी वै) –e) ब3 दे1 असिकुण्डादित कृत्वा, दे5-9 11मुवे असिकुण्ड समारभ्य –f) दे5-9 11 मुवे तीर्थानुक्रमणिका वरा

२७ दे2 ते1 ab ○ –a) दे1 सुप्तोच्छ्रितोपि, दे3 सुप्तोस्थितोपि, दे6 सुप्तोर्थितोपि दे7 सुप्तोच्छूतोपि, दे10 सुप्तस्थितोपि (→सुप्तोत्थितोऽपि) –b) दे7 कुण्डात्ततो, दे10 कुण्डोप्लुतो (→कुण्डाप्लुतो) –c) ब3 मूत्तय स्पशये*, दे1 मूत्तय स्पशयेत्पश्ये, दे2 ते1 मूर्त्तीश्चतस्रो य पश्येद, दे5 9 11 मुवे मू (दे7 सू) र्त्ती पश्यति यस्तास्तु –d) दे2 ते1 ध्यायेद्वा पूजयेत्तथा, दे5-9 11 मुवे ब्रह्मभूयाय कल्पते –e) दे5 नास्सेह, दे6 मुवे नास्तीह, दे7 9 11 ते1 नास्त्येह(→नास्येह), दे1 वश्येह वपुरावृत्तिर, दे3 4 तस्येह वपुरावृत्तिर, दे10 नास्य क्षत्र नरा नृन्वि –f) दे1 3 4 °विपययात (→°विपयये)

**पुष्पिका**—

**पुराणनाम**—दे6 ○, ब3 इत्यादि वाराहपुराणे भगवच्छास्त्रे मथुरामाहात्म्ये, दे1 2 5 7-11 ते1 इत्यादि वाराहपुराणे, दे3 4 इत्यादि वाराहपुराणे भगवच्छास्त्रे, मुवे इति श्रीवराहपुराणे **अध्यायनाम**—ब3 असिकुण्डप्रभाव, दे1-6 8-11 असिकुण्डप्रभाव, दे7मुवे असिकुण्डप्रभावो नाम, ते1 असिकुण्ड*** **अध्यायसख्या**—दे1 11 ○, ब3 चतुदशोऽध्याय मुवे षटषष्ट्यधिकशततमोऽध्याय ॥१६६॥, **ते1** त्र्यशीत्युत्तरशततमोऽध्याय

१६५

❀ दे1 2 5 7 9 11 ते1 वा (दे2 7 व)राह उवाच, दे3 4 10 श्रीवाराह उवाच, दे6 वराह , दे1 वाराह उ०

१ –a) दे1 3 4 °सञ्ज्ञा (→°सञ्ज्ञा), दे2 ते1 तीथराजस्य या सञ्ज्ञा (ते1***) –b) ब3दे10 विश्रान्ति , दे1 विश्रान्तै , दे6 7 विश्रुते , ते1**ते (→विश्रान्ते ), ब3 कथिता (→कीर्तिता)

❀ ब3 धरण्युवाच, दे6 पृथिवी उवाच

२ –a) दे4 किमाथ रक्षसो प्रोक्ता –b) दे2 ते1 °सञ्चिता, दे3 °सञ्ज्ञिका, दे4 °सञ्ज्ञित (→°सञ्ज्ञिता) –c) दे3 4 विप्रवान्, दे7 इष्टवान (→पृष्टवान), दे3 4 पष्ट (→विप्र ) –d) दे4 विभु (→प्रभो)

❀ दे1 2 5-9 11 ते1 वा (दे2 6 7 व)राह उवाच, दे3 4 10 श्रीवाराह उवाच, दे1 वाराह उ०

३ –a) दे3 4 समुद्भूत (→अभूद विप्र ), ते1 सदाचारप्रवर्तित –c) दे2 ते1 तदा, दे10 न स–(→न स), ब3 न चैव पूजयेद्देवान –d) दे1 3 4 न साधून्नमस्यति

४ –a) ब दे1 3 4 पुण्या तिर्थि, दे10 पुण्या तिथि (→पुण्यतीथ) –b) दे7 नैव (→न च), दे3 4 च (→स ) –c) ब3 देववेदाग्नि°, दे1-4 10 ते1 देवदेवाग्नि°, दे7 मुवे वेदवेदाङ्ग° (दे7 °ग्नि°) (→वेददेवाग्नि°) –d) दे7 सदाचारविवर्जित

५ –a) ब3 दे1 10 शयनस्थ स, दे3-5 8 9 शयनस्थस्य, मुवे शयने चैव (→शयनस्थश्च) –b) मुवे नित्य मूढ (→नित्य

न स देवमनुष्याश्च पितॄन् पूजयते सदा ।।५
पापाचारो नैकृतिक पापसङ्ग सुदुर्मति ।
गार्हस्थ्यधर्ममाश्रित्य मोहितो वर्त्तते सदा ।।६
गार्हस्थ्य सर्वधर्माणा श्रेष्ठमुक्त स्वयभुवा ।
जीवन्ति जन्तव सर्वे यथा गा सर्वत स्थिता ।।७
यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तव ।
एव गार्हस्थ्यमाश्रित्य सर्वे जीवन्ति जन्तव ।।८
गार्हस्थ्ये वर्त्तमानोऽपि न स धर्मं समाश्रयत् ।
उभे सन्ध्ये परित्यज्य पापबुद्धि समाश्रित ।।९
तत स चौर्यता प्राप्त पापै सह नराधम ।
स च रात्रौ द्रवन् लोकाँल्लब्धोऽसो राजरक्षिभि ।।१०
पलायमान स तदा अन्धकूपेऽपतत् तदा ।
मृतोऽसौ पतितस्तत्र राक्षसत्वमुपागत ।।११
अन्धकूपे स पतितो घोररूपेऽवसत् तदा ।
केनचिदथ कार्येण महान् सार्थ उपागत ।।१२
तेषा मध्ये द्विज कश्चिद् रक्षा कृत्वा वसुधरे ।
रक्षोघ्नेन च मन्त्रेण सर्वं सार्थं च रक्षते ।
[तत्रागत्य च रक्षस्तु ब्राह्मण वाक्यमब्रवीत्]।।१३

राक्षस उवाच ।*

अह दास्यामि ते विप्र यत्ते मनसि वर्त्तते ।
बहुकालेन सप्राप्त भोजन च यथेप्सितम् ।।१४
उत्तिष्ठ विप्र गच्छ त्वमन्यत्र शयन कुरु ।
येनाह भक्षये सार्थं यावत् तृप्तिर्भवेन्मम ।।१५
राक्षसस्य वच श्रुत्वा विप्रो वचनमब्रवीत् ।
एकसार्थप्रयातोऽह नोत्सृजामि कथचन ।।१६

---

काऊ), दे1 3 4 तु दे,-11मुवे स (→च) –c) दे1-4तै1 च(→स) –d) ब3 च पूजया दे4 पूजयेने (→पूजयते)

६ दे3 4 ○ –a) दे, 9 11 मुवे पापाचारस्ना नित्य –b) ब3 °सज्ञा, ने1 °सगा, दे2 °सगी, दे10 °सगात (→°सङ्ग), दे1 6 स म्मति , ने10 सुन्मति (→सुदुर्मति ) –c) ब दे1 10 गाहस्थ्य, ने, 6 गार्हस्थ–(→गार्हस्थ्य–) –d) ब3 सर्वे जावन्ति चाश्रमा ने6 - सव जीवन्ति जन्तव

अत पर ब3 अतिक्रम—

गाहस्थ्य वत्तमानपि न चाधम्म समाश्रयेत् ।
उभ सन्ध्ये परित्यज्य पापबुद्धि समाश्रित । ( = ९)

७ ब ने6 7 ○ –a) दे4 गाहस्था, तै1 गाहस्थ्या (→ गाहस्थ्य) –b) दे10 सृष्टि (→श्रेष्ठ), दे- उक्ता, तै1 उक्त्वा (→ उक्त), दे3 4 °भुव (→°भुवा) –c) मुवे यावन्ति (→जीवन्ति) –d) दे1 3 4 गा , दे5 8 9 11 गौ, मुवे गो (→गा), दे2 8-11 स्थिता (→स्थिता )

८ ब3 ○, दे6 7 ab ○ –a) दे2 तै1 वि (तै1 व) याता (तै1 °ना) तरताश्रित्य, दे10 यथा माता समाश्रित्य –c) दे5 11 तै1 गृहस्थ (→गार्हस्थ्य) –d) दे1 वाश्रमा , दे2-4 10 चाश्रमा , दे6 7 11 चागमा (→जन्तव )

९ ब3 ○ –a) दे1 3 गाहस्थ्य, दे2 6 गार्हस्थे, दे4 गाहस्थ–, दे5 गाहस्था, दे7 गाहस्त्ये (→गाहस्थ्ये) –b)दे1 3 4 6 समाश्रयेत (→समाश्रयत )

१० दे1 bcd ○ –a) दे6 तत स चौरत्व प्राप्त , मुवे तत स चौय कुर्वाण –b) ब, दे3 4 10 समागत (→नराधम ) –d)दे7 10 लुब्धोसौ (→लब्धोऽसौ) –cd) ब3 लोकाल्लब्धो (→लोकाँल्लब्धो)

११ –a) ब पालय° (→पलाय°), दे5 7-9 11 मुवे स पर, दे6 परम (→स तदा) –b) द भवत ने4 भवेन (→[अ]पतत) –c) दे1 9 11 मत स, दे10 सृत स, तै1 तत स (→ मतोऽसौ) –d) दे राक्षसत्व समाश्रित

१२ –b) ब3 ने1 3 4 10 °रूपे (→°रूपो), दे10 घोर रूपे वसस्तदा –c) ने5-11 मुवे कदाचिद (→केनचिद), दे2 तै1 कालेन, दे5-11 मुवे कार्येषु (→कार्येण) –d) दे° तै1 महत (→ महान्), दे2-4 10 तै1 साथ (→साथ)

१३ ब3 दे1-4 10 तै1 ef ○ –a) दे2 तै1 तिष्ठन (→तेषा), दे6 द्विजा, दे10 द्रिज (→द्विज ) –b) ब3 रक्षी भूत्वा, दे6 रक्षा हत्वा, दे10 दत्ता कृत्वा (→रक्षा कृत्वा) –c) ब3*, दे1 सु–, दे2 तै1 स (→च) –d) दे2 8-10 तै1 सव–(→सव), दे1 3 4 तु (→च), दे1 रक्षत , दे2 तै1 चक्षते दे3 रक्षयते, दे4 रक्षत, दे5-9 11 मुवे रक्षति (→रक्षते) –e) दे7-9 11 रक्षन्तु (→रक्षस्तु)

* दे4 राक्षसा उवाच, दे9 राक्षस उ०

१४ –c) ब3 दे1-4 सप्राप्तो, दे6 सप्राप्ते, दे10 सशप्तो, तै1 सप्राप्यो (→सप्राप्त) –d) दे1 3-4 तु (→च), दे3 4 यथेस्थित (→यथेप्सित)

१५ –a) दे1 3 4 तै1 गच्छ विप्र (→विप्र गच्छ) –c) दे2 तै1 येनाह भक्षसे चात्र –d) दे2 तै1 यस्य (→यावत्)

१६ दे10 १६a–२०d ○ –c) मुवे एक साथ (→एक साथ–)

तस्माद् राक्षस गच्छ त्व सार्थं मम परिग्रहम् ।
निरीक्षितु न शक्नोषि मम मन्त्रबलेन च ।।१७

राक्षस उवाच ।❀

मम भक्षे हृते विप्र दोषस्तव भविष्यति ।
दया कुरु त्व विप्रर्षे भोजन मम दीयताम् ।।१८

ततोऽसौ पृच्छते विप्रो राक्षस दारुण प्रति ।
केन त्व कर्मदोषेण राक्षसत्वमुपागत ।।१९

ततश्च कथयामास यथावृत्त पुरातनम् ।
स्वाचारस्य स्वरूप च राक्षसत्व यथा गत ।।२०

विप्र उवाच ।❀

मित्रत्वे वर्त्तसे रक्षो वद दास्यामि कि तव ।
आत्मनश्चोपकारेण प्रिय कि करवाणि ते ।।२१

राक्षस उवाच ।❀

ददासि यदि मे विप्र यन्मे मनसि वर्त्तते ।
मथुरायां च यत्स्नान कृत विश्रान्तिसञ्ज्ञके ।
तस्य तावत् फल देहि येन मुक्ति व्रजाम्यहम् ।।२२

विप्र उवाच ।❀

कथ जानासि रक्षस्त्व तीर्थ विश्रान्तिसञ्ज्ञकम् ।
कथ सञ्ज्ञाऽभूत्तस्य तत् कथयस्व राक्षस ।।२३

राक्षस उवाच ।❀

उज्जयिनी नाम पुरी तस्या वासो हि मे सदा ।
कस्मिश्चिदथ कालेन गतोऽह विष्णुमन्दिरम् ।।२४
तस्याग्रे तिष्ठते विप्रो वाचको वेदपारग ।
विश्रान्तितीर्थमाहात्म्य श्रावयेत् स दिनेदिने ।।२५ वे १६७ २

१७ दे10 ○ (द्र १६ पा वि) -a) ते1 तष्णाद (→तस्माद) -c) दे6 न रक्षित (→निरीक्षितु), ब2 दे6 7 शक्नोमि, दे2 5 8 9 11 मुवे ते1 शक्तोसि (→शक्नोषि) -d) दे1 वा च कलेन, दे3 4 चात्र बलेन दे6 7 चेद्वतते न (→मन्त्र बलेन), दे1 वा, दे5 9 11 मुवे हि (→च)

❀ दे10 ○ (द्र १६ पा वि), दे9 राक्षस उ०

१८ दे10 ○ (द्र १६ पा वि) -a) ब3 दे6 मुवे भक्ष्ये, दे3 4 भद्र (→भक्षे), ब3 दे हृते, दे1 द्रुते, दे2 हतो (→ हृते), दे3 विप्रे (→विप्र) -c) ब, दे1 3 4 कृपा (→दया), दे6 विप्र मे (→विप्रर्षे)

१९ दे10 ○ (द्र १६ पा वि) -a) दे5-9 11 मुवे ततोऽपच्छदसौ विप्रो -b) दे1 करण दे3 करुण, दे4 करुणा (→ दारुण), ब, दे1 4 ते1 तदा (→प्रति)

२० दे10 ○ (द्र १६ पा वि) -a) ब3 स (→च), दे7 आत्मान कथयामास -b) मुवे कथा- (→यथा-), दे1 -मत्य, दे -मृत, दे4-वृत्ता (→-वत्त) -c) ब3 अचौरस्य, दे3 आचरेस्य, दे4 आचारस्या (→स्वाचारस्य), दे1 3 4 तु (→च), दे5-9 11 मुवे अनाचारादि हेतोश्च -d) ब3 दे5-9 11 मुवे उपा गत (मुवे °त), दे1 3 यथा गत (→यथा गत)

अत पर दे5-9 11 मुवे अधिकम्—

*आत्मान कथायामास विप्राग्रे स यथा तथम (मुवे यथम)।
तस्य दु,खेन सयुक्तौ विप्रोसौ वाक्यमब्रवीत् ।

❀ दे5 8 9 11 विप्रोवाच, दे10 ब्राह्मणा ऊचु

२१ -a) दे1 वत्तते, दे3 रक्षते, दे8 वर्तसे (→वत्तसे), दे4 मित्रत्वे रक्षो***, दे10 मासाथ भक्षरक्षस्त्व -b) ब3 दे5 6 8 9 11 मुवे तव, दे7 भव (→वद), दे5 9 11 मुवे वद (→तव), दे10 मत्तोथ यमनोर्थित, ते1 [अ] वदास्यामिति किं तव -c) दे5 8 9 10 मुवे आत्मना (→आत्मनश्च), ब3 दे1 3 4 चोपकाराय (→चोप कारेण), दे6 7 आत्मना चोपकरण, दे10 ददामि तुभ्य यत किञ्चित -d) ब दे1 3 वद किं, दे2 ते1 प्रिय तु (→प्रिय किं), दे10 त्वया मनसि चिन्तित

❀ दे6 राक्षस, दे10 राक्षस उ०

२२ दे1 3 4 ef ○ -a) दे6 7 ददामि (→ददासि), दे5 8 9 मद, दे6 7 11 मुवे तद (→मे) -b) ते1 यत्ते (→यन्मे) -c) दे1 3 4 तु (→च), दे1 2 मुवे स्नात (→स्नान) -d) दे1 °साछिके, दे3 6 ते1 °सज्ञिके (→°सञ्ज्ञके) -e) मुवे तच्च (→ तस्य), दे5-11 मुवे स्नान- (→तावत)

अत पर मुवे अधिकम—
*तेन दु खेन सयुक्तो विप्रो वाक्यमथाब्रवीत ।

❀ दे, 4 ○, ब3 दे7 ब्राह्मण उवाच, दे1 10 विप्र (दे10 °प्रा) उ०

२३ दे1 3 4 ab ○ -a) दे7 जानामि (→जानासि), दे6 विप्र त्व, ते1 रक्ष त्व (→रक्षस्त्व) -b) ब सव, दे7 तीथ- (→तीर्थ), दे5 °सञ्ज्ञाक, ते1 °सज्ञिक (→°सञ्ज्ञक) -c) द5 7-9 11 मुवे सञ्ज्ञातस्याभूत, दे6 तस्य सञ्ज्ञाभूत (→सञ्ज्ञाऽभूत्तस्य)

❀ पाठान्तर नास्ति

२४ -a) दे1 उज्जयनी नाम नगरी, दे2 उज्जयिनी नामत पुरी, दे5 9 11 मुवे पुरी उज्जयिनी नाम (मुवे °म्ना) -b) दे5 8 तस्या (→तस्या), ब3 वालो, दे5 वास (तो), दे7 वामो (→ वासो) -ab) ते1 उज्जयिनी नाम तस्या च पुरे वासो हि मे सदा -c) ब3 दे10 काले तु (→कालेन)

२५ -a) दे5 8 तिष्ठतो (→तिष्ठते) -b) ते1 याचको (→वाचको) -d) दे5-9 11 मुवे श्रावयत् (दे6 मुवे °यन) (→ श्रावयेत्)



118

२७ तस्य श्रवणमात्रेण मम भक्तिर्हृदि स्थिता ।
सा सञ्ज्ञा च श्रुता तत्र विश्रान्तेश्च मयाऽनघ ।।२६
वासुदेवो महाबाहुर्जगत्स्वामी जनार्दन ।
विश्राम कुरुते तत्र तेन विश्रान्तिसञ्ज्ञका ।।२७
राक्षसस्य वच श्रुत्वा विप्रो वचनमब्रवीत् ।
एकस्नानस्य हि फल तव दत्त च राक्षस ।
इत्युक्तमात्रे वचने ततो मोक्षमवाप स ।।२८

।।इति श्रीवराहपुराणे भगवच्छास्त्रे पञ्चषष्ट्यधिकशततमोऽध्याय ।। १६५ ।।

# १६६

धरण्युवाच ।❀
मथुरा रक्षते कोऽसौ क्षेत्रपाल स्थित सदा ।
तेन दृष्टेन यत्पुण्य कथयस्वाखिल प्रभो ।।१
श्रीवराह उवाच । ❀
दृष्ट्वा भूतपति देव वरद पापनाशनम् ।
तेन दृष्टेन वसुधे माथुर फलमाप्नुयात् ।।२
पुरा वर्षसहस्र तु तपस्तप्त सुदारुणम् ।
पूर्ण वर्षसहस्रे तु मया सतोषितो हर ।
वर वरय भद्र ते यस्ते मनसि वर्त्तते ।।३
ईश्वर उवाच ।❀
सर्वगस्त्व हि देवेश मया ज्ञात सुनिश्चितम् ।
मथुराया च मे स्थान सदा देव प्रदीयताम् ।।४

२६ –a) दे1 3 4 10 तेन (→तस्य) –b) दे6 7 यदि, ते1 हि स– (→हृदि) –c) दे1 य, दे10 तु (→च), दे1 शुभा दे3 सुता (→श्रुता) –d) दे6 विश्रान्ति च, दे10 विश्रान्तेस्तु (→ विश्रान्तेश्च)

२७ –a) ब3 दे1 3 4 10 वसेन्नित्य (→महाबाहुर्) –b) ब3 दे1 3 4 10 तस्मिन स्थाने द्विजोत्तम –c) ब3 दे1 3 4 10 येन (→तत्र) –d) दे1 येन (→तेन), ब3 °सज्ञक, दे1 3 4 °सज्ञक, मुवे °सज्ञिता (→°सज्ञका)

२८ –c) ब3 दे10 स्थानस्य (→स्नानस्य), दे10 च (→ हि) –d) दे7 दत्त तव (→तव दत्त), दे1 3 4 तु, दे10 हि (→ च) –e) मुवे विप्रे चेत्युक्तमात्रे च –f) मुवे मोक्षवास (→ ततो मोक्ष), ब3 अवासवान्, दे1 3 4 अवाप्नुयात् (→अवाप स), दे10 राक्षसो मुक्तिमासवान्

**पुष्पिका—**

**पुराणनाम**—ब3 इत्यादि वराहपुराणे भगवच्छास्त्रे मथुरा-माहात्म्ये, दे1 2 5 10 इत्यादि वाराहपुराणे विश्रान्तिमाहात्म्ये, (दे5 °त्म्य), दे3 4 इत्यादि श्रीवाराहपुराणे भगवच्छास्त्रे विश्राति-माहात्म्ये, दे6 इति वाराहपुराणे, दे7-9 11 ते1 इत्यादि वाराहपुराणे, मुवे इति श्रीवराहपुराणे मथुरामाहात्म्ये **अध्यायनाम**—दे1-4 10 ○, दे5 6 8 9 11 ते1 विश्रातिमाहात्म्य, दे7 मुवे विश्रान्तिमाहात्म्य नाम (दे7 नामाध्याय) **अध्यायसख्या**—दे1-7 10 11 ते1 ○, दे8 ।। ७० ।।, दे9 ।। १७ ।।, मुवे सप्तषष्ट्यधिकशततमोऽध्याय ।। १६७ ।।

१६६

❀ ब3 पृथिव्युवाच, दे3 4 धरिण्युवाच, दे6 धरणी उवाच, दे10 धरण्यु

१ –a) दे1 क्षेत्रपाल स्थित **, दे5-9 11 मुवे क्षेत्रपालो व्यवस्थित –c) ब नष्टेन, दे6 पुण्येन (→दृष्टेन), दे5 पुण्ये (→ पुण्य), दे10 तन्मे कथय देवेश –d) दे1 विभो (→प्रभो), दे10 त्वद्भक्ताह सदा विभो

❀ दे1 3-5 8 11 ते1 वाराह उवाच, दे2 6 7 वराह उवाच, दे3 5 श्रीवाराह उवाच, दे9 10 वा (दे10 श्रीवा)राह उ०

अत पर दे10 अधिकम्—
*माथुरे मण्डले दिव्ये क्षेत्रपाल शिव स्थित ।

२ दे10 ab○ –a) दे1 3 °पतिर् (→°पति) –c) दे5 9 11मुवे तस्य दशनमात्रेण –d) दे2 10ते1 माथुरे (→माथुर), दे5-9 11 मुवे मथुराया फल लभेत (मुवे भवेत्)

३ –b) ते1 तपस्तेपे (→तपस्तप्त) –c) दे8 वर्षे (→ वर्ष–), दे2 ते1 °सहस्रेण, दे6 °सहस्रे च (→°सहस्रे तु) –d) ब3 मया सभाषितो हर , दे1 3 4 हरेण मम भाषित –f) ब3दे1 3 4 6 7 यत्ते (→यस्ते)

❀ दे1.○, दे10 ईश्वर उ०

४ –a) ब3 सवज्ञस्त्व, दे2 सर्व्वगुह्य, ते1 सव** (→सर्वगस्त्व) दे6 देवेशि (→देवेश) –b) दे3 जात (→ज्ञात) –d) ब3 दे1 3 4 10 सदा देवेश दीयताम् (दे3 4 °ते)

**देवदेववच श्रुत्वा हरिर्वचनमब्रवीत् ।**
**मथुराया च देव त्व क्षेत्रपालो भविष्यसि ।।५**
**त्वयि दृष्टे महादेव मम क्षेत्रफल लभेत् ।**
**अन्यथा नाप्नुयात् सिद्धिमेवमेतन्न सशय ।।६**
**येन यद् यादृश पुण्य कृत तीर्थे प्रयत्नत ।**
**भजन्ते मनुजा सिद्धिमात्मभावेन तादृशीम् ।।७**
**मम क्षेत्रप्रवेशे च भूमि ससारछेदनी ।**
**इन्द्रस्येव पुरी रम्या यथा नाकेऽमरावती ।**
**जम्बूद्वीपे तथोत्कृष्टा मथुरा मम वल्लभा ।।८**
**विशतिर्योजनाना हि माथुर मम मण्डलम् ।**
**पदे पदेऽश्वमेधाना पुण्य नात्र विचारणा ।।९**
**न मया कथित देवि ब्रह्मणश्च महात्मन ।**
**रुद्रस्य न मया पूर्व कथित च वसुधरे ।**
**मया सुगोपित पूर्व गुह्याद् गुह्यतर परम् ।।१०**
**अत्र क्षेत्रे पुरी रम्या सर्वरत्नविभूषिता ।**
**तस्या तिष्ठन्ति तीर्थानि तानि वक्ष्यामि तच्छृणु ।।११**
**षष्टिकोटिसहस्राणि षष्टिकोटिशतानि च ।**
**तीर्थसख्या च वसुधे मथुराया मयोदिता ।।१२**
**गोवर्द्धन तथाऽक्रूर द्वे कोटी दक्षिणोत्तरे ।**
**प्रस्कन्दन च भाण्डीर कुरुक्षेत्रसमानि षट् ।।१३**
**पुण्यात पुण्यतर श्रेष्ठमेतद् विश्रान्तिसज्ञकम् ।**
**असिकुण्ड सवैकुण्ठ कोटितीर्थोत्तम स्मृतम् ।।१४** वे १६८१

---

५ -a) दे6 देववेद° (→देबदेव°) -d) दे2 4 8 ता भविष्यति (→भविष्यसि)

६ -a) दे6 पष्टे (→दष्टे) -b) दे4 क्षेत्र, दे10 क्षत्र (→क्षेत्र ), दे2 4 10 मुवे ते1 भवेत (→लभेत) -c) ब3 नाशयेत सिद्धिम दे1 नाशयेत्तस्य, दे3 4 नाशयेद्देवि, दे10 न भवेत्सिद्धिर् (→नाप्नुयात सिद्धिम्)

७ दे1 ७d- इत्यारभ्य अध्यायसमसिपय"त नास्ति -b) दे5-9 11 मुवे तीथ (→तीर्थे), दे1 प्रिय तत (→प्रयत्नत ) -c) दे1 3 4 यजन्ते, दे2 ते1 लभ"ते (→भजन्ते), दे3 सिद्धि (→सिद्धिम)

८ दे1 ○ (द्र ७ पा वि ) -a) ब3 ते1 °प्रवेशेन, दे6 °प्रभावेन, दे10 °प्रदेशे च (→°प्रवेशे च) -b) ते1 भूमे (→भूमि ), ब3 °छेदिनी, दे2 ते1 °छेदिना, दे5 11 मुवे °नाशिनी (→°छेदनी), दे4 भूमि सा पापछेदनी -c) द3 इन्द्रस्य च, दे6 7 इन्द्रस्यैव (→इन्द्रस्येव), दे5 8 पुरी (→पुरी) -d) दे10 स्वर्गे (→नाके) -e) दे3 4 तथोत्कृष्ट, दे6 7 तथा दष्ट्वा (→तथोत्कृष्टा) -f) ब3 दुलभा, ते1 वल्लभी (→वल्लभा)

९ दे1 ○ (द्र ७ पा वि ) -a) ब3 विशति, दे6 विंशति, ते1 विशन्ति (→विशतिर्), ब3 योजनाना"तु, दे6 योजनाना च, ते1 ये जनान्ते हि (→योजनाना हि) -c) ब3 दे10 °मेधीय (→°मेधाना) -d) दे5 9 11 मुवे फल (→पुण्य), दे10 फल नास्त्यत्र सशय

अत पर ब3 अधिकम्—

*तपस्तप्त महत्तैस्त्व कृत तैस्तु महद्भुत ।
तैश्च दत्त महादान ये च मतपुरवासिन ।।
ते स्नाता सव्वतीर्थे वै ते महायज्ञयाजिन ।
ते तीणसवधर्मा हि ये च मतपुरवासिन ।।
श्रद्धया भक्तियुक्तस्तु स्नात्वा मधुपुरी नर ।
ब्रह्महापि विशुद्धयेत किं पुनस्त्वन्यपातकी ।।
कृमिकीटपतङ्गाद्या मथुराया मता हि ये ।
कूलात पतन्ति ये वृक्षास्तेपि यान्ति पराङ्गतिं ।।
अनुषङ्गेन गच्छन्ति वाणिज्यनापि सेवया ।
मथुरास्नानमात्रेण पाप त्यक्त्वा दिव व्रजेत ।।
मथुरा स्नातु कामस्य गच्छतस्तु पदे पदे ।
निवाशानि व्रजन्ते च पापान्यस्य शरीरत ।।

१० दे1 ○ (द्र ७ पा वि ) -b) दे 7 ब्राह्मगश्च, दे4 ब्रह्मणास्य (→ब्रह्मणश्च) -c) दे3 वद्धस्य (→रुद्रस्य), ते1 पूर्वे (→पूव) -e) दे6 सर्वे (→पूव) -f) दे6 गुह्य गुह्य पर मम

११ दे1 ○ (द्र ७ पा वि ) -a) ब3 दे4 10 तत्र, दे6 अन्यत, दे7 अन्य (→अत्र), ते1 पुरा (→पुरी) -c) ते1 तिष्ठति (→तिष्ठन्ति), दे2 ते1 तीर्थाख्य (→तीर्थानि) -d) दे2 ते1 कथयामि च तच्छृणु

१२ दे1 ○ (द्र ७ पा वि ) -d) ते1 तवोदिता (→मयोदिता)

१३ दे1 ○ (द्र ७ पा वि ), दे4 १३d-१४b ○ -a) दे3 शतद्धन (→गोवद्धन), दे2 ते1 तदाक्रूर (→तथाऽक्रूर) -b) दे6 द्वी (→द्वे), ब3 दे3 कोटि (→कोटी) -c) द3 4 भासुर च, दे6 भाण्डीर च (→च भाण्डीर) -d) दे7 कुरुक्षेत्रे, ते1 कुरुक्षत्र (→कुरुक्षेत्र-)

१४ दे1 ○ (द्र ७ पा वि ), दे4 ab ○ (द्र १३ पा वि ) -b) ब3 दे2 10 ते1 तीथ- (→एतद), दे3 6 7 ते1 °सज्ञिक (दे3 °त) (→°सज्ञकम्) -d) ब3 कोटितीर्थोपम स्मतम, दे3 4 कोटितीर्थमत स्मृत, दे6 कोटितीथ तु म स्मृत, ते1 कोटितीर्थोत्र सस्मृत

१८ अविमुक्त सोमतीर्थं यामुन तिन्दुक तत ।
चक्रतीर्थं तथाऽक्रूर द्वादशादित्यसज्ञितम् ।।१५
एतत्पुण्य पवित्र च महापातकनाशनम् ।
कुरुक्षेत्राच्छतगुण मथुराया न सशय ।।१६
ये पठन्ति महाभागा शृण्वन्ति च समाहिता ।
मथुरायास्तु माहात्म्य ते यान्ति परम पदम् ।
कुलानि ते तारयन्ति द्वे शते वशयोर्द्वयो ।।१७
एतन्मरणकाले तु य स्मरेत् प्रयतो नर ।
स गच्छेत् परमा सिद्धिमिह ससारछेदनोम ।।१८
एतत् ते कथित देवि सर्वपातकनाशनम् ।
तीर्थाना चैव माहात्म्य किमन्यच्छ्रोतुमिच्छसि ।।१९

।। इति श्रीवराहपुराणे भगवच्छास्त्रे षटषष्ट्यधिकशततमोऽध्याय ।। १६६ ।।

# १६७

श्रीवराह उवाच ।*
मथुराया पर क्षेत्र त्रैलोक्ये न च विद्यते ।
तस्या वसाम्यह देवि मथुराया च सर्वदा ।।१
सर्वेषा देवि तीर्थाना मथुरा च पर महत् ।
कृष्णेन क्रीडित तत्र तच्छुद्ध हि पदे पदे ।।२
चक्रस्थित हि तत्सर्वं कृष्णस्यैव पदेन तु ।
तत्र मध्ये तु तत्स्थानमर्द्धचन्द्रे व्यवस्थितम् ।
तत्र वै वासिनो लोका मुक्ति यान्ति न सशय ।।३
दक्षिणाकोटि कृष्णस्य उत्तराकोटिमध्यत ।
तयोर्मध्ये स्थितो देव आकार सोमचक्रता ।।४

---

१५ दे1 ○ (द्र ७ पा वि ) –a) द2 ते1 अविस्थल, द4 अविमुक्ता, द7 अग्निकुण्ड (→अविमुक्त) –b) व दे2 5 6 8-11 मुवे ते1 यमन (दे2 त1 °ल), दे7 यामन (→यामुन) –d) व दे9 10 ते1 °मज्ञक (→°सज्ञितम)

१६ दे1 ○ (द्र ७ पा वि ) –a) व3 दे2-4 10 ते1 एते पुण्या पवित्राश्च –b) व दे3 4 10 ते1 °नाशना (→°नाशनम) –c) व3 दे3 4 °गुणा (→°गुण)

१७ दे1 ○ (द्र ७ पा वि ) –a) ते1 पतन्ति (→पठन्ति) –c) दे10 च (→तु) –d) व3 दे 4 10 ते यान्ति परमा गति, द2 ते1 ये मुक्ति पद गच्छति –f) दे2ते1 शतवप शतद्वयो

१८ दे1 ○ (द्र ७ पा वि ) –d) व °मेदिनी द5-11 मुवे °नाशिनी, ते1 °छेदन (→°छेदनीम्), दे3 4 ससार छदनी च यत्

१९ दे1 ○ (द्र ७ पा वि ) –a) व3 भूमि (→देवि) –d) दे2 ते1 इच्छति (→इच्छसि)

**पुष्पिका—**

**पुराणनाम**—दे1 ○, व3 दे2 5-9 11 ते1 इत्यादि वा (व3 व) राहपुराणे भगवच्छास्त्रे, दे3 4 इत्यादि श्रीवाराहपुराणे भगवच्छास्त्रे, दे10 इत्यादि वाराहपुराणे, मुवे इति श्रीवराहपुराणे भगवच्छास्त्र **अध्यायनाम**—व1 दे2-6 8-11 मुवे मथुरामाहात्म्ये, दे1** रामाहात्म्ये, दे7 मथुरामाहात्म्य नामाध्याय, ते1 मधुरामाहात्म्यम् **अध्यायसख्या**—दे1-7 10 11 ते1 ○, व1 षोडशोध्याय, दे8 ।।७१।।, दे9 ।।१८।।, मुवे अष्टषष्ट्यधिकशततमोऽध्याय ।।१६८।।

१६७

* दे1 वाराह उ०, दे2 5-9 11 ते1 वा (दे2 6 7 व) राह उवाच, दे3 4 10 श्रीवाराह उवाच

१ दे11 ○ –a) दे5 8 9 मथुराया, ते1 मधुराया (→मथुराया ) –b) दे1-10 च न (→न च) –c) दे6 तस्या वस्याम्यह देवि –d) द1 3 4 तु (→च)

२ दे11 a ○ –a) दे2 ते1 सर्वेषा चैव, द5 9 मुवे सर्वेषामेव (→सर्वेषा देवि) –b) दे2 6 ते1 मथु(ते1 °धु)रा च, दे10 माथुर च, द11 मथुराया (→मथुरा च), व3 दे3 4 माथुर परम मम (व महत्), द1 मथुरा परम महत –c) व क्रीडितस् (→क्रीडित) –d) व3 तच्च शुद्ध, दे3 4 तच्छब्द (दे4 °ब्दा) हि (→तच्छुद्ध हि), दे6 11** पदे (→पदे पदे)

३ –a) व3 दे6 च (दे6 व) क्र स्थित, दे4 तत्र स्थित, दे7 चक्रतीर्थ (→चक्रस्थित) –b) दे1 3 4 कृष्णस्येव (→कृष्णस्यैव), दे1 3 4 पद न (→पदेन) –c) मुवे मध्य (→मध्ये) –d) दे5 9 मुवे प्रतिष्ठित (→व्यवस्थित) –e) दे2 5-9 11 मुवे तत्रैव (→तत्र वै), दे3 लोका, दे4*का (→लोका) –f) दे1 5 मुक्ति (→मुक्ति)

४ –a) दे2 ते1 दक्षिण, दे4 10 दक्षिण– (→दक्षिणा), दे5-9 11 मुवे कृष्णस्य दक्षिणा कोटिर् –b) दे4 °मध्ये ता (→°मध्यत ) –c) दे2 ते1 हतो (→स्थितो), दे1 4 देवो, दे3 7

तौ देवौ क्षेत्रफलदौ स्नानदानादिकर्मणि ।
तस्माद्धि स्मरण कार्यं द्वे कोटी सर्वकर्मसु ।।५
अर्द्धचन्द्रे तु य स्नान करोति नियताशन ।
तेन वै चाक्षया लोका प्राप्ताश्चैव न सशय ।।६
दक्षिणस्या समारभ्य उत्तरस्या समापयेत् ।
यज्ञोपवीतमात्रेण त्रायते च कुलान् बहून् ।।७

पृथिव्युवाच ।❀

यज्ञोपवीतमात्राया विधान कथयस्व मे ।
यथा मान हि कर्त्तव्य तत्सर्वं वक्तुमर्हसि ।।८

श्रीवराह उवाच ।❀

यज्ञोपवीतस्य विधि श्रृणुष्व वरवर्णिनि ।
मनुजा येन विधिना मुक्ति यान्ति न सशय ।।९
गृहान्निसृत्य मौनेन यावत्स्नान समाचरेत् ।
पूजा कृष्णस्य कृत्वा वै ततो ब्रूयाद् वसुधरे ।।१०
अनेनैव विधानेन स्नान कुर्यादमत्सर ।
न तस्य पुनरावृत्तिरेवमेतन्न सशय ।।११
अनेन विधिना चैव उत्तरस्या समापयेत् ।
पूजा कृत्वा वामनस्य ततो ब्रूयाद् वसुधरे ।।१२
स्नाने समाप्ते विधिवद् देवदेवस्य वै हरे ।
कृष्णस्य च मख कृत्वा स्नानादीनि यथाक्रमम् ।।१३
गा वै पयस्विनी दत्त्वा हिरण्य वस्त्रमेव च ।
ब्राह्मणान् भोजयेत् पश्चाद् विधिरेष उदाहृत ।।१४ वे १६९

---

देवा (→देव) –d) मुवे आकारात (→आकार), दे4 °चक्रता, दे6 7 10 °चक्र। (→°चक्रता)

दे1 3 4 b, c चरणयोमध्ये अधिकम—

*गहान्निसृत्य मौनेन यावत्स्नान समाचरेत ।

५ –a) दे1 4 तदैत्र (→तौ देवौ), ब3 दे1 3 4 10 क्ष (द4 7 क्ष) त्रपौ ज्ञेयौ (→क्षेत्रफलदौ) –c) दे2 5 11 मुवे ते1 मरण (→स्मरण), दे2 5-11 मुवे ते1 चात्र (→काय) –d) दे1 4 कोटि (→कोटी)

६ a) दे5 8 9 स्नात (→स्नान), दे1 अद्धभुक्ते तु यत्स्नान, दे3 अद्धति**य स्नान, दे4 अद्धति तत्र य स्नान –c) दे 4 9 ते1 तेन चवाक्षया लोका, दे6 7 तेन वै (दे6 °नैव) वाक्यया लोका –d) दे6 प्रासा चैव, दे10 प्रासिश्चव (→प्रासाश्चैव)

७ दे11 cd ○ –a) दे4 5 दक्षिणास्या समारभ्य (दे4 °भ्या) –d) दे3 4 प्राप्यते च, दे5 8 9 त्रायन्तश्च, मुवे त्रायते च (→त्रायते च), दे5 9 मुवे कुल बहु, दे10 कुलानि वै, ते1 कुलान महान (→कुलान् बहून), दे6 ज्ञेय च न कुला बहु, दे7 ज्ञाय न च कुला बहु

❀ दे11 ○, दे6 पृथिवी उवाच

८ दे11 ○ –a) ब3 °यात्राया, दे1 10 मुवे °मात्राया, दे6 7 °मात्र तु, ते1 °माहात्म्य (→°मात्राया) –b) दे5-9 11 मुवे विधान कीदश प्रभो –c) दे4 याथामाना हि कत्तव्या

❀ ब3 दे2 5-8 11 ते1 वा (ब3 दे2 6 7 व) राह उवाच, दे3 4 श्रीवाराह उवाच, दे9 10 वाराह उ०

९ दे11 ○ –b) ब3 दे1 3 4 10 श्रृणु त्व (→श्रृणुष्व), दे3 मुवे °वर्णिनी (→°वर्णिनि) –c) दे2 ते1 यमुना, दे3 मनुना (→मनुजा), दे8 य न (→येन) –d) ब3 दे5 10 ते1 याति (→यान्ति)

दे5 9 मुवे b, c चरणयोमध्ये अधिकम—

दक्षिणस्या समारभ्य उत्तरस्या समापयेत ।

यज्ञोपवीतस्य विधिरेष एव प्रकीर्तित । (= ७)

९ श्लोकात पर ब3 दे5 9 मुवे अधिकम्—

अनेन विधिना चैव उत्तरस्या समापयेत । (= १२ab)

१० ब3 ab ○ –a) दे2 ते1 गहान्निसृज्य मौनेन, दे6 गहानिगत्य मानेन –c) ब3 दे1 3 4 पूजा कृत्वा वामनस्य, दे6 पूजा कृष्णस्य वै कृत्वा, दे10 पूजा कृत्वा तु कृष्णस्य

१० श्लोकस्य b, c मध्ये दे1 3 4 अधिकम्—

अनेनव विधानेन स्नान कुर्याद्विमत्सर ।

न तस्य पुनरावृत्ति एवमेतन्न सशय ।

अनेन विधिना चव उत्तरस्या समापयेत । (= ११a १२b)

११ ब3 दे1 3 9 11 मुवे ११-१२ श्लोकौ ○ –b) दे2 ते1 प्रयत्नत (→अमत्सर) –cd) दे2 ते1 ज्ञान च तस्य सुलभ भवेन्नात्र न सशय

१२ ब3 दे1 3-9 11 मुवे ○ (द्र ११ पा वि) –ab) दे2 ते1 अनेन विधिना देवि मत्पूजा यस्तु कारयेत

१३ –b) दे1 वै हर, दे5 8 9 11 चव ह, दे6 7 मुवे चैव हि (→वै हरे) –c) ब3 कृत्वा च मख, दे2 कृत्वा च**, दे5 7-9 11 मुवे कृत्वा तु म (दे7 मु) ख, दे6 कृतातमुख, दे11 दत्वा च मन, ते1 कृत्वा वसुधे (→च मख कृत्वा) –d) दे2 ते1 शुश्रूषादीन्यथाक्रमम, दे6 स्नापनादीनि***, दे7 स्नानादीनि पश्य तम

१४ –a) दे2 4 पयस्विनी (→पयस्विनी) –b) दे1 3 4 वस्त्रमेव तु, दे2 6 9 11 ते1 वसुमेव च, मुवे वसु चैव हि (→वस्त्रमेव च) –c) दे6 ब्राह्मण्य (→ब्राह्मणान्) –d) दे6 7 विधिरेव (दे6 °वम्) (→विधिरेष)

तथा शयनमुद्दिश्य एवमेव तु कारयेत् ।
न तस्य पुनरावृत्तिर्मम लोके महीयते ।।१५
अर्द्धचन्द्रे मृता देवि मम लोक व्रजन्ति ते ।
अन्यत्र तु मृता ये तु अर्द्धचन्द्राङ्कितक्रिया ।
तेऽपि स्वर्गं गमिष्यन्ति दाहादिकरणैर्युता ।।१६
यावदस्थीन्यर्द्धचन्द्रे यस्य तिष्ठन्ति देहिन ।
तावत्सुपुण्यकर्त्ता च स्वर्गलोके महीयते ।।१७
अर्धचन्द्रे विशेषोऽस्ति तीर्थे विश्रान्तिसज्ञके ।
दाहादिकरणे तत्र गर्दभोऽपि चतुर्भुज ।।१८
गर्त्तेश्वरे भूतेश्वरे द्वे कोटी तु वसुधरे ।
मध्ये सदैव तिष्ठामि न त्यजामि कदाचन ।।१९
मथुराया च यद् रूप तद् रूप मे वसुधरे ।
माथुरेण तु तृप्तेन तृप्तोऽह नात्र सशय ।।२०

शृणु देवि यथावृत्त गरुडस्य महात्मन ।
मथुरायामागतोऽसौ कृष्णदर्शनकाङ्क्षया ।
मथुराया स्थित देव भिन्नरूप न पश्यति ।।२१
तदागतोऽसौ वसुधे देवस्याग्रे विहङ्गम ।
कृष्णस्य दर्शनार्थाय दिव्य स्तोत्रमुदीरयत् ।।२२

गरुड उवाच ।❀

विश्वरूप जयादित्य जय विष्णो जयाच्युत ।
जय केशव ईशान जय कृष्ण नमोऽस्तु ते ।।२३
जय मूर्त्त जयामूर्त्त जय केशिनिषूदन ।
जय कसनिहन्तस्त्व वासुदेव नमोऽस्तु ते ।।२४
गरुडेन स्तुतो देव स्वय तत्र व्यतिष्ठत ।
गरुडस्य पुरस्तत्र स्थितो देव शरीरवान् ।।२५
वैलक्ष्यमाणो गरुडो वासुदेवेन सान्त्वित ।

---

१५ -a) ब3 त1 3 4 10 वामन (दे1 3 °न-)(→शयनम्) -b) ब3 द6 7 एवमेव (→एवमेव)

१६ -a) दे5 8 9 मृतो (→मृता) -b) ब3 दे1 3 लोके (→लोक) -c) द1 4 10 त1 अन्यत्रैव (→अन्यत्र तु), ब3 दे5 7-9 11 मुवे च (→तु) -d) ब द1 मुवे अधचन्द्रकृतक्रिया, दे2 5 7 9 11 त1 अधचद्राकृत क्रिया, दे4 अद्धचन्द्र****, दे10 अद्धचन्द्रवृताकृता -f) दे6 राहादि-, दे11दाहारि-(→दाहादि-), दे2 5 8 9 युत (→युता)

१७ दे8 ○, दे4 a ○ -a) दे1 यावन्स्था° (→ यावदस्थी°), मुवे °चन्द्र (→°चन्द्रे), त1 यावत्तस्मिन्न*** -b) दे2 वश्य, ते1** (→यस्य), दे10 पश्यन्त तत्र देहिन -c) ब3 यावत्सु°, दे1 3 4 6 7 यावत्स° (→तावत्सु°) -d) दे10 स्वगस्थो मोदते चिर

१८ दे8 ab ○ -a) ब3 °चन्द्राद्, द4 °चन्द्रो, दे6 °चन्द्राद् (→°चन्द्रे) -b) दे6 क्षेत्रे (→तीर्थे), दे1 3 4 6 ते1 °सज्ञिके (दे1 4 °ते) (→°सज्ञके)

१९ -a) दे5-9 11 मुवे गर्त्तेश्वराऽथ भूतेशो (दे6 7 °शे) -b) दे4 8 द्वे कोटि तु, दे6 द्वेकादेव (→द्वे कोटी तु) -d) दे2 ते1 न त्याजा (ते1 °ज्या) मि (→न त्यजामि)

२० -a) दे1 4 तु (→च) -b) दे7 स (→मे) -c) दे5 11 माथुरेन तु, दे6 माथुरेणेव, ते1 माधुरेण च (→माथुरेण तु)

२० श्लोकस्य b, c मध्ये दे7 अधिकम्—
मध्ये सदैव तिष्ठामि न त्यजामि कदाचन । ( = १९cd)

२१ -c) दे5-9 11 मुवे मथुरामा(दे7 स)गतो योऽसौ -e) ब3 दे1-4 स्थितो (→स्थित), ब3 द1 3 4 देवि (→देव) -f) दे6 7 मित्ररूपेण पश्यति

२२ -c) द5 कृष्णास्य (→कृष्णस्य) -d) दे1 3 दिव्य (→दिव्य), ब3 दे2 6 7 10 °मुदीरयेत, दे3-5 8 11 °मुदीरयत (→ °मुदीरयन्), ते1 तदा वचनमब्रवीत

❀ दे9 10 गरुड उ०

२३ द6 bcd ○ -b) दे1 विश्व-, दे3 4 दिष्ट (→ विष्णो), दे4 10 °च्युत (→°च्युत) -c) दे4 जया (→जय) -d) दे7 जय कृष्णस्यदशन

२४ दे2 5-9 11 मुवे ते1 cd ○, दे6 a ○ -a) दे5 8 11 जयामूत्त, दे7 जयाभूत, दे9 ते1 जय मूर्त्ते (→जय मूत्त), दे2 5 7-9 11 मुवे ते1 जयाचिन्त्य (→जयामूत्त) -b) दे2 5-9 11 मुवे ते1 जय लोकविभूषण -c) दे4 केश (→कस-), दे3 4 10 -निहन्तास (दे10 °न्ता) (→-निहन्तस), दे1 त (→त्व)

२५ दे2 ते1 bc ○ -a) दे3 स्थितो (→स्तुतो), दे2 5-9 11 मुवे ते1 इत्येव सस्तुतो देवो -b) ब दे10 स्वय तत्रैव तिष्ठति, दे5-9 11 मुवे गरुडेन महात्मना -c) दे10 गन्तु तस्य (→गरुडस्य) -d) ब3 दे1 ते1 देव (→देव)

२६ -a) दे5-9 11 मुवे सान्त्वयामास (→वैलक्ष्यमाणो), दे2 तैलयाणेन गरुडो, ते1 तैलक्षमाणेन गरुडो -b) दे4 सात्विन, दे10 सात्विता (→सात्वित), दे5-9 11 मुवे प्रीतिपूवमुवाच ह

कि कुर्यां स्तोत्रसतुष्टो ब्रूहि सत्य विहङ्गम ।
मथुरागमन कि ते एवमेव वदस्व मे ॥२६

गरुड उवाच ।❀

मथुरामागतश्चाह तव दर्शनकाङ्क्षया ।
आगते तु मया देव न दृष्ट तव रूपकम् ॥२७
न हीद तव देवेश मथुरारूपमात्मन ।
एकीभूतमह सर्वं पश्यामि तव तैरपि ।
[तस्मात् स्तुतिस्तु देवेश कृताऽनुग्रहकाम्यया ॥२८
गरुडस्य वच श्रुत्वा प्रहस्य मधुसूदन ।
उवाच श्लक्ष्णया वाचा गरुड प्रति भाविनि]॥२९

श्रीकृष्ण उवाच ।❀

माथुराणा च यद्रूप तद् रूप मे विहङ्गम ।
ये पापास्ते न पश्यन्ति मद्रूपा माथुरा द्विजा ॥३०
एवमुक्त्वा तत कृष्णस्तत्रैवान्तरधीयत ।
गरुडोऽपि तत स्थानाद् गतो देवि यथागतम् ॥३१
इत्येतत् कथित देवि माथुराणा तु रूपकम् ।
येषा पूजितमात्रेण तुष्टोऽह चैव सर्वदा ॥३२
मथुराया मृता ये च मुक्ति यान्ति न चान्यथा ।
अपि कीटपतङ्गो वा तिर्यग्योनिगतोऽपि वा ॥३३
य पश्येद् पद्मनाभ तु द्वादश्यामाश्विनस्य तु ।
एकदेहधरौ देवौ शिवकेशवरूपिणौ ॥३४
एकादश्या सोपवास कृतशौच समाहित ।
कालिन्द्या तु नर स्नातो मुच्यते योनिसङ्कटात् ॥३५ वे १६९

---

–c) दे1 4 7 11 कुर्यास्तोत्र– दे2 5 8 9 मुवे कुर्यात्स्तोत्र–, दे, कुर्या तोत्र– (→कुर्या स्तोत्र–), दे5 9मुवे –मे त मे(→–सतुष्टो) –d) दे5 9 11 मुवे किं वा तव (दे7 तान्वा) चिकीर्षितम –e) दे5-9 11मुवे मथरागम कृत्य (मुवे °त्ये) ते –f) दे5-9 11मुवे सव ब्रूहि ममाग्रत

❀ दे9 गरुड* वाच, दे10 गरुड उ०

२७ –c) दे4 आगत (→आगते) ब महा–(→मया), दे1 3 देवि (→देव) –d) दे5 दष्टे, दे10* ष्ट (→दष्ट), दे11* व (→तव)

२८ ब० २८–३२ b यावत ○, दे1 4 10 ते1 २८ e–२९d यावन्नास्ति –a) दे5-9 11 मुवे माथुरैरेव लोकैस्तु (दे6 7 °कस्यै ) –b) दे2 10 ते1 म (दे10 मा)थुराणा तु रूपत, दे5-9 11 मुवे सम (दे6 7 मम) दष्ट हि रूपकम –c) ते1 एका भूत्वा (→एकीभूत–), दे5 9 सव–, दे11 सर्वे (→सव) –d) दे5 9 11 मुवे दष्ट्वा मा मोह आ (दे6 7 °मा) विशत

२९ ब3 दे1-4 10 ते1 ○ (द्र २८ पा वि ) –c) दे5 सक्ष्णाया, दे9 क्षक्ष्णया (→श्लक्ष्णया) –d) दे5 6 9 11 भामिनि (→भाविनि)

❀ ब3 ○, दे2 5 6 8 9 11 ते1 कृष्ण उवाच, दे6 श्रीकृष्ण उवा०, दे10 कृष्ण उ०

३० ब3 ○ (द्र २८ पा वि ) –a) दे1 3 4 मा(दे1म) थुराया तु, दे6 10 माथुराणा तु, ते1 मधुराणा च(→माथुराणा च), दे1 (य) तद्रूप (→यद्रूप) –c) दे1 3 4 यद्रपास्ते, दे6 यो पापास्त, दे7 ये पयास्त (→ये पापास्ते) –d) दे1 जना (→द्विजा ), दे10 मद्रूपान्माथुरान् द्विज

३१ ब3 ○ (द्र २८ पा वि ) –a) दे6 एवमुक्तास, दे7 ते1 एवमुक्तस, दे9 एव युक्त्वा, दे10 एवमुक्ता (→एवमुक्त्वा) –c) दे1 3 4 स्थान (→स्थानाद) –d) दे6 रतो (→गतो), दे2 देवि, ते1 देवी (→देवि), दे5 9 11 मुवे °सुख (→°गत)

३२ ब2 ab ○ (द्र २८ पा वि ) –a) दे2 ते1 येन ते, दे5-9 11 मुवे एतत्ते (→इत्येतत), दे6 भद्रे, ते1 देवी (→देवि) –b) ते1 मधुराणा (→माथुराणा), दे6 च पूजित (→तु रूपक) –c) दे10 ते1 पूजन° (→पूजित°), ब °मन्त्रेण, दे3 4 °मात्रे तु (→°मात्रेण)

३३ –a) दे8 10 ते1 माथु (ते1 °धु) राया (→मथुराया) –c) दे7 10मुवे कीट (→कीट–), ते1 अपि क्रीडयत तेन –d) दे2 मुवे –योनिं (→–योनि–), दे7 च (→वा)

अत पर दे5 9 11 मुवे अधिकम—
*चतुभुजास्तु ते सर्वे भवन्तीति विनिश्चितम् ।
[दे6 7 सव भवति (→भवन्तोति वि–)]

३४ –a) दे10 पद्यमानौ (→पद्मनाभ), दे2 ते1 ये पश्य पद्यमान तु –b) दे1 3 4 6 7 द्वादश्याम° (→द्वादश्यामा°), दे2 पश्यामश्चेततस्य तु, ते1 पश्यामश्च तु तस्य वै –c) दे7 एक (→एक–), दे2ते1 –देवपुरौ (ते1 °रा), दे5 8 9 –देहधरो(→–देहधरौ)

३५ –a) दे2 4 सोपवासा, दे5-9 11 मुवे चोपवासी (दे6 7 °स ) (→सोपवास ) –b) दे1 6 °शौच–, दे2 ते1 °शौच (→°शौच ), दे6 समन्वित (→समाहित ) –c) ब3 दे1 3 4 10 कालिन्द्यास्तु, ते1 जितेन्द्रियो (→कालिन्द्या तु), ब3 जले, दे1 3 4 10 जल– (→नर ), दे6 स्नात्वा (→स्नातो) –d) दे2 मुवे मुचते (→मुच्यते), ब3 न शोचति कृताकृत

१६७ चैत्रस्य शुक्लद्वादश्या स्नात्वा तीर्थे तु वैष्णवे ।
चिन्ताविष्णु समाभाव्य सोपवास सजागर ।
मथुराया गते श्रेष्ठे न शोचति कृताकृतम् ।।३६
एकाशा ता ततो देवी यशोदा देवकी तथा ।
महाविद्येश्वरी देवी मुच्यते ब्रह्महत्यया ।।३७
यो वाप्या धर्मराजस्य मथुरायाश्च पश्चिमे ।
स्नान करोति तस्या तु ग्रहदोषैर्न लिप्यते ।।३८
य य देवमभिध्यायेद् भक्तियुक्तेन चेतसा ।
विश्रान्तिसज्ञक दृष्ट्वा दीर्घविष्णु च केशवम् ।
सर्वेषा दर्शन पुण्य पूजनात् तु फल भवेत् ।।३९
इति जपहोमध्यानकाले च सम्यक्
सततमभिसमीक्ष्य ब्रह्मणा यत् प्रयुक्तम् ।
सकलगुणगणानामास्पद ब्रह्मसज्ञ
जननमरणहीन विष्णुमेवाभियान्ति ।।४०

।। इति श्रीवराहपुराणे भगवच्छास्त्रे सप्तषष्ट्यधिकशततमोऽध्याय ।। १६७ ।।

---

३६ ब3 द2 ते1 ○ –b) द 4 10 वैष्णव (→वैष्णवे), द 9 11 मुपोष्य स्नानमाचरेत –c) द6 तता (→चिन्ता-), द 9 11 मुवे समभ्यर्च्य (→समाभाव्य) –d) दे, 9 11 मुवे कृ वा वै जागर निशि, दे6 कृत्वा जागरण निशि –e) दे10 खगश्रेष्ठ (→गत श्रेष्ठे) –f) दे10 कृताकृति (→कृताकृत)

अत पर दे5-9 11 मुवे अधिकम—
*य करोति स मुच्येत नात्र कार्याविचारणा ।

३७ दे2 ता ३७ श्लोकादारभ्य अध्यायसमाप्तिपर्यन्त नास्ति –a) ब3 दे9 एकानशा, दे, 8 11 मुवे एकानशा द 7 एकादश्या, द10 एकानशा (→एकाशा ता) –b) दे6 7 पश्येद (→यशोदा), दे4 6 8 दवकी (→देवकी), ब3 मुच्यते योनिसङ्कटात –c) द3 4 °विघ्नेश्वरी, द5 6 9 °विद्यश्वरी, द6 °विद्येश्वर (→°विद्येश्वरी), दे1 मुवे देवि (→देवी)

३८ –a) दे 4 या वार्था (द4 °थ), दे5 यो वारा, दे6 या पारा, दे7 यो पार द8 9 11 या पारा, मुवे या धारा (→यो वाप्या) –d) दे6 बोध्यते (→लिप्यते)

३९ –b) द1 °युक्त न, दे7 °युक्तो न (→°युक्तेन) –c) द1 °साज्ञित, दे, °सज्ञाक (→°सज्ञक) –d) ब दे1 4 दीघ (→दीघ-), दे 4 कृष्ण, दे9 –विष्णु (→–विष्णु) –e) दे10 दशनफल (→दशन पुण्य) –f) ब3 दे3 4 10 एभिदृष्टैर्, दे1 अभिदृष्टै (→पूजनात्तु), ब दे1 6 7 9 फल लभेत्, दे10 लभेन्नर (→फल भवेत्)

३९ श्लोकस्य b चरणात्पर दे10 अधिकम —
*तस्यापि लभते तोष विष्णुप्रीतिनिबधन ।

अपि च ३९ श्लोकस्य d चरणात्पर दे1 अधिकम—
महाविद्येश्वरी देवि मुच्यते ब्रह्महत्यया ।( = ३७ cd)

४० –a) ब द10 जपन् स*होम–, द6 जपहोमपूजा दे7 जपतपहोम–, मुवे जपविधिहोम– (→जपहोम–), ब3 –कालेन, दे5 6 8 9 11मुवे –काले स (दे6*) दे7 –कालस्य, दे10 –काले तु (→–काले च) –b) द5 9 11°मति– (→°मभि), ब3 –वीक्ष्य*, दे 4 –समीक्ष (→–समीक्ष्य), दे1 ब्रह्मणेन(→ब्रह्मणा यत) –c) दे8 9 °सज्ञ (→°सन) –d) ब3 दे1 5 जन* (→जनन–), द10 °हीना (→°हीन), ब1 मुवे °याति (→°याति)

**पुष्पिका**—

**पुराणनाम**—ब3 इति वराहपुराणे भगवच्छास्त्र, दे1 5 7-11 इत्यादि वाराहपुराणे प्राग्गितिहासे, दे3 4 इत्यादि श्रीवाराहपुराणे भगवच्छास्त्रे, मुवे इति श्रीवराहपुराणे प्राग्गितिहासे **अध्याय-नाम**– ब3 मथुरामाहात्म्ये प्राग्गितिहासे, दे1 4 7-11 मथुरामाहात्म्ये, दे3 प्राग्गितिहासे मथुरामाहात्म्ये, मुवे मथुरामाहात्म्य नाम **अध्याय-सख्या**—ब3 सप्तदशोऽध्याय , दे8 ।।७२।।, दे9 ।।१९।।, मुवे एकोन-सप्तत्यधिकशततमोऽध्याय ।।१६९।।

वे ११४६ एष मृत्युमुख गत्वा मम पुत्र इहागत ॥५
कच्चित् त्व न हतो वत्स नैव बद्धो यमालये ।
कच्चित् ते स शिव पन्था गच्छतस्तव पुत्रक ॥६
कच्चित् ते व्याधयो घोरा नान्वगच्छन् यमालये ।
किमपूर्व त्वया दृष्ट कच्चित् तुष्टो महातपा ॥७
कच्चिद् राजा त्वया दृष्ट प्रेतानामधिपो बली ।
परुषेण न कच्चित् त्वा चक्षुषा पश्यते यम ॥८
कच्चिन्न तुष्टो भगवास्त्वा दृष्ट्वा स्वयमागतम् ।
कच्चिच्छीघ्र विमृष्टोऽसि धर्मराजेन पुत्रक ॥९
कच्चिद्दौवारिकास्तत्र न रौद्रास्त्वा यमालये ।
कच्चिद् राज्ञा विसृष्टे तु नाबाधन् तेतरे जना ।
कच्चित् पन्थास्त्वया लब्धो निर्गमो वा यमालये॥१०
अय मम सुत प्राप्त प्रसन्ना मम देवता ।
ऋषयश्च महाभागा द्विजाश्च सुमहाव्रता ।
यन्मे वत्स पुन प्राप्तो यमलोकाद् दुरासदात् ॥११
एवमाभाषमाण तु श्रुत्वा सर्वे वनौकस ।
त्यक्त्वा व्रतानि सर्वाणि नियमाश्च तथैव च ।
जपन्तश्चैव जाप्यानि पूजयन्तश्च देवता ॥१२

---

हागत –c) ब1-3 दे10 अस्मदीय समो लोक –d) ब1 दे10 कश्चिदन्या न विद्यते –e) दे7 8 11 ते1 एषा (→एष) –f) दे1 समागत, दे3 4 हृदागन (→इहागत)

६ दे1 3 4 ६c–७b ○ –a) ब1 दे4 कश्चित, ब2 कस्मात, ब3 कस्य, दे1 क्वचित (→कच्चित), ते1 किञ्चित्वङ्ग ततो वत्स –c) ब3 कश्चित्ते (→कच्चित्ते), द10 कच्चित्तमशिव पन्था –d) दे7 पथि (→तव), दे10 गच्छतस्तात तत्तवत

अत पर दे3 4 अधिकम—

कच्चित्त्व न हृतो (दे3 महृतो) वत्स नव बद्धो यमालयात

यमस्य भवन (दे3 भुवन) गत्वा पुन शीघ्रमिहागत ।

पितृस्नेहानुभावेन गुरुशुश्रूषयापि च ।

अदष्ट केन लोकेन दष्ट्वाह (दे3 दष्टोह) पुनरागत ।

अस्मदीय समो (दे3 समा) लोके कश्चिदन्यो न विद्यते । [5]

एषो मृत्युमुख गत्वा मम पुत्रमिहागत । (=४a–५f)

दे1 अधिकम्—

यमस्य भुवन गत्वा पुन शीघ्रमिहागत । (=४ab)

अहो मया समो लोके कश्चिदन्य न विद्यते ।

यस्य मृत्युमुख प्राप्य पुत्रस्वयमिहागत । (=५ef)

७ दे4 ○, ब2 3 दे1 3 ab ○ –a) ते1 कश्चित (→कच्चित) –b) ते1 नान्य° (→नान्व°), ब1 न पीडियुय मालये, दे10 न वाधते यमालये –c) ब1 3 दे1 3 10 कश्चित्तु (ब1 द10 कच्चिन्न) पूवको दष्ट –d) ब3 दे ते1 कश्चित, दे7 क्वचिद (→कच्चित), ब2 3 दे10 दृष्टो, दे7 दष्ट्वो (→तुष्टो)

अत पर ब1 दे1 3 10 अधिकम्—

*कश्चित्प्रतिभयो लब्ध प्रशातस्यापि भोजन ।

[दे1 10 कच्चित्(→कश्चित), ब1 प्रतिष्ठयो, दे1 प्रतिभायो, दे10 प्रतिश्रयो(→प्रतिभयो), ब1दे10 प्रसन्नश्चापि (→प्रशातस्यापि) ]

८ –a) दे3 4 7 ते1 कश्चिद् (→कच्चिद) –b) ब1-3 दे1 3 4 10 प्रेत (ब2 प्रेत्य, दे1 3 प्रात, दे4 प्रीत) भावे महातपा –c) ब1 पुरुषो*वै, ब2 पुरुषोनापि, ब3 पुरुषेणापि, दे1 3 4 पु (दे1 प) रुषेण तु (→परुषेण न), ब1 3 कश्चित्तु दे 4 7 ते1 कश्चित्वा (→कच्चित्त्वा) –d) मुवे यम पश्यति चक्षुषा

९ –a) ब1 2 दे 4 ते1 कश्चिन्न (→कच्चिन्न), ब1 पष्टो, ब2 3 दष्टो, दे10 हृष्टो (→तुष्टो), दे7 5 8 9 11 ते1 भगवान् (→भगवास) –b) ब2 3 ता दष्ट्वा पुनरागत, दे10 त्वा च दृष्ट्वा समागत –c) ब1 3 दे3 4 ते1 कश्चित (→कच्चित), दे7 स्रष्ट (→शीघ्र) –d) दे1 3 पुत्रक (→पुत्रक)

१० द7 cf ○ –a) ब1-3 दे3 4 ते1 कश्चिद (→कच्चिद), ब3 दौवारिकस, दे5 8 दौवारिकास् (→दोवारिकास) –b) ब1 रौद्राश्च, ब2 रौद्रा च, दे1 रौद्रास्वे (→रौद्रास्त्वा) –c) दे1 3 4 मुवे विसष्ट(→विसृष्टे), दे10 त्वा (→तु), ब1 2 कश्चिद्राज्ञा विसृष्टास्तु, ब3 कश्चिदावारिसष्टास्तु –d) ब1 3 दे3 5 8 ते1 न बाधन्ते°, द10*बाधन्ते°, दे11 न बाधत° (→नाबाधन्ते°), ब2 नाबाध ते च ते जना –e) ब1-3 कश्चित (→कच्चित) –f) दे1 3 4 निगतो (→निगमो), ब2 दे1 यमालय (दे1 °यो), दे11** लये (→यमालये)

११ –a) ब1-3 अयच्च मे (→अय मम), दे1 3 4 10 अय मे (दे10 ते) सुतपा प्रासा (दे1 प्राप्त) –b) ब2 यम (→मम) –c) दे1 3 4 औषध्यश्च (→ऋषयश्च) –e) ब3दे2 10 11 ते1 वत्स (→वत्स), दे3 4 प्राप्ते, ते1 प्राप्तर (→प्राप्तो) –f) ब1 मम (→यम–)

१२ –a) ब1 2 एष–, दे4 एम (→एव–), दे2-4 8 9 11 ते1 –माणस्तु, दे5 –माणास्तु (→–माण तु) –b) दे5 8 9 सव– (→सर्वे) –c) ब3 त्यक्त–, दे10 11 ते1 त्यक्ता (→त्यक्त्वा) –d) दे7 नियमानपि वा तथा –e) ब1 जगतश्चैव (→जपन्तश्चव), ब1 2 दे4 जप्यानि, दे7 पूजन्त (→जाप्यानि) –f) दे7 याजयतश्च देवता

उदूदर्ध्वबाहव केचित् तिष्ठन्त्यन्ये सुदारुणम् ।
एकपादेन तिष्ठन्ति पश्यन्त्यन्ये दिवाकरम ।।१३
एवमेव परित्यज्य नियमान् पूर्वसचितान् ।
वैश्वानरा महाभागास्तपसा सशितव्रता ।
आगतास्त्वरित द्रष्टु नाचिकेत सुत तदा ।।१४
दिग्वाससश्च ऋषयो दन्तोलूखलिनस्तथा ।
अश्मकुट्टाश्च मौनाश्च शीर्णपर्णाम्बुभोजना ।
धूमपाश्च तथा चान्ये तप्यमानाश्च पावके ।।१५
परिवार्य तथा दृष्ट्वा तस्य पुत्र तपोनिधिम ।
उपविष्टास्तथा चान्ये स्थिताश्चान्ये सुयन्त्रिता ।।१६
ते सर्वे त त् पृच्छन्ति ऋषयो वेदपारगा ।
नाचिकेतसुत दृष्ट्वा यमलोकादिहागतम् ।।१७
भीतास्त्रस्ता स्थिता दृष्ट्वा केचित कौतूहलान्विता ।
केचिद विमनसश्चैव केचित् सशयवादिन ।
तमूचु सहिता सर्वे ऋषिपुत्र तपोधनम् ।।१८

ऋषय ऊचु ।❀

भो भो सत्यव्रताचार गुरुशुश्रूषणे रत ।
नाचिकेत सुत प्राज्ञ स्वधर्मपरिपालक ।।१९
ब्रूहि तत्र यथा सत्य यथादृष्ट यथाश्रुतम् ।
ऋषीणा श्रोतुकामाना पितुश्चैव विशेषत ।।२०
अपि गुह्य च वक्तव्य पृष्टे सति विशेषत ।
सवस्यापि भय तीव्र यमद्वारात् प्रदृश्यते ।।२१ बे १९४ २५

---

१३ –a) ब1 , उद्धवबाहूश्च (ब1 °हस्ताश्च) तिष्ठन्ति (दे3 °त) दे1 उद्ध वाज (?) प्रतिष्ठने दे7 तदोथवाहका केचित दे10 ऊध्ववाहु च तिष्ठतस –b) ब1 तिष्ठन्त्यन्यश्च नत्तका , ब2 3 दे1 3 4 10 तिष्ठत्यन्ये च दारुण (दे4 °णा) मुवे तिष्ठन्तोऽन्ये सुदारुणम, ते1**त्वन्ये सुदारुणम –c) दे10 मुवे निष्ठन्त (→ तिष्ठन्ति) –d) दे10 ते1 पश्यन्तोऽन्ये (→पश्यन्त्यन्ये)

१४ –a) ब2 दे7 10 मुवे एवमेव (→एवमेव) –b) ब1 3 दे1 3 4 10 °चिन्तितान (→°सचितान) –c) ब1 वैशाखे च ब2 वैशाख्येते, ब वैशाखे ते, दे1 3 4 10 वैषानसा, दे5 8 9 वैश्वानरा (→वैश्वानरा) दे1 3 °भागे, दे5 8 9 °भागास, दे10 °भाग–(→°भागास) –d) दे1 ? 4 10 11 शसित° (→सशित°) –e) दे1 4 चरित दे3 चरितु दे10 त्वरिता (→त्वरित), ब1 त्रस्तु (→द्रष्टु) दे7 आगतस्वरिभद्रेष्ट –f) दे1 4 10 ते1 नचिकेत– (→नाचिकेत), ब1 नाचकेतसुतस्तदा, ब2 3 मुदगालकसुत तथा (ब2 तदा), दे5 नाचिकेते सुते तदा

१५ दे8 १५f १६c○ –a) ब1 ऋषयो दिकचराश्चाप्य, ब2 3 ऋषयोपि महात्मानो, दे1 3 4 ऋषयो विज्वराश्चान्ये (दे3 °ह), दे10 ऋषयो दिक्चराश्चान्ये –b) ब1 दान्तो°, दे2 11 ते1 दन्ता° (→दन्तो°), ब3 दन्ता न वलिनस्तथा, दे3**तोषालिक तथा, दे4 10 दन्तोलूखलिक (दे10 °का) तथा –c) ब1 स्वकुकुटटा सुमौनाश्च, ब2 श्मश्रुकुटटा (ब2 °कूटा ) समौनाश्च, दे3 4 अस्मत श्रद्धाश्च मौनाश्च, दे7 9 मुवे अश्मकूटाश्च मौनाश्च –d) ब1 3 दे10 °पणसु–, दे4 °पणस्तु, दे7 °पर्णव (→°पर्णाम्बु–) –e) ब1-3 धूमपास्तु, दे10 धूमपानास मुवे धूमदाश्च (→धूमपाश्च), दे1 3 4 7 तथवान्ये (→तथा चान्ये) –f) दे1 3 4 10 तप° (→ तप्य°), ब2 3 सु दरि (→पावके)

१६ दे8 abc○ (द्र १५ पा वि ) –b) ब3 तत सुपुत्र (→तस्य पुत्र) –c) दे7 तथान्योस्ति (→तथा चान्ये) –d) ब1 3 तप्यमानाश्च पावके, दे10 स्थितावाच्य सुगन्धिना

१७ –a) ब1 दे10 ते वै सर्वे तु पच्छन्ति ब2 ते वै सर्वेषु नप्यन्ति, ब3 ते वै सर्वे प्रयच्छन्ति, दे1 सर्वे शवास्तु पच्छन्ति, दे3 4 सर्वे (दे3 सर्वं) सर्वे तु पच्छन्ति –c) ब2 उद्दालक°, दे1 7 नासिकेत° (→नाचिकेत°), दे3 4 °मुख (→°सुत), मुवे त नाचिकेत सदष्ट्वा –d) ब1 °गत (→°गतम)

१८ –a) दे1 4 हृष्टा , दे3 दष्टा , दे5 8 9 11 मुवे हृष्टा, दे7 दष्टा , ते1** (→दष्ट्वा), ब1 भीतश्च तस्थिवान दष्ट्वा, ब2 भीताश्च तदह केचिद्वै ब3 भीताश्च तस्थु केचिद्वै, दे10 भीतान स्वा स्थिता दष्ट्वा –b) दे7 किंचित (→केचित) –c) ब1-3 दे10 दुमनाविमना (ब2 °विमला) श्चव, दे1 दुश्चित्ताविमुखाश्चैव, दे3 4 दुमनाविमुखाश्चैव –d) दे3 4 समार° (→सशय°) –e) ब3 तमूचु सर्व्वे मुनयो

❀ दे10 ऋषय उ०

१९ –a) दे7 ततो (→भो भो) –b) ब1 दे3 5 8 रत , दे7 रता (→रत) –c) ब2 3 उद्दालक, दे1 7 नासिकेत (दे7 °तु), मुवे नाचिकेत (→नाचिकेत) दे7 सुता (→सुत), दे3 प्राज्ञ , दे4 5 प्राज्ञा (→प्राज्ञ) –d) ब1-3 प्रति– (→परि–), ब1 –पालक , दे4 –पालका, दे5 8 –पालक (→–पालक)

२० –a) ब2 तच्च, दे2 5 7 9 11 मुवे ते1 सत्य (→ तत्र), ब1 तथा, दे2 5 7-9 11 मुवे ते1 त्वया (→यथा), दे2 5 7-9 11 मुवे दृष्ट (→सत्य) –b) ब2 यथा सत्य यथोद्यत, दे2 5 7-9 11 मुवे श्रुत च स (दे7 मम) विशेषकम –cd) दे10 ऋषीणा तु यथा देव श्रोतुकामा यमालय

२१ दे10 २१a-२२b ○ –a) ब1-3 भवेत् कथ्य, दे3 4 स वक्तव्य, ते1**** (→च वक्तव्य) –b) ब1-3 दे1 3 4 पृष्टे न हि न सशय –c) ब2 3 रथ (→भय) –d) दे3 यशद्वारा

वे १९४ २६ मृते नैव पर तात दृश्यते कालमायया ।
स्वकर्म भुज्यते तात प्रयत्नेन च मानवै ।
इह चैव कृत यत्तु तत्परत्रोपभुज्यते ।।२२
करोति यदि तत्कर्म शुभ वा यदि वाऽशुभम् ।
तथाऽत्र दृश्यते काले कालस्यैव तु मायया ।।२३
म्रियते च यथा जन्तुर्यथा गर्भे च तिष्ठति ।
तस्य पार न गच्छन्ति बहव पारचिन्तका ।।२४
तत्र स्थिते जगत्सर्वं लोभमोहतमोवृतम ।
चिन्तयेत न चिन्ताऽत्र मृगयन्ति च यद्धितम ।।२५
करोति चित्रगुप्त किं कि च जल्पत्यसौ पुन ।
धर्मराजस्य कि रूप कालो वा कीदृशो मुने ।।२६
किरूपा व्याधयश्चैव विपाको वाऽपि कीदृश ।
कि च कुर्वन् प्रमुच्येत कि वा कर्म समाचरेत् ।।२७
आस्पद सर्वलोकस्य तत्कर्म दुरतिक्रमम् ।
क्रोधबन्धनज क्लेश कर्षण छेदज तथा ।।२८
येन गच्छन्ति विप्रेन्द्र लोकान् कर्मविदो जना ।
जितात्मान कथ यान्ति कथ गच्छति पापकृत् ।।२९
यथा श्रुत यथा दृष्ट यथा चैवावधारितम् ।
प्रणयात् सौहृदात स्नेहादस्माभिरभिपृच्छितम् ।
वद सर्वं महाभाग यथातथ्येन विस्तरम ।।३०

---

(→यमद्वारात) दे 4 प्रवत्तते(→प्रदश्यते), दे$_{1}$ यत्र द्वारात्प्रदश्यते दे$_{2 5 7 9 11}$ मुवे ते$_{1}$ यद्वा (ते$_{1}$ यध्व) रा प्रतिदश्यते

२२ ब$_{2 3}$ ○, दे$_{10}$ ab○ –a) ब$_{1}$ दे$_{2-5 7 9 11}$ मुवे मत, दे$_{1}$ मत (→मते) दे$_{1 3 4}$ चैव (→नव) –c) दे 4 त्त (→स्व–), दे$_{1 3 4 10}$ सज्जते (→भज्यते), ब$_{1}$ यो धर्मो**ते तात –d) ब$_{1}$ दे$_{1 3 4 10}$ तेन (ब$_{1}$ येन) यत्नेन मानवै –e) दे$_{8}$ ते$_{1}$ चैक (→चैव) –f) ब$_{1 3}$ दे$_{1}$ °युज्यते (→°भुज्यते), दे$_{10}$ तत्परत्रव भुज्यते

२३ –a) ब$_{1 3}$ यश्च दे$_{1 3 4 10}$ यस्तु (→यदि) –c) ब$_{1 3}$ दे$_{3 4}$ त तथा दे$_{1}$ तत्तथा (→तथाऽत्र), ब$_{1 2}$ दे$_{1}$ 4 तत्र, दे$_{7}$ देवि (→काले), दे$_{10}$ तद दश्यते तत्र काले –d) ब$_{1-3}$ दे$_{1 3 4}$ काले कालस्य माय (ब$_{3}$ °न) या, दे$_{10}$ कालस्य वशमागतै

२४ –a) ब$_{2}$ दे$_{1 3 5 8 9}$ तथा (→यथा) –b) दे$_{2 3 5 7 9 11}$ गभ (→गर्भे), दे$_{1}$ हि दे$_{3 4}$ तु दे$_{7}$ प्र– (→च) ते$_{1}$ यथा गच्छश्च तिष्ठति –c) दे$_{10}$ भार(→पार) दे$_{1}$ 4 तस्य गच्छति पार स –d) ब$_{1 3}$दे$_{1 3 4}$ परि°, दे$_{7}$ते$_{1}$ पर°(→पार°)

२५ ब$_{2}$ cd ○ –a) ब$_{1}$ तत्र शून्य, ब$_{2}$ तत्र छत्र, ब$_{3}$ तत्र शूप्र, दे$_{1 3 4}$ तत्रस्थेन (→तत्र स्थिते), दे$_{10}$ तत्र गच्छे त्तरेत्सव –b) ब$_{1}$ ततो, दे$_{10}$ ममा– (→–तमो–), दे$_{4}$ °व्रता (→°वत) –c) ब$_{1}$ चिन्तयते, दे$_{1 3 4}$ चिन्तयन्ते (→चिन्तयेत), दे$_{9}$ चिन्तयेत्तत चिताव्र दे$_{10}$ चितयन्नेव चिन्मात्र –d) ब$_{1}$ च राद्धकान (→च यद्धितम)

२६ दे$_{7}$ २६d २७c○ –c) दे$_{7}$ किं काय धमराजस्य –d) ब$_{1}$ लोको (→कालो)

२७ दे$_{7}$ abc○ (द्र २६ पा वि) –b) ते$_{1}$ नापि (→वाऽपि) –c) ब$_{1}$ किञ्च कुवन्ति मुञ्चेत क ब$_{2}$ किञ्च कृत्वा तु मुच्येत

२८ ब$_{2 3}$ ab○ –a) ब$_{1}$ भयद, दे अस्येद (→आस्पद) दे$_{1}$ 4 °लोकाना, दे$_{10}$ °लोकास्य (→°लोकस्य) –b) दे$_{3}$ °क्रम (→°क्रम) –c) ब$_{2 3}$ दे$_{10}$ क्रोधबन्धनसक्लेश, दे$_{1}$ 4 धमराजस्य किं रूप –d) दे$_{7 9}$ मुवे छेदन ते$_{1}$ भेदन (→छेदज), ब$_{1}$ कर्षासिन्नकसशयात ब$_{2 3}$ कषणश्चावरोहण दे$_{1}$ करो सन्नक सशयात दे$_{3}$ कषास न कन तथा दे$_{4}$ किं शासन कि च सशयात दे$_{10}$ वर्षासनकसशय

२९ ब$_{2 3}$ ab○ –a) दे$_{2}$ गच्छति (→गच्छन्ति) –b) मुवे लोके (→लोकान) ब$_{1}$ लोक मानि यथा विधा, दे$_{1 3 4}$ लोकायतविदोजना, दे$_{7}$ लाकान कमविहिसितान दे$_{10}$ कार्ये लोकविदोजना –c) ब$_{1-3}$ दे$_{1 3 4 10}$ शान्तात्मान, दे$_{2 5 8 9 11}$ ते$_{1}$ सितात्मान (→जितात्मान), दे$_{4}$** दे$_{10}$ याति (→यान्ति), दे$_{7}$ यर्विषैहिंसितात्मानात –d) दे$_{4}$** (→कथ), ब$_{1 3}$ दे$_{1 3 4}$ गच्छन्ति, दे$_{10}$ याति च (→गच्छति), ब$_{1 3}$ पापिना (ब$_{1}$ °का) (→पापकृत), ब$_{2}$ पापिष्ठो यान्ति वै कथ

३० –a) दे$_{9}$ यथा श्रुत**** –b) दे$_{4 10}$ नवाव° (→चैवाव°) –d) ब$_{1}$ दे$_{10}$ °पृच्छिन दे$_{1}$ °योजित, दे$_{7}$ °पच्छत (→°पृच्छितम) ब$_{2 3}$ अस्माभिरपि पच्छ (ब$_{2}$ °च्छि) त –e) ब$_{1-3}$ दे$_{1 3 4 10}$ ब्रूहि (→वद) –f) ब$_{3}$ °तप्येन (→°तथ्येन), ब$_{1-3}$ दे$_{1 3 4 10}$ माचिर (→विस्तरम्)

वैशम्पायन उवाच ।❀
ऋषिभिस्त्वेवमुक्तस्तु नाचिकेतो महामना । यदुवाच महाराज शृणु तज्जनमेजय ॥३१

॥ इति श्रीवराहपुराणे भगवच्छास्त्रे द्विनवत्यधिकशततमोऽध्याय ॥ १९२ ॥

# १९३

नाचिकेत उवाच ।❀
कथ्यमान मया विप्रा शृण्वन्तु तपसि स्थिता ।
प्रणम्य तस्मै देवाय धर्मराजाय धीमते ।
ससार तु यथाशक्त्या कथ्यमान निबोधत ॥१
असत्यवादिनो ये च जन्तुस्त्रीबालघातका ।
तथा ब्रह्महण पापा ये च विश्वासघातका ॥२
ये ये शठा कृतघ्नाश्च लोलुपा पारदारिका ।
कन्याना दूषका ये च ये च पापरता नरा ॥३
वेदाना दूषितारश्च वेदमार्गविहिसका ।
शूद्राणा याजकाश्चैव हाहाभूता द्विजातय ॥४
अयाज्ययाजकाश्चैव ये कुबुद्धियुता नरा ।
सुरापो ब्रह्महा चैव यो द्विजो वीरघातक ॥५
तथा वार्धुषिका ये च जिह्मप्रेक्षाश्च ये नरा ।
मातृत्यागी पितृत्यागी य स्वसाध्वी परित्यजेत ॥६ वे १९५ ७

---

❀ ब2 दे5 8 ○, दे1 10 11 वैशम्पायन उ०

३१ ब2 3 ○ –a) ब1 ऋषिभिश्चैवमुक्तस्तु –b) ब1 दे10 नाचिकेतसुतस्तदा, दे1 नासिकेतस्तदा तथा, दे3 नाचिकेन* दा तथा, दे4 नाचिकेतस्य दा तथा, दे7 नासिकेतु महात्मना –c) दे1 3 4 महाभाग (→महाराज) –d) दे9 शृणु******

**पुष्पिका**—दे9 ○

**पुराणनाम**—ब1 इति वाराहपुराणे भगवतशास्त्रे, ब2 इति श्रीवराहपुराणे भगवच्छास्त्रे ब दे1 इत्यादि वराहपुराणे भगवच्छास्त्रे, दे2 5 7 8 10 11 मुवे ते1 इत्यादि वाराहपुराणे दे3 4 इत्यादि श्रीवाराहपुराणे भगवच्छास्त्रे **अध्यायनाम**—ब1 दे1-5 8 11 ते1 समा चक्रे ऋषिसभाषणो नाम, ब2 3 दे7 ससारचक्रे ऋषिसम्भाषणो नामाध्याय, दे10 ऋषिपुत्रसभाषण नाम, मुवे ससारचक्रे नचिकेतागमन नाम **अध्यायसख्या**–ब2 दे1-5 7 10 11 ○, ब1 द्वितीयोऽध्याय, ब3 ॥ ४१ ॥, दे8 ॥ ९७ ॥ मुवे चतुनवत्यधिकशततमोऽध्याय ॥ १९४ ॥, ते1 दशोत्तरद्विशत तमोऽध्याय

**१९३**

[ब3 अध्यायोऽय नास्ति]

❀ दे9 ○, ब1 दे1 3 ऋषिरु, ब2 दे4 ऋषिरुवाच, दे5 8 सूत उवाच, दे7 नासिकेतुरुवाच, दे10 ऋषिपुत्र

१ दे9 a ○ –a) दे7 यथा (→मया), दे7 विप्रात (→विप्रा), दे4 कथ्यमान मया **, दे5 कथ्य मान मया विप्रा –b) दे7 शृणु तु, दे9** तु (→शृण्वन्तु), ब1 2 शृण्वन्ति (ब1 शृणुते) च पथि स्थिता –c) मुवे नमश्च (→प्रणम्य) –e) मुवे °शक्ति (→°शक्त्या)

२ ब1 २c–५d ○, ब2 दे7 cd ○ –b) ब1 ये द्विजा वीरहास्तथा, ब2 ये च स्त्रीविनिघातका –c) दे3 ब्रह्महणा दे10 ते ब्रह्मणा, दे11 ब्रह्म* ण (→ब्रह्महण), दे4 तथा ब्रह्म* ण* पो –d) दे1 3 4 10 मित्र– (→ये च)

३ ब1 ○ (द्र २पा वि) –a) ब2 पाप शठा, दे1 3 4 पापाशया दे7 अग्निदाश्च, दे10 पापासवा (→ये ये शठा) –b) दे3 4 °दारका (→°दारिका), ब2 लोलुपाग्रत भुञ्जका

४ ब1 ○(द्र २पा वि), दे1 3 4 ४c–अध्यायसमाप्तिपय त नास्ति –a) दे10 मुवे दूपकाश्चैव (→दूषितारश्च), ब2 वेदावादि द्विजाना च, दे1 4 वेद (दे1 चैव) वेदो द्विजो नित्य –b) ब2 नित्य कुर्वन्ति हिंसन, दे1 3 4 यश्च (दे4 पश्च) कुर्वीन नाशन –c) दे7 पूजकश्चैव, ते1 याचकाश्चैव (→याजकाश्चव) –d) दे9 11 हा* (→हाहा–), ते1*** ह द्विजातय

५ ब1 ○ (द्र २पा वि), दे1 4 ○ (द्र ४पा वि), दे7 cd ○ –a) दे8 9 अयाज– (→अयाज्य–), ब2 °याचकश्चैव (→°याजकाश्चव) –b) दे8 11* ये बुद्धि°, मुवे ये ये कुष्ठ° (→ये कुबुद्धि°), ब2 ये च वै कुमतिन्नरा, दे5* कुबुद्धिमता नरा –c) दे11 ब्रह्माहा चैव, ते1 ब्रह्महाश्चव (→ब्रह्महा चैव), ब2 सुरापा ब्रह्महत्या ये, दे11 सुरापा ब्रह्महतारो –d) दे5 8 9 °घातका (→°घातक), ब2 यो द्विजो वीरहास्तथा, दे10 ये द्विजा कृतवीरहा

६ दे1 4 ○ (द्र ४पा वि), ब2 abc ○, दे ab○ –a) दे11 तथा वाधुषि* चारो –b) दे11 दूताश्चान्यत भाषिण –d) ब1 यश्चसर्व–, ब2**सव, दे5 7-11 ते1 यश्च

वे १९५७ गुरुद्वेषी दुराचारो दूताश्चाव्यक्तभाषिण· ।
गृहक्षेत्रहरा ये च सेतुबन्धविनाशका. ॥७
अपुत्राश्चाप्यदाराश्च श्रद्धया च विवर्जिता· ।
अशौचा निर्दया पापा हिंसका व्रतभञ्जका· ।
सोमविक्रयिणश्चैव स्त्रीजित सर्वविक्रयी ॥८
भूम्यामनृतवादी च वेदजीवी च यो द्विज ।
नक्षत्री च निमित्ती च चाण्डालाध्यापकस्तथा ॥९
सर्वमैथुनगामी च अगम्यागमने रत ।
मायिका रतिकाश्चैव तुलाधाराश्च ये नरा ॥१०
सर्वपापसुसङ्घाश्च चिन्तका ये च वैरिणाम् ।
स्वाम्यर्थे न हता ये च ये च युद्धपराङ्मुखा ॥११

परवित्तापहारी च राजघाती च यो नर ।
अशक्त· पापपोषश्च तथा ये ह्यग्निजीविन ॥१२
शुश्रूषया च मुक्ता ये लिङ्गिन पापकर्मिण ।
पानागारी च चक्री च नरा ये चाप्यधार्मिका ॥१३
देवागाराश्च सत्रांश्च तीर्थविक्रयिणस्तथा ।
व्रतविद्वेषिणो ये च तथाऽसद्वादिनो नरा ॥१४
मिथ्या च नखरोमाणि धारयन्ति च ये नरा ।
कूटा वक्रस्वभावाश्च कूटशासनकारिण ॥१५
अज्ञानादव्रती यश्च यश्चाश्रमबहिष्कृत· ।
विप्रकीर्णप्रतिग्राही सूचकस्तीर्थनाशक ।
कलहश्च प्रतर्कश्च निष्ठुरश्च नराधम· ॥१६

---

साध्वी (दे$_{11}$ ते$_{1}$ °ध्वी) (→य स्वमाध्वी)

६ श्लोकात्पर दे$_{11}$ अधिकम—

काया ये जिह्वाप्रेक्षाश्च ये नरा । (= ६ab)

७ दे$_{1\,3\,4}$ ○ (द्र ४पा वि) -b) ब$_{1\,2}$ °भाषिता (→°भाषिण) -d) दे$_{7}$ °विनाशक (→°विनाशका)

८ दे$_{1\,3\,4}$ ○ (द्र ४पा वि), दे$_{11}$ ef ○, ब$_{2}$ c ○ -a) ब$_{1}$ अशूराश, ब$_{2}$ असुराश (→अपुत्राश), दे$_{10}$ अपुत्राश्चाप्यहाराश्च -c) दे$_{7}$ पाप- (→पापा) -d) दे$_{5\,9}$ °भजका (→°भञ्जका) -e) दे$_{7}$ सोमविक्रयिनश्चैव -f) दे$_{7}$ स्त्रीजितास (→स्त्रीजित)

९ दे$_{1\,3\,4}$ ○ (द्र ४पा वि), दे$_{11}$ ab ○ -a) ब$_{2}$ भूम्या चानृत°, दे$_{7}$ भूम्या स नृत° (→भूम्यामनृत°) -b) दे$_{7}$ वैद्य° (→वेद°), ब$_{2}$ ये द्विजा (→यो द्विज), ब$_{1}$ वेदाजीवा च ये द्विजा -c) ब$_{1\,2}$ नक्षत्र (→नक्षत्री), ब$_{1\,2}$ निमित्तश्च, दे$_{5}$ निमित्तोव (→निमित्ती च) -d) दे$_{4\,5}$* डाला°, दे$_{7}$ चडाला° (→चाण्डाला°), ते$_{1}$ चडालाध्यापकास्तथा

१० दे$_{1\,3\,4}$ ○ (द्र ४पा वि), ब$_{2}$ b ○, दे$_{11}$ d ○ -a) ब$_{2}$ पव- (→सव-), ब$_{2}$ -गामी* मुवे -कर्ता च (→-गामी च) -c) ब$_{1\,2}$ दे$_{10}$ स्नाप (दे$_{10}$ माय) कान्तरिताये च

११ दे$_{1\ 4}$ ○ (द्र ४पा वि), दे$_{10}$ abc ○, दे$_{8}$ d ○ -a) ब$_{1}$ °सुसवद्धा, दे$_{5}$ मुवे °सुसङ्गाश्च, दे$_{7}$ °शुसघ्याश्च (→°सुसघाश्च) -b) दे$_{5}$ मुवे चिन्तकायेऽति वैरिण (दे$_{5}$ °णा) -c) ब$_{1}$ न हिता, ब$_{2}$ रहिता (→न हता) -d) ब$_{1\,2}$ दे$_{7\,10}$ युद्धे, दे$_{5}$ यु* (→युद्ध-)

१२ दे$_{1\,3\,4}$ ○ (द्र ४ पा वि), दे$_{8}$ abc○, ब$_{2}$ cd○ -a) ब$_{1}$ परचित्तापहारी च, ब$_{2}$ परचिन्तापहाराय, दे$_{2\,5\,7\,9\text{-}11}$ ते$_{1}$ परवित्तापहारा (दे$_{7}$ °रा) श्च -b) दे$_{11}$ यो नरा ते$_{1}$ ये नरा (→यो नर) -c) ब$_{1}$ आशक्त-, दे$_{5\,9}$ अशक्त- दे$_{10}$ अशक्ति- (→अशक्त), ब$_{1}$दे$_{10}$ पापलोक (दे$_{10}$ °का) श्च, दे$_{5\,9}$ मवे पापघोषश्च दे$_{7}$ पददोषश्च (→पापपोषश्च) -d) ब$_{1}$ चाग्नि°, दे$_{2}$ ह्युग्नि° (→ह्यग्नि°)

१३ दे$_{1\,3\,4}$ ○ (द्र ४ पा वि), ब$_{2}$ cd ○ -a) ब$_{1}$ ये शक्ता (→मुक्ता ये) ब$_{2}$ स्वश्रूषया च ये मुक्ता दे$_{10}$ शुश्रूषया विमुक्ताश्च -b) ते$_{1}$ °कमण (→°कर्मिण) -c) ब$_{1}$ पानामङ्क्षी, दे$_{2}$ ते$_{1}$ मानागारी दे$_{5}$ पात्रमारो दे$_{8}$ पान्नगारी, दे$_{9}$ पान्नकारी, दे$_{10}$ पापनारी, मुवे पात्रकारी ते$_{1}$ मानागारी (→पानागारी) मुवे चक्रिणश्च, ते$_{1}$ च वक्री च (→च चक्री च) -d) दे$_{5\,8}$ वाप्य° (→चाप्य°), ब$_{1}$ ये नरा चाप्यधर्मिका

१४ दे$_{1\,3\,4}$ ○ (द्र ४ पा वि) -a) ब$_{1}$ सत्वाश्च, दे$_{5}$ सत्राश्च दे$_{7}$ सेत्राश्च, मुवे सत्राणि, ते$_{1}$ तीर्थानि (→सत्राश्च), ब$_{2}$ दिवावागाश्च सत्राश्च, दे$_{10}$ देवगाराश्च सर्वांश्च -b) दे$_{5}$ ते$_{1}$ तीथ (ते$_{1}$ तथा) विक्रयिणास्तथा -c) ब$_{2}$ व्रत (→व्रत-), दे$_{5}$ मा (→च)

१५ दे$_{1\,3\,4}$ ○ (द्र ४पा वि), ब$_{2}$ १५-१६○, ब$_{1}$ ab○ -c) ब$_{1}$ युक्त्याक्रीव्य सभा वा च, दे$_{10}$ युक्ताक्रीडा सभावी च -d) ब$_{1}$ °शसन° (→°शासन°), दे$_{10}$ रूपमासनकारिण

१६ दे$_{1\,3\,4}$ ○ (द्र ४ पा वि), ब$_{2}$○ (द्र १५पा वि) -a) ब$_{1}$ अज्ञाना अव्रती या च, दे$_{5}$ अज्ञानादव्रत यस्य, दे$_{8}$ अज्ञानादव्रतायस्य, दे$_{10}$ अज्ञानादव्रवीद्यश्च, ते$_{1}$ अज्ञानादव्रतयश्च -b) ब$_{1}$ आश्रमैश्च वहि कृता, दे$_{10}$ आश्रमाच्च बहि कृत -d) ब$_{1}$ तत्र यस्तीथनाशक -e) ब$_{1}$ कलहश्च प्रतकश्च, दे$_{7}$ कलहश्चैव पिशुन, मुवे कलही च प्रतक्यश्च -f) ब$_{1}$ निष्ठुराश्च नराधमा

एते चान्ये च बहवो ह्यनिर्दिष्टा सहस्रश ।
स्त्रियश्च पुरुषाश्चैव यत्र गच्छन्ति तच्छृणु ।।१७
कुर्वन्तीह यथा सर्वे तत्र गत्वा यमालये ।
तानि तत्कथयिष्यामि श्रूयता द्विजसत्तमा ।।१८

वैशम्पायन उवाच ।❀

एव तस्य वच श्रुत्वा सर्व एव तपोधना ।
प्रपच्छुर्विस्मयाविष्टा नाचिकेतमृषि तदा ।।१९

ऋषय ऊचु ।❀

त्वया सर्वं यथादृष्ट ब्रूहि तत्त्वविदावर ।
यथास्वरूप कालोऽसौ येन सर्वं प्रवर्तते ।।२०

इह कर्माणि य कृत्वा पुरुषो ह्यल्पचेतन ।
वारयेत् स तदा त तु ब्रह्मलोके च स प्रभु ।।२१
कल्पान्त पच्यमानोऽपि दह्यमानोऽपि वा पुन ।
न नाशो हि शरीरस्य तस्मिन् देशे तपोधना ।।२२
यस्य यस्य हि यत्कर्म पच्यमान पुन पुन ।
अवश्य चैव गन्तव्य तस्य पार्श्वं पुन पुन ।
न तु त्रासाद् द्विजा शक्तस्तत्र त्रातु हि कश्चन ।।२३
न गच्छन्ति च ये तत्र दानेन नियमेन च ।
वतरण्याश्च यद् रूप कि तोयमवहत्यसौ ।।२४
रौरवो वा कथ विप्र कि रूप कूटशाल्मले ।
कीदृशा वाऽपि ते दूता किवीर्या किपराक्रमा ।।२५ वे १९५ २७

१७ दे1 3 4 ○ (द्र ४ पा वि ), ब1 १७ c–१८ d ○ –b) ब1 2 निर्दिष्टाश्च, दे7 ह्यनिर्दिष्टस, दे10 विनिर्दिष्टा (→ह्यनिर्दिष्टा ) –c)दे7 स्त्रियश्चापुरुषश्चैव, मुवे स्त्रियो नराश्च गच्छति –d) मुवे यत्र तच्छणु तामला , ते1 *****तच्छृणु

१७ b चरणात्पर ब1 अधिकम्—
यस्य यस्य हित कम पाठ्यमान पुन पुन ।
अवश्यञ्चैव गन्तव्य तस्य पाश्व महात्मना ।
न तत्रासो द्विजास्तत्र शकस्यापि हि चात्मन (कश्चन )।( = २३)

१८ दे1 3 4 ○ (द्र ४ पा वि ), ब1 ○(द्र १७पा वि ) –a) ब2 सवतोह, दे10 कुवन्ति हि (→कुवन्तीह), दे2 7 9 11 ते1 सर्वं दे10 –शक्त्या (→सर्वे) –b) ब2 यमालय, दे5 यभाषये (→यमालये) –c) दे2 जानि तत, दे10 तानि व , मुवे तानि वै (→तानि तत) –d) दे7 श्रूयता (→श्रूयता), दे5 8 9 °सत्तम (→°सत्तमा )

❀ ब2 ○, दे1 3 4 ○ (द्र ४ पा वि ), दे10 11 वैशम्पायन

१९ दे1 3 4 ○ (द्र ४ पा वि ), ब2 ○ –b) ब1 सर्वे(→सव) –c) दे2 10 11मुवे विस्मयविष्टा (→विस्मयाविष्टा) –d) ते1 तथा (→तदा), ब1 दे10 नाचिकेतसुत तदा, दे7 नासिकेतमृषि तदा

❀ दे1 3 4 ○(द्र ४पा वि ), ब2 ○, दे10 ऋषय उ०

अत पर दे5 8 अधिकम्—
एव तस्य वच श्रुत्वा सर्वं एव तपोधना । ( = १९ ab)

२० दे1 3 4 ○ (द्र ४पा वि ), ब2 ○ –b) मुवे तत्र (→तत्त्व–), ब1 ब्रूहि किं वदताम्वर, दे10 ब्रूहि तत्ववता वर –c) दे7 °स्थरूपा(→°स्वरूप ), दे10 कामाना(→कालोऽसौ). –d) दे5 8 सव– (→सव ), दे10 सव ब्रूहि सनातन

अत पर ब1 अधिकम्—
*ये च गच्छन्ति वै तत्र मुञ्चते चैव ये नरा ।

२१ दे1 3 4 ○(द्र ४पा वि ), ब1 २१–२१○,दे5 ○ –a) दे11 इहा (→इह), ब2 यत्, दे10 ये (→य ) –b) ब2*****तेजस दे10 पुरुषा स्वल्पतेजस –c) दे7 त्व (→त), ब2 दे10 धारयेच्छतवात (ब2 °न) तु –d) ब2 °लाकेषु, दे10 °लाके तु (→°लाके च)

२२ दे1 3 4 ○(द्र ४ पा वि ),ब1 ○(द्र २१पा वि ), दे5 ○ –a) ब2 द10 कल्पाते (→कल्पान्त), दे7 पश्यमानापि, दे9 पच्यमानेपि (→पच्यमानाऽपि) –b)दे7 8 वायुन (→वा पुन ), दे5***नोऽपि वा पुन –d) ते1 देशा (→दशे), ब2 दे10 तास्मन् दशे न सशय

२३ दे1 3 4 ○ (द्र ४पा वि ), ब1 ○ (द्र २१पा वि ) –a) ब2 यस्यति तत् (→यम्य हि यत्) –b) दे7 पश्यमान , दे10 पच्यमान (→पच्यमान ) –c) दे7 गतव्या (→गन्तव्य) –d) ब2 दे10 तस्य पाश्व (ब2 °र्श्वे) महात्मन –e) ब2 त्रासा (→त्रासाद्), दे7 द्विजात, मुवे द्विज (→द्विजा ), ब2दे10 तत्र,द8 शक्तास (→शक्तस्) –f )मुवे गन्तु(→त्रातु) ब2 शक्रश्चातुकश्चन

२४ दे1 3 4 ○ (द्र ४ पा वि ) –a) ब1 2 न च गच्छन्ति ते (ब1 के) तत्र, द10 तेन गच्छन्ति ये तत्र –d) ब1 कथञ्च मिहसत्यसौ, ब2 कथञ्चैवेहमत्यसौ, दे10 मुवे किं ताय च वहत्य (द10 °त्यो) सौ

२५ दे1 3 4 ○ (द्र ४पा वि ) –a) ब2 रौरवे वा, दे10 रौरव च (→रौरवो वा) –b) ब1 °शा*लि, ब2 °शाल्मलि, दे2 ते1 °शाल्मले, दे7 °शल्मले , दे8 °शाल्मलै. (→°शाल्मले ) –c) मुवे वा हि (→वाऽपि), दे7 दूता किं (→ते दूता ), ब1 2 कीदृशश्चापि तद्रूपा (ब1 °पा ) –d) मुवे कार्या , ते1 वीरा (→–वीर्या ), दे11 °क्रम (→–°क्रमा )

१,२८ किं च किं च तु कुर्वाण किं च किं च समाचरन् ।
न चेतो लभते जन्तुश्छादित पूर्वनेजसा ॥२६
धृति न लभते किंचित् तैस्तैर्दोषै सुवासिता ।
दोष सत्यमजानन्तस्तथा मोहेन मोहिता ॥२७
बोद्धव्य नावबुध्यन्ते गुणाना तु गुणोत्तरम् ।
हाहाभूताश्च चिन्तार्त्ता सर्वदोषसमन्विता ।
पर पारमजानन्तो रमन्ते कालमायया ॥२८
क्लिश्यन्ते बहवस्तत्र कृत्वा पापमचेतस ।
एतत् कथय वत्स त्व यत प्रत्यक्षदर्शिवान् ॥२९

॥इति श्रीवराहपुराणे भगवच्छास्त्रे त्रिनवत्यधिकशततमोऽध्याय ॥ १९३ ॥

# १९४

वैशम्पायन उवाच ।❀
तेषा तद् वचन श्रुत्वा ऋषीणा भावितात्मनाम् ।
उवाच वाक्य वाक्यज्ञ सर्वं निरवशेषत ॥१
नाचिकेत उवाच ।❀
श्रूयता द्विजशार्दूला कथ्यमान मया द्विजा ।
योजनाना सहस्र तु विस्तराद् द्विगुणायतम् ।
द्विगुण परिवेषेण तद् वै प्रेतपते पुरम् ॥२
भवनैरावृत्त दिव्यैर्जाम्बूनदमयै शुभै ।
हर्म्यप्रासादसबाध महाट्टालसमन्वितम् ॥३

---

२६ दे1 3 4 ○ (द्र ८पा वि), ब2 ab ○ -a) द, त्वत्र (→च तु), दे2 5 7 9 11मुवे ते1 कुर्वाणा (→कुर्वाण) -b)ब1 समाचरेत, दे7 ममाचरेत दे10 समाचरा (→समाचरन) -c) दे5 9 जन्तू (→ज तुश) -d) ब1 2 छादिते (ब2°त) कमपूवक (ब2 °कै), दे10 छादितु पूवचेतसा

२७ दे1, 4 ○ (द्र ४पा वि) -a) ब2 धतिर, दे5 8 धते, दे10 धति (→धर्ति), ब1 2 दे10 कश्चित(→किञ्चित) -b) ब1 2 तैरस्तैर्व्याधिसुवाधि (ब2 °षि)ता, दे10 नरर्थ्ये विष्णु वादिन -c) ब1 दाष सत्य जमानन्तस, ब2 दोप सत्य-जमानाश्च, दे5 8 9 दोष सत्यमजानत्यस (दे5 °सस), ते1 दोष सत्यमलानन्ता

२८ दे1, 4 ○ (द्र ४पा वि) -a) दे5 °बुध्यते, दे9 °बध्यते (→°बुध्यन्ते), दे7 वोधव्य न च वुध्येत -b) दे10 ब्रूहि त्व (→गुणाना) -c) ब1 2 हाहाभूतश्च कि कर्त्ता (ब2 वार्त्ता) -d) ब2 सर्वे (→सव-) -e) दे5 8 पार पार, मुवे परपर(→परपारम) -f) दे10 रमते, ते1 नमन्ते(→रमन्ते), मुवे कस्य (→काल-)

२९ दे1 3 4 ○ (द्र ४पा वि) -c) ब1 यत्ने च, ब2 यत्नेन, दे10 नो वत्स (→वत्स त्व) -d) ब1 2 सत्व, दे10 हित (→यत), ब2 °दष्टवान, दे10 °दशन (→°दर्शिवान)

**पुष्पिका**—दे1 3 4 ○

**पुराणनाम**—ब1 2 दे2 5 7-9 11 ते1 इत्यादि वा (ब1 2व) राहपुराणे, दे10 इत्यादि वाराहपुराणे **अध्यायनाम**—ब1 ससारचक्रे दु कृतादाहो नाम, ब2 दे2 7 11 ते1 ससारचक्रे दुष्कृत देहो (दे7 °शा) नाम दे5 समारचक्रे दु कृते देहोवाय **अध्याय सख्या**—ब1 2 दे10 ○, दे2 5 9 11 ततीयोध्याय, मुवे ५ञ्च नवत्यधिकशततमोऽध्याय ॥१९५॥,ते1 एकादशोत्तरद्विशततमोध्याय

**१९४**

[ब, अध्यायोऽय नास्ति]

❀ दे1 3 4 10 ○

१ -a) ते1 येषा (→तेषा), ब1 तु (→तद), दे1 3 4 शून्य कृत्वा तु वचन -b) दे2 भावितात्मिना, दे4 भाविता ** (→भावितात्मना) -c) दे8 वाच (→वाक्य), ते1 वाक्यज्ञ (→वाक्यज्ञ ) -d) दे1 सर्वा (→सव )

❀ ब1 दे1 3 4 ऋषिरुवाच, ब2 ऋषिपुत्र उवाच, दे7 नासिकेतोवाच, दे10 ऋषिपुत्र

२ -a) दे5 8 °शादूल (→°शार्दूला), दे1 4 श्रूये (दे4 श्रूय) ता राजशार्दूल -b) दे4 °मन, दे10 °माना (→°मान), ब1 2 दे10 मयानघा, दे1 3 4 मयानघ, दे5 8 मया द्विज (→मया द्विजा ) -c) दे1 सहस्रा (→सहस्र) -d) ब2 विस्तरद (→विस्तराद), दे7 विस्ताराद द्विगुणायुत -e) दे5 द्विगुणा (→द्विगुण), ब2 दे7 द्विगुण परिवेशेण (दे7 °न) -f) दे3 ते1 तद्वै, दे8 9 तद्वत (→तद्वै), दे1 प्रेतपत, दे4 7 11 प्रेत (दे11 °त ) पते (→प्रेतपते ), ब2 तद्वै प्रेतपुर महत्

३ -a) दे1 3 भुवनैर् (→भवनैर्), दे4 5 8 9 विव्य (→दिव्यैर्) -b) दे1 3 4 जाम्बूनदविभूषित -c) दे1 हर्म्या (→हर्म्य-), दे3 11 -प्रसाद- (→-प्रासाद-), दे1 3 4 10 मुवे -सबाध-, दे5 -साबाध(→-सबाध) -d)ब1 2मन्दारकसमन्वित,

सौवर्णेनैव महता प्राकारेणाभिवेष्टितम् ।
कैलासशिखराकारैर्भवनैरुपशोभितम् ॥४
तत्रव विमला नद्यस्तोयपूर्णा सुशोभना ।
दीर्घिकाश्च तथा कान्ता नलिन्यश्च सरासि च ॥५
तडागाश्चैव कूपाश्च वृक्षषण्डा सुशोभना ।
[नरनारीसमाकीर्णा गजवाजिसमाकुला ] ॥६
नानादेशसमुत्थानैर्नानाजातिभिरेव च ।
सर्वजीवैस्तथाकीर्णं तस्य राज्ञ पुरोत्तमम् ॥७
क्वचिद् युद्ध क्वचिद् द्वन्द्व तेन बद्धो यमालये ।
क्वचिद् गायन् हसश्चैव क्वचिद् दु खेन दु खित ॥८
क्वचित्क्रीडन् यथाकाम क्वचिद् भुञ्जन् क्वचित् स्वपन् ।
क्वचिन्नृत्यन् क्वचित तिष्ठन् क्वचिद्बन्धनसस्थित ॥९
एव शतसहस्राणि तस्य राज्ञ पुरोत्तमे ।
स्वकर्मभि प्रदृश्यन्ते स्थूला सूक्ष्माश्च जन्तव ।
मया दृष्टा द्विजश्रेष्ठास्तस्य राज्ञ पुरोत्तमे ॥१०
अङ्गानि चैव सीदन्ति मनो विह्वलतीव मे ।
दिव्यभावा स्पृशन्त्येते चिन्तयानस्य तत्फलम् ।
तथाऽपि कथयिष्यामि यथादृष्ट यथाश्रुतम् ॥११
पुष्पोदका नाम तत्र नदीना प्रवरा नदी ।
दृश्येत न च दृश्येत नानावृक्षसमाकुला ॥१२
सुवर्णकृतसोपाना दिव्यकाञ्चनबालुका ।
प्रसन्नेन च तोयेन शीतलेन सुगन्धिना ॥१३ वे १९६

---

दे1 4 मुट्टालकविभूषित, दे10 मट्टालकसमन्वित, ते1 महानागसमन्वित

४ द4 ○ -a) दे1 3 सौवर्णेनेव महता, दे7 सौवणनव सहसा -b) दे5 °वेष्टिते (→°वेष्टित) -c) ब1 दे1 3 कैलाश° (→कैलास°) -d) दे1 3 भुवनैर (→भवनैर)

५ ब1 2 ५ ११d ○, दे3 4 ○ -a) मुवे ते1 तत्र वै (→तत्रव), दे7 नद्याप (→नद्यस) -d) दे7 नलिन्याश दे9 नलिनश (→नलिन्यश)

५ श्लोकस्य b,c मध्ये दे3 4 अधिकम्–

*प्रेक्षागहाणि रम्याणि तथा क्रीडागृहाणि च ।

६ ब1 2 ○ (द्र ५पा वि ) -a) दे3 4 तथारामानि, दे7 ते1 तडा (ते1 °टा) काश्चव, दे10 तडागानि च (→तडागाश्चैव), दे1 आरामाश्च निपातानि -c) दे7 °समाकीण(→°समाकीर्णा) -d) दे10 गन्ध° (→गज°), दे7 °कुल (→°कुला )

६ श्लोकात्पर दे1 अधिकम्–

*प्रेक्ष्या गहाणि रम्याणि तथा क्रीडागृहाणि च ।
प्रासादा कोटिशो भौमा ज्वलद्रत्नविभूषिता ॥

६ श्लोकात्पर दे10 अधिकम्–

*प्रेक्ष्य गृहाणि तस्यानि तथा क्रीडागहाणि च ।
प्रासादा शतभौमाश्च नानारत्नसमुज्वला ।
समा प्रमास्तथान्याना नानारूपा सुशोभना ॥

७ ब1 2 ○ (द्र ५पा वि ) -a) दे 4 देशे (→देश–), दे1 –समुत्पन्नैर, दे3 4 समुत्पन्ना (→–समुत्थानर्) -c) दे3 सव (→सव–), दे2 5 7 9 11 ते1 °बीजैस (→°जीवैस्), दे4 5 तथाकीर्णा (दे5 °ण) (→तथाकीण)

८ ब1 2 ○ (द्र ५ पा, वि ) -a) दे1 बध्यन्, दे3 4 द्वद्व, दे10 बन्धन (→युद्ध), दे1 युध्यन, द युद्ध, दे4 क्रुद्ध, द10 भाप (→द्वन्द्व) -b) दे1 3 4 क्वचिद (→तन), दे3 4 बद्धा, दे7 च द्वे (→बद्धो), दे10 त्रासश्चव क्वचित क्वचित -d) द3 4 दुखिता, दे7 दूषित (→दु खित )

९ ब1 2 (द्र ५पा वि ) -a) दे1 पीडन (→क्रीडन), मुवे °कम (→°काम) -b) दे1 भुज्यन, दे8 ते1 भजन (→भुञ्जन्) -c) ते1 तृप्यन(→नृत्यन) -d) दे4 बद्धेन(→बन्धन–), दे10 °सस्थिता (→°सस्थित )

१० ब1 2 ○ (द्र ५पा वि ), दे 4 c–f ○ -a) दे1 विधा, दे3 4 शरा (→शत–) -d) ते1 स्थला (→स्थूला ), दे7 ये वृद्धा (→जन्तव ), दे1 10 सूक्ष्मा स्थूलाश्च जन्तव -e) दे1 2 5 8 9 11 °श्रेष्ठ (→°श्रेष्ठास) -f ) द1 सत्य (→तस्य)

११ ब1 2 a–d ○ (द्र ५ पा वि ) -b) दे3 मनो******, दे4 मनो दिव्यभवास्पश -c) दे7 10 दिव्य (→दिव्य–), दे4 भावास्पशत्येते (वापि) चापि -d) दे10 विजया तस्य तत्फलम -f ) दे2 3 10 मुवे तथा (→यथा–)

१२ -a) ब1 2 दे1 3 4 8 पुण्योदका (→पुष्पोदका) -b) दे4** ना परमा नदी, दे10 नदीनामुत्तमा नदी -c) ब2 दश्ये च, दे2 ते1 दश ते, दे5 7-9 11 मुवे दश्यते, दे10 दृश्यते (→दश्येत), ब2 दश्ये च, दे10 स्पश्येत (→दृश्येत), ब1 2 दे1 °कुला (→°कुला)

१३ -a) दे7 स्ववण° (→सुवण°), दे4 °क्रत (→°कृत–), ते1 °सोपान (→°सोपाना) -b) दे10 °वल्लका (→°बालुका) -d) दे11 शीतलो न सुगन्धिना

६ १५ पुष्पोत्पलवनाकीर्णा नानापक्षिसमाकुला ।
भ्राजते सरिता श्रेष्ठा सर्वपापप्रणाशिनी ।।१४
तस्यास्तीरे मया दृष्टा पादपाश्च सहस्रश ।
अमरा क्रीडमानाश्च जलक्रीडनकानि च ।।१५
विशालजघना यस्या गन्धर्वा सामगा इव ।
भुजङ्गावनताङ्गचश्च किन्नयश्च सुगायना ।
दिव्यभूषणसभोगै क्रीडन्त्यत्र समागता ।।१६
एव नारीसहस्राणि तत्र दिव्यानि नित्यश ।
क्रीडन्ति सलिले तत्र प्रासादेषु शुभेषु च ।।१७
तत्रापरे वृक्षषण्डा नित्यपुष्पफलान्विता ।
ते च कामप्रदा नित्य मत्तद्विजसमायुता ।।१८
प्रमदाश्च जले तत्र कान्तरूपा सुमेखला ।
रमयन्त्यो नरास्तत्र यथाकाम यथासुखम् ।।१९
ता नदी क्षोभयन्त्यस्ता क्रीडन्ति सहिता प्रियै ।
गायन्ति सलिले काश्चिन्मधुर मधुविह्वला ।।२०
जलतूर्यनिनादेन भूषणाना स्वनेन च ।
भाति सा निम्नगा दिव्या दिव्यरत्नैरलङ्कृता ।।२१
ववस्वती नाम महानदी सा
शुभा नदीना प्रवराऽतिरम्या ।
प्रयाति मध्ये नगरस्य नित्य
मातेव पुत्र परिपालयन्ती ।।२२
तोयानुरूपा च मनोहरा च
दिव्येन तोयेन सदैव पूर्णा ।
यस्यास्तु हसा पुलिनेषु मत्ता
कुन्देन्दुवर्णा प्रचरन्ति नित्यम् ।।२३

---

१४ ते1 c ○ –a) मुवे पुष्पयत्फलवनाकीर्णा –c) दे9 भाजते, द10 आयते (→भ्राजत) –d) द1 3 4 °प्रणाशनी (दे4 °नी), दे10 °प्रणाशन, द11 °प्रनाशिनी (→°प्रणाशिनी)

१५ –a) दे1 दष्टी दे10 ते1 दष्टा (→दष्टा) –b) ब1 2 दे1 3 4 10 तु (→च) –c) ब2 दे5 8 10 अमरा, ते1*** (→अमरा), दे1 4 क्रीडा (दे1 °द) मानाश, द8 क्रीडमानश (→क्रीडमानाश) –d) दे1 वजक्रीडनक सदा, दे2 5 7 9 11 मुवे जल (दे5 °ली) क्रीडा पुन पुन

१६ –a) दे7 °नयना (→°जघना), ब1 यस्या, दे2 5 9 11 ते1 यस्या (→यस्या) –b) ब1 ग धर्वाणा वरस्त्रिय, दे10 गधर्वा सामनाद च –c) दे1 3 4 भुजगी–(→भुजङ्गा–), दे1 3 –वनिता यस्या (दे °श्च), द4 –वनितायाश्च, दे5 6 –वनतियगश्च, दे10 –धनता कि च (→–वनताङ्गचश्च), ब1 2 भुजङ्गाश्च (ब2 °ङ्गश्च) नताङ्गचश्च, दे7 भुजगास्तावताग्याश्च –d) ब2 किन्नयश्च, दे3 किं च यस्य, दे4 कि वयस्य, दे10 नत्तयश्च (→किन्नयश्च), दे1 किकरजु सृगायना –e) दे1 °सम्भोगे, दे °सभागे, दे4 °स्तभोजे, दे5 8 9 °सयोगै (→°सम्भोग) –f) दे1 7 क्रीडत्यश्च (दे7 °त्र), दे3 4 क्रीडस्तत्र (→क्रीडन्त्यत्र), दे10 समारभ (→समागता)

१७ –a) दे10 एवमादि–(→एव नारी–) –b) दे11 तत्रा (→तत्र) –c) दे11 सलिलेन (→सलिले), दे10 रूपा (→तत्र) –d) द4 शुभेषुभ, ते1 शुखेषु च (→शुभेषु च), दे10 सभाजनसमे तुला

१८ दे10 ○ –a) ब1 तत्रापारे, ब2 तत्र पारे, दे5 8 तत्रापारे (→तत्रापरे), दे4 वृक्ष खण्डा, दे7 वृक्षगडा, ते1 वृक्षखण्ड–(→वृक्षषण्डा) –b) ब1 2 नित्य (→नित्य–) –c) दे8 तव (→ते च) –d) मुवे तथा (→मत्त–), ब1 2 दे1 °समाकुला (→°समायुता)

१९ दे10 ab ○, ब2 १९–२५ b ○ –b) मुवे काम° (→कान्त°), दे3 4 7 स (दे, स्व) मेखला (→सुमेखला) –c) व1 रमयति नरास्तत्र, दे1 रमयति तत्रस्तत्र, दे3 रमयते ततस्तत्र, द4 रमयते तस्नात्र यथा, दे10 रजयति गणास्तत्र –d) दे4 °कम (→°काम)

२० ब1 २०–२२b ○, ब2 ○ (द्र १९ पा वि) –a) दे1 ता नदी क्षोभयात्यस्ता, ते1 ता नदी मोक्षयन्त्यत्र –b) दे4 प्रिया (→प्रियै) –d) दे1 मन्द°, दे5 8 9 मद° (→मधु°), दे7 मधुमत्तश्च विह्वला

२१ ब1 ○ (द्र २०पा वि), ब2 ○ (द्र १९पा वि) –a) दे1 जलभूर्यानिनादन, ते1 जलतूयनिमादेन –b) दे1 3 4 10 भूषणाना रवेण (दे1 °न) तु (दे17 च) –c) दे9**, दे10 नित्य (→दिव्या), दे1 विभाते निम्नागायाति, दे3 4 विभाते निम्नगा भाति

२२ ब1 ab○ (द्र २०पा वि), ब2 ○ (द्र १९पा वि), दे4 d ○ –a) दे10 °नदीना (→°नदी सा) –b) दे10 प्रवराति नाप्रिया *विमध्ये –c) दे8 मध्यो (→मध्ये), दे10 *******नस्य नित्य –d) दे1 3 ममैव, दे10 तमेव (→मातेव), दे11 पुत्रा (→पुत्र), दे1 3 5 8 9 ते1 °पालयन्ति (→°पालयन्तो)

२३ ब2 ○ (द्र १९ पा वि), दे4 ○ –a) दे7 °हराश्च (→°हरा च) –b) दे1 दिव्ये ततो येन, दे11 दिव्येन तो येन (→दिव्येन तोयेन) –c) दे3 रम्या (→मत्ता), दे7 यस्यास्तु हसा *****, दे10 यस्यास्तु दन्ता पुलिने च मत्ता –d) ब1 कुन्देन्दुवर्णा, ते1 पूर्णेन्दुवर्णा (→कुन्देन्दुवर्णा), दे8 कुदे*********

रथाङ्गसाह्वै प्रवरैश्च पद्मै
प्रतप्तजाम्बूनदकर्णिकाभि ।
या दृश्यते चैव मनोज्ञरूपा
सुवर्णसोपानयुता सुकान्ता ॥२४
यस्यास्तु तोय विमल सुगन्धि
स्वादु प्रसन्नममृतोपमदिव्यरूपम ।
वृक्षास्तु यस्या वनषण्डजाता
सदा शुभै पुष्पफलैरुपेता ॥२५
नार्य सुरूपा मदविह्वलाश्च
क्रीडन्ति तोयेषु मनोज्ञरूपा ।
यस्या जल क्रीडनताडनाद्यै-
र्विवर्णता नैव तु याति जातु ॥२६
या देवतानामपि पूजनीया
तपोनिधीना च तथा मुनीनाम् ।
या दृश्यते तोयभरेण कान्ता
कृति कवीनामिव निर्मलार्था ॥२७
जल च दत्त बहुभिर्नरैश्च
तस्या स्वरूपप्रतिमा च निष्ठा ।
प्रासादपङ्क्तिर्ज्वलनप्रकाशा
तस्यास्तु तीरे बहुभक्तिरम्या ॥२८
वादित्रगीतस्वनतालयुक्ता
गायन्ति नार्य सहिता सदा हि ।
कन्याकुलाना मृदुभाषितानि
मनोहराणा च वनेषु तेषु ॥२९
कुर्वन्ति सहर्षमिव स्वनेन
मनोज्ञरूपा दिवि देवतानाम् ।
मृदङ्गनादाश्च सुतन्त्रियुक्तै-
र्गानध्वनिश्चैव सुवशयुक्त ॥३० वे १९६ ३२

---

२४ ब2 ○ (द्र १९पा वि), दे8 ab ○ -a) ब1 रथागमार्गै दे1 3 4 रथागमाह्वै, दे5 रथाग सा है, द10 यथागसाह ते1 रथाङ्गनाह्वै (→रथाङ्गमाह्वै) दे1 4 प्रचुरैश्च, दे7 प्रवनश्च (→प्रवरैश्च) -c) दे1 3 4 व सुमनोन्य° (दे1 °न्ये) (→चैव मनोज्ञ°), दे8*** ते चैव मनोजरूपा -d) दे7 स्ववण- दे11 सुव* (→सुवण-), दे4 °सोपान (→°सोपान-), दे7 स्वकान्ता (→सुकान्ता)

२५ ब० ab○ (द्र १९पा वि) -a) ब1 दे1 4 10 सुगध, दे7 स्वगधि (→सुगन्धि) -b) ब1 दे1 ° 10 मुवे स्वादु (ब1 चारु)प्रसन्न(दे1 त्व)त्व(दे3 4 म, दे10 अ)मतोपम(दे3 4 °दक) च -c) मुवे यस्या(→यस्या), ब1दे1 4 नवखण्ड-(→वनषण्ड-) ब2 -याता, दे1 -लाता, दे4 -जता (→-जाता), दे10 वक्षास्तु यस्यातनखाडजात -d) ते1 सुख (→शुभै), मुवे °फलैरुपेता (→°फलरुपेता)

२६ -a)ब1 2नायस्तु तत्र दे1 नार्यास्वरूपा (→नाय सुरूपा) -b) दे5 8 10 ता यषु, दे7 ता यस्य मुवे ता यत्र (→तोयेषु), ब1 क्रीडन्ति तोयेषु सुरूपशोभा -c) मुवे यस्या जन (→यस्या जल), दे5 8 9 11 ते1 °ताडनौद्यर (→°ताडनाद्यैर), दे10 पश्यन्ति ता क्रीडना*** -d) ब2 विवतते दे? 4 विवणन (दे4 °ना) (→विवणता), ब1 2 दे3 4 यातु (→जातु), दे2 5 7-9 11 मुवे विवणता याति न व कदाचित, दे10विवण(ता नैव)रूपातिभय न जातु

२६ श्लोकस्य b, c मध्ये दे7 अधिकम्—

*देवस्त्रियस्तत्र विवणरूपा ।

२७ -a)दे10 या(→या), दे10 पूजनीया(→पूजनीया) -b) दे1 °निवाना दे10 °निधि(मे)ता (→°निधीना), दे3 4 तु(→च), ब2 दे3 4 10 महा- (→तथा) -c) दे10 भक्ति° (→तोय°), ब1 2°न (ब2 त)रोपकान्ता, दे7 °मरैणकाता (→°भरेण कान्ता) -d) दे4 कृतिक वीनि मिव निमल्लार्था लद काशा(?), दे10 कृनि पवीतामिव निमलाय

२८ ब2 २८-२९b ○, दे4 abc ○ -b) मुवे तस्या (→तस्या), दे7 स्वरूपा, दे10 स्वरूप (→स्वरूप-), दे7 -मनिष्ठा (→च निष्ठा) दे3 तस्या स्वरूप च प्रति च निष्ठा -c) दे2 3 7 ते1 °पन्क्ति, दे10 °य क्व (→°पङवितर), ते1 ज्वलत (→ज्वलन-) -d) दे1 -मस्याश्च, दे3 4 तस्याश्च (→तस्यास्तु), दे2 क्षीरे (→तीरे), ब1 °युक्ता दे8 °रम्या, मुवे °रम्या (→°रम्या), दे10 तस्या प्रवीरे बहुशक्तिरम्या

२९ ब2 ab ○ (द्र २८पा वि) -a) ब1 °गीतास्वर- दे1 °गातस्वन-, दे9 °गीतस्त्वन- (→°गीतस्वन-), दे1 -तालमुक्ता, दे3 -तालुयुक्ता दे5 -तानयुक्ता, दे10 -तालयुक्त (→-तालयुक्ता) -b) दे7 नार्यास (→नाय), ब1 दे4 5 8 9 सहिता (→सहिता) -c) ब2*****, दे कन्या कुलान (→कन्याकुलाना), ब2 दे10 °भाषिताना (→°भाषितानि) -d) दे1 3 4 °हराणीव (दे1 च) (→°हराणा च), दे8 वने च नेष्ट, दे10 वने वनेषु (→वनेषु तेषु)

३० -b) दे1 3 4 मनोन्यरूपा, ते1 मनोज्ञरूपी (→मनोज्ञरूपा) -c) दे1 मदगा° (→मृदङ्ग°), मुवे °नादश्च (→°नादाश्च), ब1 सुतन्त्र**, ब2 विपञ्चमिश्चर, दे1 सुतन्त्रिभिशु,

वे १९६ ३३ प्रासादकुञ्जेषु विहार्यमाणा
न तृप्तिमेव बहुधा प्रयान्ति ।
गन्ध सुगन्धोऽगुरुचन्दनाना
वात शुभो वाति सुशीतमन्द ।।३१
क्वचित् सुगन्ध प्रचचार भूय
प्रासादरोध प्रविरूढमार्ग ।
क्वचिज्जना क्रीडनकावसक्ता
क्वचिच्च नारीनरगीतशब्दा ।।३२
तथाऽपरे क्रीडनका सुकान्ता
सुवर्णवेदीकृतसानुशोभा ।
विमानभूता प्रचरन्ति तोये
प्रमत्तनारीनरसकुलाश्च ।।३३
शक्यो विभागो न हि रम्यताया
ह्यसौ दिनैर्वा बहुभि प्रवक्तुम् ।
नैषा कथा कर्मसमाधियुक्ता
शक्या प्रवक्तु दिवसैरनल्पै ।।३४

।। इति श्रीवराहपुराणे भगवच्छास्त्रे चतुनवत्यधिकशततमोऽध्याय ।।१९४।।

---

दे3 सुतत्रिमिश्रे, दे4 सुतत्रीमिश्रा, दे7 स्वतन्त्रियुक्तैर् दे10 ताल मिश्रैर, मुवे सुतन्त्रियुक्तर् (→सुतत्रियुक्तर) -d) दे1 4 10 मुवे गीत° (→गान°), दे7 स्ववश° (→सुवश°) ब2 दे3 4 10 °युक्ता (→°युक्त), ब1******स्ववशयुक्त, ब2 गीतस्तथा चैव स्ववशयुक्ता

३१ -a) दे2 8 9 11 ते1 प्रसादकुञ्जेषु दे3 4 प्रासाद (दे4 °द) गुजेपु (→प्रासादकुञ्जेषु), दे1 5 विहायमाणा (दे1 °णे), दे10 विदायमाणा (→विहायमाणा) -b) ब1 2 दे10 बहुभि, मुवे बहु ता (→बहुधा), दे1 3 4 हि याति (→प्रयान्ति) -c) ब1 गन्द्धै (→गन्ध), ब1 सुगन्द्ध गुरु°, दे1 सुरम्यो गुरु°, दे2 5 8 9 11 ते1 सुगन्धोगरु°, दे10 सुग धोबहु°(→सुगन्धोऽगुरु°) -d) दे4 व्रात (→वात), दे7 स्वशीत–, दे8 सुशीत, दे11 सुशात– (→सुशीत–), दे1 वात शुभो वाति समाघ शैल्य

३२ ते1 c ○ -a) दे7 स्वगध (→सुगन्ध), ब1 2 दे3 4 8-11 ते1 प्रचचार धूप दे1 प्रसिसर्ति धूम, दे7 प्रचुरैकदूय (→प्रचचार भूय) -b) मुवे °रोध (→°रोव), दे1 प्रतिरूढ°, दे5 7 प्रविरूढा° (दे7 °ढ) (→प्रविरूढ°), ब1 2 प्रासादरूढोपि प्रविरूढ (ब2 च) माग (ब2 °र्गं) -c) ब2 °काश्मशक्ता, दे8 9 °कावशक्ता, दे10 °कावसक्ता (→°कावसक्ता), ब1 क्वचिज्जना ******* -d) दे1 3 4 °नरगीतयुक्ता, दे7 °नगरीतशब्दा (→°नरगीतशब्दा)

३३ -a) ब1****, दे7 तथापरै (→तथाऽपरे), ब1 2 दे2 5 8 9 11 मुवे ते1 सकान्ता, दे4 स्वकाता (→सुकान्ता) -b) दे1 3 4 सुवणदेहा– (दे1 °वा, दे3 °हा), दे5 सवर्णवेदी–, दे7 स्ववणदेवी–(→सुवणवेदी–), दे3 4–कृतवस्त्र°(→–कृतसानु°) -c) ब1 दे5 8 9 °भूता (→°भूता), दे1 3 प्रच(दे3 °व) रान्न–, दे4 प्रवरा च (→प्रचरन्नि), दे10 येन (→तोये) -d) ब1 2 दे3 4 10 °सङ्कुलास्ते (दे3 10 °स्तु, दे4 °सु) (→°सङ्कुलाश्च)

३४ ब2 cd ○ -a) दे1 3 4 ते1 शक्या (→शक्यो), दे7 स्वभाग्यो (→विभागो) दे1 10–दि (दे10 हि) तरम्यताया, दे3 4 हि नरस्यताया (दे4 तोयो) (→न हि रम्यताया), ब1 शक्यो विभागोस्य***, ब2 शक्यो विभागस्य नरस्य कस्य -b) ब1*मौ दिनैर ब2दे1 3 10 मासैर्दिनर (दे1 °नेक–), दे2 5 7-9 11 ते1 असौ दिनर (→ह्यसौ दिनैर), दे5 बहुधि (→बहुभि), ब2 दे3 प्रयक्त दे1 4 प्रयुक्ता दे2 प्रवक्त, दे5 प्रवक्ते, दे10 प्रयुक्तु (→प्रवक्त) -c) दे9 नषा(→नषा), दे1 कथ्य–, दे10 क्रमा (→कथा), ब1 दे10 °युक्त, दे4 °युक्ता (→°युक्ता) -d) ब1 प्राक्ता दे2 3 5 7 9 11 मुवे शक्त्या दे4 शक्ता, दे10 शक्य (→शक्या), दे1 प्रवक्त (→प्रवक्तु), ब1 °रनकै ते1 °रनन्तै (→°रनल्पै)

३४ श्लोकात पर ब2 अधिकम—
वय हि सर्वे प्रतिप्रक्त युक्त ।

**पुष्पिका—**

**पुराणनाम**—ब1 2 दे4 इत्यादि श्री (ब1 2*) व (दे4 वा) राहपुराणे भगवच्छास्त्रे ससारचक्रे, दे1 2 5 8 9 11 ते1 इत्यादि वाराहपुराणे ससारचक्रे, दे3 इति श्रीवाराहपुराणे भगवच्छास्त्रे समारचक्रे, दे7 10 इत्यादि वाराहपुराणे, मुवे इति श्रीवराहपुराणे ससारचक्रे **अध्यायनाम**—ब1 2 दे2 5 7 9 11 मुवे ते1 धमराज पुरवणन नाम, दे1 पुरुषवणन नाम, दे3 4 पुरुषवणन, दे10 धम-राजपुरवणन **अध्यायसख्या**—ब1 2 ○, दे1 5 7-9 11 चतुर्थोऽध्याय, मुवे षण्णवत्यधिकशततमोध्याय ।। १९६ ।।

# १९५

ऋषिपुत्र उवाच ।❀
दशयोजनविस्तार ततो द्विगुणमायतम् ।
प्राकारेण परिक्षिप्त प्रासादशतशोभितम् ॥१
समालिखन्निवाकाश प्रदीप्तमिव तेजसा ।
गोपुर तूत्तर तत्र प्रासादशतशोभितम् ।
नानायन्त्रै समाकीर्णं ज्वालामालासमायुतम् ॥२
देवतानामृषीणा च ये चान्ये शुभकारिण· ।
प्रवेशस्तत्र तेषा हि विहितो धर्मदर्शिनाम् ॥३
राजते गोपुर सर्वं शारदाभ्रचयप्रभम् ।
मानुषाणा सुकृतिना प्रवेशस्तत्र निर्मित ॥४
अग्निधर्मसमाकीर्णं सर्वदोषसमन्वितम् ।
आयस गोपुर तत्र दक्षिण भीमदर्शनम् ॥५
रौद्र प्रतिभयाकार सुतप्त दुर्निरीक्षणम् ।
प्रवेशो हि ततस्तेन विहितो रविसूनुना ॥६
पापिष्ठाना नृशसाना क्रव्यादाना दुरात्मनाम् ।
पापाना चैव सर्वेषा ये चान्ये घातमारका ॥७
औदुम्बरमवीचीकमुच्चावचमनोकृतम् ।
गोपुर पश्चिम तत्र दुर्निरीक्ष समन्तत ॥८ वे १९७९

१९५

❀ ब1 दे1 3 4 ऋषिरुवाच, दे5 ऋषिपुत्र*वच, दे10 पुत्र उ०

१ –b) दे °मायता, दे4 °मायता (→°मायत) –c) दे4 प्राकारेणा (→प्राकारेण) –d) दे11 (ततो) प्रामाद° (→प्रासाद°), दे10 °सोभित, ते1 °शोवित (→°शोभित)

२ ब3 a–d ( ) –a) ब1 2 समाश्लिष्यति चाकाश, दे10 माभिप्य न दिवाकाश, मुवे ते1 समालिखदित्रा (ते1 °रय त्रिधा) काश –b) दे11 तेजसो (→तेजसा) –c) दे4 गोपुर– (→गोपुर), ब1 2 कृत्रिम, दे1 तत्तम, दे2-5 7 9 11 मुवे तूत्तम, ते1 तूत्तरे (→तूत्तर), ते1 यस्य (→तत्र) –d) दे5 प्राणद– (→प्रासाद–), दे1 –शोभि*, दे. –शोभिते (→–शोभित) –e) दे7 °यत्र– (→°यन्त्रै), दे1 4 समाकीर्णे (दे1 °र्णा), दे11 म*कीण (→समाकीण), ब1-3 सोधोपचारसाधी (ब1 °री) यो –f) ब1-3 दे1 3 4 10 °समाकुल (→°समायुत)

३ –a) दे1 दिवताना (→देवताना) –b) दे4 7 °कारिणा (→°कारिण) –d) ब2 3 दे10 °दर्शिना (→°दर्शिनाः), दे1 3 4 भीषण (दे1 विशीण) भीमदशन

३ श्लोकस्य b चरणात पर ब1-3 अधिकम—
नानायन्त्रै समाकीण ज्वालामालासमाकुल। ( = २ ef)
[–1 ब1 अस्त्रै (→–यन्त्रै)]

३ श्लोकस्य a चरणात्पर दे8 अधिकम—ज्वालात्रै समाकीर्णं।

४ दे1 3 4 ४–५ ○, ब2 cd ○ –a) ब2 3 दे5 8 9 11 ते1 राजत, दे10 राजा त (→राजते), दे11 सर्वे (→सर्व) –b) ब2 3 शारदाभ्रसमप्रभम दे10 शारन्ना भवति प्रभम –c) ब3 सुकृतीना तथा चव, दे7 मनुष्याणा स्वकृतिना, ते1 मानुषाणा सुकृतीना

५ दे1 3 4 ○ (द्र ४पा वि), ब2 ab ○ –a) ब1 °रूप–, ब3 दे10 °धूम–, दे5 8 9 °धम (→°धम–) –b) ब1 3 °लोक° (→°दोष°) –c) दे7 आयास, ते1 अयास (→आयस), ब3 गोत्र (→तत्र)

६ –a) दे1 रौद्र– दे5 रौद्र (→रौद्र), दे1 °कारा (→°कार) –b) दे1 कसुवद्दुर्निरोक्ष्य त, दे 4 सुतप्त दुर्निरीक्ष्य –c) दे1 प्रावेशो हि तत्र तेन, दे3 4 प्रवेशो हितवस्तेन, दे7 प्रवशो विहितस्तेन –d) दे7 कृत च (→विहितो), ब3 °सु*दा (→°सूनुना)

७ –a) ब3 पापिष्ठाना नृसघाना, दे1 पापिष्ठीना नश (यथा) साना –b) दे8 क्रव्यादीना दुरात्मना –d) ब2 3 ये चा ये परिकीर्तिता, दे3 4 10 मुवे ये चान्ये घातकारका, ते1 ये चा ये घात***

८ ब2 3 ab ○ –a) दे1 3 4 अदुत्व (दे1 °द्ध) र, दे5 7 11 अ (दे7 उ) दुवर (→औदुम्बर), ब3 अर्या चापि (→अवीचीक) ते1****** वाचा –b) दे उच्चते च, दे7 तच्चो चन (→उच्चावच–), दे1 –मनोग्त दे3 –मनोदवृत, दे4 –मनोधति, दे10 –मनस्थित (→–मनोकृत), ब1 द्वारनुच्चवचावृत –c) ब2 पश्चिमस, दे1 3 4 पश्चिमा (→पश्चिम), ब1-3 दे1 10 तस्य दे3 पश्य, मुवे तचत्र (→तत्र) –d) दे1,4 10 दुर्निरीक्ष्य (दे4 °क्ष) (→दुर्निरीक्ष)

११७९ महता वह्निजालेन समालिप्त भयानकम् ।
दुष्कृतीना प्रवेशार्थं यमेन विहित स्वयम् ।।९
तस्मिन् पुरवरे रम्ये रम्या परमशोभना ।
सर्वरत्नमयी दिव्या वैवस्वतनियोजिता ।।१०
सभा परमसपन्ना धार्मिकै सत्यवादिभि ।
जितक्रोधैरलुब्धैश्च वीतरागैस्तपस्विभि ।।११
सा सभा धर्मयुक्ताना सा सभा पापकारिणाम् ।
सा सभा सर्वलोकस्य शुभस्यैवाशुभस्य च ।
कर्मणा शुचितस्याथ सा सभा धर्मसहिता ।।१२
अनिर्वर्त्य यथाकर्म शास्त्रदृष्टेन कर्मणा ।
निर्विशङ्का निराक्षेपा धर्मज्ञा धर्मपाठका ।
चिन्तयन्ति च कार्याणि सर्वलोकहिताय ते ।।१३
यथादष्ट यथाशास्त्र यथाकालनिवेदका ।
तत सर्वे च तत्सर्वं चिन्तयन्ति सुयन्त्रिता ।।१४
मनु प्रजापतिश्चैव पाराशर्यो महामुनि ।
अत्रिरौद्दालकिश्चैव आपस्तम्बश्च वीर्यवान् ।।१५
बृहस्पतिश्च शुक्रश्च गौतमश्च महातपा ।
शङ्खश्च लिखितश्चैव ह्यङ्गिरा भगुरेव च ।।१६
पुलस्त्य पुलहश्चैव ये चान्ये धर्मपाठका ।
यमेन सहिता सर्वे चिन्तयन्ति प्रतिक्रियाम् ।
सर्वे च कामप्रचुरा ये दिव्या ये च मानुषा ।।१७
कुण्डलाभ्या पिनद्धाभ्यामङ्गदाभ्या महातपा ।
भ्राजते मुकुटस्तस्य ब्रह्मदत्तो महाद्युति ।।१८
तेजसा वर्चसा चैव दुर्निरीक्ष्यो महाबल ।
एकस्थमिव सर्वेषा तेजस्तेजस्विना तदा ।।१९

---

९ –a) दे5 महता (→महता), ब3 वह्निज्वालेन, दे4 वाह्निजालेन (→वह्निजालेन) –b) दे1 ममलिप्रे, दे3 4 म(दे1 स)म लिप्त, दे10 समाक्षिप्त (→समालिप्त) दे7 भयकर (→भयानक) –c) ब1 दे5 प्रवेशानु (दे5 °थ) (→प्रवेशाथ)

१० –a) दे10 यस्मिन (→तस्मिन) –b) दे5 रम्या दे7 रम्य(→रम्या) –c)ब2 °रत्नमय, दे10 °स्नानमयी(→°रत्नमयी)

११ –a) ब2 प्रभा प* म–, दे5 सभा पर* (→सभा परम–) –c) ब3 दे1 जितक्रोधै (ब3 °क्रुद्धै) रस्तुस्तै (ब लुब्धै) श्च

१२ दे7 c–f ○, ब2 ef ○, दे4 e ○ –a) दे3 शासना दे4 सा सुभा (→सा सभा), दे7 °सयुक्ता (→°युक्ताना) –b) दे1 °कारिणी, दे10 11 °कारिण (→°कारिणा), ब1 सा समाधमकारिणा, दे7 न स्वाप्याष्वापकारिणा –d) दे1 श्रुत° (→शुभ°) –e) ब1 दे2 9 11 मुवे ते1 कमणामु (ब1 मुवे सू) चितस्याथ, दे1 कमणाशुविनास्याथ, दे4 कमणा*शुभस्य च

१३ –a) ब1 3 दे9 अनिवत्य, दे3 8 अनिवत्य (→अनिवत्य), दे4****** कम –c) ब1 3 निरपेक्षा, दे1 3 4 7 10 निरापेश्वा (→निराक्षेपा) –d) ब1 3 दे1 3 10 धमविद्, दे7 सर्वे ते (→धमज्ञा), दे4 धमविद धर्मापावका –e) दे1 3 4 7 तु (→च), ब1-3 कर्माणि, दे4 (कार्या तु) कार्याणी (→कार्याणि) –f) दे10 वै (→ते)

१४ –b) द10 °निवेदक (→°निवेदका) –c) ब2 3 दे1 3 4 तु (→च), दे5 9 सव–, ते1 सर्वे (→सव) –d) ब2 दे7 स्वयात्रता, दे4 सुयातिता, दे5 8 सुमन्त्रिता (→सुयन्त्रिता)

१५ –a) ब1 दे1 4 7 मनु– (→मनु) –b) ब1 पाराशर्ये दे1 पारासर्वे (→पाराशर्यो) –c) ब1 3 दे3 5 8 9 ते1 अत्रिरौद्दालिक(ब3 दे5 8 9 °लिक, दे3 4 ते1 °लक) श्चैव –d) ब1 दे3 आपम्तम्बश्च (दे3°स्य) दे7 ते1 आपस्तमश्च, दे10 आपस्तगोति (→आपरतम्बश्च)

१६ दे11 d ○ –a) दे3 शुक्रस्य (→शुक्रश्च) –b) दे7 °तप (→°तपा), ते1 शाडिल्यश्च महातपा –d) ब3 दे2 4 5 7-10 ते1 अगिरा, दे3 अगिरो (→ह्यङ्गिरा) दे1 भगुश्चवागिरास्तथा

१७ दे11 abc ○, ब2 3 ef ○ –a) दे1 पुलस्त्य, दे7 पुलस्त्या (→पुलस्त्य) –b) दे1 ये चान्ये धर्मचितका, दे4 ये चान्यो धमपावका –c) दे5 8 9 सहिता, दे7 सहित (→सहिता) –d) दे1** (→प्रति–) दे10 सर्वे ऋषिपुरोगमा, दे11**** प्रतिक्रिया –e) दे1 3 4 °प्रवरा (→°प्रचुरा) –f) ब1 दिव्या ये चव मानुषा

१८ –a) द1 4 5 9 10 कुडलाभ्या पिनद्धा (दे1 5 तद्धा, द4 10 न द्धा, दे8 तु द्धा)भ्या –b) ब1-3 मन्दाभ्या स, ते1 मङ्गलाभ्या (→अगदाभ्या) –c) दे5 9 9 भ्राजत (→भ्राजते), दे1 3 4 10 मुकुट (→मुकुटस), ब1-3 तत्र (→तस्य) –d) ब1 दे1 3 4 10 °दत्त (→°दत्तो), ब1 °मते, दे7 °मुनि (→°द्युति), ब2 धमराजो (ब2 °जा) वसुन्धरे

१९ –b) ब1 3 दे3 4 7-10 दुर्निरीक्षो (दे7 °क्ष), ब3 मुनिर्वीक्षो (→दुर्निरीक्ष्यो) –d) दे10 ऋषि–, दे11**(→तेजस), ब1 2 तथा, ब3** (→तदा), दे7 तेजस्तेजोवता सदा

तस्य पार्श्वे महादिव्या ऋषयो ब्रह्मवादिन ।
दीप्यमाना स्ववपुषा वेदवेदाङ्गपारगा ॥२०
वेदार्थाना विचारज्ञा सत्य यमपुरस्कृता ।
छन्द शिक्षाविकल्पज्ञा शब्दशास्त्रविकल्पका ॥२१
निरुक्तमतिवादाश्च सामगान्धर्वशोभिता ।
धातुवादाश्च विविधा निरुक्ताश्चैव नैगमा ॥२२
तत्र चैव मया दृष्टा ऋषय पितरस्तथा ।
भवने धर्मराजस्य प्रगायन्त कथा शुभा ॥२३
तस्य पार्श्वे मया दृष्ट कृष्णवर्णो महाहनु ।
उत्तम प्रकृताकार ऊर्द्ध्वरोमा निराकृति ॥२४
वामबाहुश्च दण्डेन प्रवरेण समन्वित ।
विकृतास्यो महादष्ट्रो नित्यक्रुद्धो भयानक ॥२५
शिष्टचर्थे धर्मराजेन सदिष्ट स पुन पुन ।
शृणोति चैव कालोऽसौ नित्ययुक्त सनातन ।
तथान्ये चापरे तत्र शासनेषु समाहिता ॥२६
दृष्टा तत्र मया तात सर्वतेजोमयी शुभा ।
यमेन पूज्यमाना सा दिव्यगन्धानुलेपन ॥२७
सहार सर्वलोकाना गतीना च महागति ।
अत पर न कर्त्तव्य साधन कथित बुधै ॥२८
विभ्यन्ति ह्यसुरास्तत्र ऋषयश्च तपोधना ।    वे १९७ ३१

२० ब २०-२३ ○ -a) ब1 महादे या, ब2 महात्मानो (→महादिव्या) -b) ब1 2 दे1 3 4 10 धम(ब1 2 ब्रह्म, दे10 दिव्य) वच्चस (दे4 °सा) (→ब्रह्मवादिन) -c) दे1 भ्राजमाना (→दीप्यमाना), ब1 दिव्यमाना वपुश्चव, ब2 दे10 दीप्यमानाश्च पुण्याश्च -d) दे1वेद (→वेद-), ब2°पारग (→°पारगा)

२१ ब, ○ (द्र २० पा वि), -a) ब1 वेदाना च (→वेदार्थाना) -b) दे7 °पुरस्कृत, मुवे ते1 °पुरष्कृता (→°पुरस्कृता) -c) ब1 2 °विज्ञा, दे1 °शिक्ता, दे3 4 °शिष्या (→°शिक्षा-), दे7-विचारज्ञा (→-विकल्पज्ञा) -d) ब2 दे2 5 -9 11 मुवे सव-(→शब्द-), ब2 -विशारदा, दे3 4 -विकल्पा (दे3 °ल्प) गा (→-विकल्पका)

२२ ब ○ (द्र २० पा वि) -a) दे1 3 4 °मधिवादाश्च, दे5 7 9 °मतिवादा (दे7 °द) श्च (→°मतिवादाश्च), दे10 निरुपाधि विवादाश्च -b) दे1 3 4 मासा-(→साम-), दे3 4 7 -गन्धव- (→-गा धव-), दे7 -शोभिन (→-शोभिता), ब1 2 सामगा धमशोभिता (ब1 °भना), दे10 सामग सव शोभिता -c) दे5 8 9 °वादाश्च, दे7 °वादश्व (→°वादाश्च), ब1 धारवादाश्च विधिना, ब2 वेदवेदाङ्गविधिना -d) ब2 नगमा (→नैगमा), दे7 नानावणविचित्रिता

२३ ब3 ○ (द्र २० पा वि) -a) दे2 तत्र चैवा-, दे7 तत्रैव च (→तत्र चैव), ब1 2 दष्ट्वा, दे3 दष्टा, दे10 वक्षा (→दष्टा) -c) दे3 4 भुवने (→भवने) -d) ब1 2 दे1 3 4 प्रध्याय त, दे10 प्रगायति (→प्रगायन्त), ब1 2 दे1 4 10 कथा शुभा (→कथा शुभा)

२४ -a) दे4 तस्या (→तस्य), दे2 10 दष्ट-(→दष्ट) -c) ब2 दे7 उत्तम- (→उत्तम), ब1 प्रकृताकारा, दे10 प्रकृतीकार (→प्रकृताकार) -d) दे4 उर्द्ध, दे7 ऊध- (→उद्ध्व-), ब2 °लोमा नि° (→°रोमा नि°)

२५ ब2 ab ○ -a) दे4 वामा(→वाम-), ब1 -बाहु च, ब3 दे10 -बाहुञ्च, दे3 -बाह तु, दे4 -बाहु तु (→-बाहुश्च), दे1 वामाग्रवाहो तु देन -b) ब1 प्रचुर * समुद्यत, ब3 दे1 3 4 प्रवर वै समुद्यत, द10 प्रवर चैवमुद्यत -c) ब2 3 निकृतास्यो (→विकृतास्यो), द1 ते1 महादष्ट्रा- (ते1 °ष्ट्रो), दे10 मया दृष्य (→महादष्ट्रो) -d) द1 10 नित्य (→नित्य-)

२६ -a) ब1 2 सृष्टर्थे, ब स्मृत्यर्थे, दे1 4 10 मुवे शिष्यार्थे, दे7 ते1 शिष्टार्थे दे3 शिष्यार्थे (→शिष्ट्यर्थे) -b) दे3 4 सहृष्ट (→सदिष्ट), दे1 शरभवषभैश्चापि -c) दे1 10 सैव(→चैव), दे7 कालेसौ दे10 काले तु (→कालोऽसौ) -d) ब1-3 नित्य (→नित्य-) -d) दे4 तथान्या (→तथान्ये), ब1 अथान्या च परान्तत्र, ब2 3 अथान्या (ब2 °न्या)श्च चरास्तत्र, द1 3 10 अथान्या चापरा तत्र -f) दे3 °हित, दे10 °हिता(→°हिता)

२७ -a) ब1-3 दे11 दृष्ट्वा, दे7 10 मुवे दृष्टास (→दृष्टा), ब1 तत्र, ब2 3 चापि, दे7 तषु (→तात) -b) ते1 सर्वे (→सर्व-), दे1 7 °तजोमया (दे7 °यात) (→°तेजामयी), ब2 सर्वे तेजोमय शृणु -c) दे7 वै(→सा), ब2 समेन पूज्य मनसा -d) दे4 दिश्या-, दे5 9 दिव्य (→दिव्य-)

२८ -a) दे10 सहार (→सहार), दे5 सर्वे (→सव-) -b) दे1 गताना, दे4*** (→गतीना) -d) ब1 3 साध्येन, दे1 3 4 शासन, दे10 शापेन (→साधन), ब1-3 दे2 7-11 ते1 कथिता, दे5 कथिता (→कथित), ब3**, दे1 शुभ, ते1 बुधा (→बुधै)

२९ दे1 3 4 c-f ○ -a) ब1 दे10 मुवे विभ्यति, ब2 विभान्ति, ब3 विभ्रान्ति, दे1 विभ्यति, दे3 4 विभ्यते, दे7

ततोऽप्यल्पतरोपायो यदि कश्चिन्महातप ।
कथ्यता मे महाभाग येन पाप प्रणश्यति ॥४३
दुष्कर पूर्वमुक्त हि योगधर्मस्य साधनम् ।
पापापहरण लोके यदन्यत्सुखसाधनम् ॥४४
अल्पायासकर चैव सुखोपाय च सर्वश ।
येन पापकृतान् दोषान् व्यपोहति सुदारुणान् ॥४५
आत्मायत्ताश्च ये नित्य न च विस्तारविस्तरा ।
गुणैश्च विविधैर्युक्ता इह लोके परत्र च ॥४६
कर्मणामशुभाना च विविधोत्पत्तिजन्मनाम् ।
य समथ स्फोटयितु तन्मे ब्रूहि महातप ॥४७
यम उवाच ।❀
यथा स भगवानाह धर्ममेत प्रजापति ।
तदह भावयिष्यामि नमस्कृत्य स्वयभुवे ॥४८
लोकाना श्रेयसोऽर्थं तु पापाना तु विनाशनम् ।
क्रियाकारनियोग च प्रोच्यमान निबोध मे ॥४९
कैवल्यमिति सपन्ने श्रद्दधानो भवेन्नर ।
अनन्यमानस कुर्याद् यथा धर्मानुशासनम् ॥५०
प्राप्नुयादीप्सितान् कामान् पापैर्मुक्तो यथासुखम् ।
य कुर्याद् धर्मसयुक्त विशुद्धेनान्तरात्मना ॥५१
यस्तु कारयते रूप शिशुमार प्रजापतिम् ।
दृष्ट्वा नमस्येत् प्रयत स पापेभ्य प्रमुच्यते ॥५२
यदा तस्य शरीरस्थ सोम पश्येत् समाहित ।
महापातकनाशस्तु तदा तस्य विधीयते ॥५३
ललाटे तु स्थित दृष्ट्वा मुच्यते सर्वपातकै । वे २१० ५४

वदतागिर, दे2 10 सत्य ता (दे10 या) वदतो गिरा, दे3 सत्य या वदतो गिरा, दे4 ते1 स त्वया व (दे4 वि) दत्तोगिरम (दे4 °रा)

४३ दे1 c○ –a) दे2 ततोप्यनुरतो पापो, दे5 9 11 मुवे ततोऽप्य (दे6 7 °न्य) तरश्चेत्स्याद, दे10 ते1 ततोप्यल्पतर पापो –b) दे5 9 11 मुवे उपायो योगवित्तम –c) दे6 कश्यता ते, दे8 कथ्येता मे, ते1 कथान्ता मे (→कथ्यता मे) –d) दे2 नरा विगत-कल्मषा

४४ –a) दे3 4 ते1 दु करा (→दुष्कर), दे3 4 10 ते1 पूवमुक्ता, दे6 पूवमुक्तो(→पूवमुक्त) –c) दे3 पापापहारण, दे4 6 पापोपहरण (दे4 °णा) (→पापापहरण)

४५ –a) दे1 अल्पायास रावत्रे, दे5 9 11 मुवे अल्पोपाय (दे8 11 °प) कर चैव –b) दे1 9 11 सुखो पाप, दे4 सुखोपायश्, दे6 सुखोपाये (→सुखोपाय), दे2 4 10 ते1 च सवत , द3 स सवत , दे6 7 च सवदा (→च सवश ) –c) ते1 पाप (→पाप–), दे6 °कृता दोषा, दे10 °कृत दोषान् (→°कृतान्दोषान्) –d) मुवे अपो हृति (→व्यपोहनि), दे3 4 सुदारुणा, दे4 सुदारुण (→सुदारुणान्)

४६ –a) दे3 आत्मपत्ताश्च, दे4 अत्मयन्नाश्च, दे5 8 आत्म यताश्च, दे6 आत्मार्यताश्च, दे7 आत्मयतश्च, दे9 आत्मामत्ताश्च (→आत्मायत्ताश्च), दे2 ये केचिन्, ते1 मे नित्य (→ये नित्य), दे10 आत्मयताश्च यो नित्य –b) दे5-9 11 मुवे °विस्तर (→°विस्तरा ), दे1 न च विस्तारिविस्तरा , दे10 न च विस्तरसदगुणै –c) दे1 गुणौचै (→गुणैश्च)

४७ –a) दे1 कर्मणामश्रुताना च, दे2 कमणा यत्तभावाना –c) दे2 फुटयितु, दे3 4 स्फेटयितु, दे7 स्फुटयितु (→स्फोटयितु ) –d) दे3 4 10 11 मुवे महातपा , दे7 तपोधन(→महातप )

❀ द6 यम उवाच, दे10 यम उ०

४८ दे4 bcd○ –a) दे10 तथा (→यथा) –b) दे॰ 10 ते1 धममेतत, दे6 धममत (→धममेत) –c) द1 तमह, दे7 तदाह (→तदह) –d) द3 स्वयभुवौ, द10 मुवे स्वयम्भुवम् (→स्वयभुवे)

४९ –a) दे1 श्रेयसाथ च, दे2 श्रेयसार्थे तु, दे3 10 ते1 श्रेयसार्थं तु (→श्रेयसोऽथ तु), दे4***श्रेये साथ तु –b) दे10 पापाना भुवि नाशन –c) दे1 नियोग तु, दे2 वियोगे च, दे10 वि-योग च (→नियोग च), दे3 4 कृपाकारयि (दे4 °वि) योग च –d) दे4 प्रोच्यामनि नीबोध मे

५० –a) मुवे कैवल्यमभि–(→कवल्यमिति), दे2 सम्पत्ते, दे4 सम्पन्ना (→सम्पन्ने) –c) द7 °मानसा (→°मानस ) –d) दे2 धमस्य (→धर्मानु–)

५१ दे1 bcd○, दे2 cd○ –a) दे3 काम (→कामान), दे4 प्राप्नुयादीप्सित काम, दे6 प्राप्नुया दीप्सिता कामा –b) दे4 पापो, दे8 ते1 न्यायैर् (→पापैर), दे6 7 न्यायकार्यार्थि-स मुख –d) दे6 विविधा*तरात्मना

५२ –a) दे6 7 शिशुमार– (→शिशुमार) –b) दे1 3 °पति, दे4 10 °पति (→°पति) –c) दे6 प्रियत (→प्रयत ) –d) ते1 पापिभ्य (→पापेभ्य )

५३ –a) दे1 यथा(→यदा) –c) दे7 महान्वनय नाशस्तु –d) द10 तदापत्य (→तदा तस्य)

५४ दे3 4 cd○ –a) दे2 5 9 11 मुवे तुस्थित (→तु स्थित), दे5 9 दृष्टा (→दृष्ट्वा) –b) दे5 8-11 मुवे ते1 च स (→सर्व–), दे3 4 मुच्यते***** –c) दे2 कठे च, दे6 कठस्य,

२१०५४ कण्ठस्थ पातकं सर्वं हृदिस्थ यत्कृताकृतम् ।।५४
मनसा कर्मणा वाचा यत्किंचित्कलुष कृतम् ।
उदरस्थ तु त दृष्ट्वा मुच्यते नात्र सशय ।
वाड्मनोभि कृताना तु पापाना विप्रमोक्षणम् ।।५५
यदा लाङ्गूलकण्ठे तु स्थित पश्येद् दिवाकरम् ।
तदा स दुष्कृतान् सर्वान् निर्नाशयति मानव ।।५६
यदा सोम गुरु सूर्यं सम्यक्कुर्यात्प्रदक्षिणम् ।
ध्यायत ह्यक्षर यस्तु स पापेभ्य प्रमुच्यते ।।५७
भृगुर्बुध शनैश्चरो लोहिताङ्गश्च वीर्यवान् ।
सौम्यरूपो यदा चन्द्र कुरुते च प्रदक्षिणाम् ।।५८
हृदि कृत्वा तु तत्पाप यो ध्यायेताक्षर शुचि ।
तदा निमलता याति चन्द्रमा शारदो यथा ।
प्राणायामशत कृत्वा सर्वपापै प्रमुच्यते ।।५९
जघनस्थ शुचिर्दृष्ट्वा नरश्चन्द्रमस मुने ।
नमस्येत् प्रयतो भूत्वा सर्वपाप प्रमुच्यते ।
आर्द्रस्थमार्द्रकर्मा तु ध्यात्वा चाष्टशताक्षरम् ।।६०
नमस्येच्च शुचिर्भूत्वा तदा पापात् प्रमुच्यते ।
यदा चन्द्रश्च सूर्यश्च द्वावन्योऽन्य प्रपश्यत ।
सम्पूर्णौ विमलौ सम्यग्भ्राजमानौ स्वतेजसा ।।६१
कृत्वा हृदि तथा पाप यो ध्यायेत् परमव्ययम् ।
[पूर्णमष्टशत विप्र स पापेभ्य प्रमुच्यते ।।६२
स्वय प्रज्वलिते वह्नौ ध्यात्वा चाक्षरमव्ययम् ।
घृत तु जुहुयाद् यस्तु स पापेभ्य प्रमुच्यते ।।६३]
वामन ब्राह्मण दृष्ट्वा वाराह च जलोत्थितम् ।
धरणी चोद्धृता येन सिंह चापि महामुने ।।६४

---

ते1 कठस्था (→कण्ठस्थ) –d) दे1 यकृतात्मन , दे5 8 9 11 य कृताकृतै , दे० 7 तु कृताकृत , मुवे च कृताकृतै (→यत्कृताकृतम)

५५ द3 4 a–d ○ –b) दे2 कलिल (→कलुष) –c) दे2 च (→तु) –e) दे1 वाक्कमभि कृताना तु, दे6 7 वाङमनोभि कृतान्मुच्येद् –f) दे1 °मोक्षणात्, दे4 °मोक्षणा, दे10 °मोक्षसे (→ (→°मोक्षणम्), दे6 7 भान (दे7 °व) कृत्वा प्रदक्षिण

५६ –a) ते1 यथा (→यदा), दे5 मुवे लागल° (→लाङ गूल°) –b) दे6 स न (→स्थित) –c) दे3 दु कृताशशर, दे4 दु कृता सर्वा (→दुष्कृतान् सर्वान्) –d) दे3 वाग्भिशयति, दे4* ग्भिशयति, दे6 7 नाशयिष्यति, मुवे विनाशयति (→निर्नाशयति), दे6 मानवान् (→मानव ), दे1 निनाशयितमाघम

५७ –a) दे1 सौमा, दे6 7 सौम्य (→सोम), दे4 गुरु (→गुरु), दे2-5 8 9 11 मुवे ते1 सर्वं, दे7 शुक्र (→सूय) –b) दे1* कुर्या*, दे5 9 11 मुवे य कुर्यात्तु (→सम्यक्कुर्यात) –c) दे5 8 9 11 ह्यक्षय, दे10 स्वक्षय (→ह्यक्षर), दे3 4 ध्यायेत (दे4 °त्त) ह्यक्षर यस्तु, दे6 7 लभते चाक्षय पुण्य –d) दे4 5 स पापेभ्या , दे6 7 पापेभ्यश्च (→स पापेभ्य )

५८ –a) दे1 शनैश्चरौ, दे3-5 8 मुवे शनैश्चारो, दे10 शनिश्चैव (→शनश्चरो) –d) दे1 3 4 ते1 कुरुतेथ (→कुरुते च), दे1 3 6 7 10 ते1 प्रदक्षिणम् (→प्रदक्षिणाम्)

५९ –a) दे1 5 यत्पाप (→तत्पाप) –b) दे3-9 11 मुवे ते1 यो ध्यायेदक्षर (दे6 °रा) शुचि (दे6 7 °भ), दे10 उपायेदक्षर शुचि –c) दे6 7 ते1 यान्ति (→याति) –e) दे8 प्राणायाम (→प्राणायाम–)

६० दे2 ○, दे1 6 ef ○ –a) दे1 जघन्यस्थ, दे3 यघनस्थ, दे4 यद्यनस्थ, दे6 जननस्थ (→जघनस्थ), दे3 वृष्टा, दे4 5 9 दष्टा (→दष्ट्वा) –b) दे6 यदा चन्द्रसम मुने, दे7 यदा चद्रमस मुने –c) दे1 नमस्य प्रयतो, दे3 नमस्येत्प्रयता, दे4 नमस्तेत्प्रायतो, दे6 7 नमस्कृत्य यतो (→नमस्येत्प्रयतो) –e) दे4 आद्रस्तु (→आद्रस्थ–), दे2 आद्रस्थमाब्द कम च, दे3 आद्रस्थमाद्रकर्मात्तु –f) दे2 ध्यात्वा चाव्यशतक्षर, दे7 ध्यात्वा चाष्टाक्षर शतम्

६१ दे1 5-9 11 मुवे ab○ –a) दे2 नमस्येत (→नमस्येच्च) –b) दे2 पापै , दे3 पाप, ते1 पापान (→पापात) –c) दे1 2 10 ते1 सोमश्च (→चन्द्रश्च), दे3 4 यदा सोमस्य चन्द्रस्य –d) दे3 4 प्रशस्यत , ते1 प्रपच्यत (→प्रपश्यत ), दे10 द्वावस्थोय प्रपश्यति –e) दे1 8 9 सपूर्णो, दे2 4 10 सपूण– (→सम्पूर्णौ), दे3 6 सपूण (दे6 °र्णो) विमलो सम्यक, ते1 सपूणविमलैस्सम्यग

६२ दे5-11 मुवे ते1 cd ○ –a) दे6 7 तदा (→तथा), दे1 हृदि कृत्वा यदा पाप –b) दे2 परमालय, दे3 5 8 11 परमाव्यय, दे6 7 परमाक्षर, दे9 परमाष्य (→परमव्ययम्) –d) दे2 सवपापै प्रमुच्यते

६३ दे5-9 11 मुवे ते1 ○, दे10 ab○ –b) दे1 चाक्षय° (→चाक्षर°) –c) दे1 घन, दे2 हुत (→घृत)

६४ दे3 4 ○ –b) दे1 जलोछित, दे6 जलोथित (→जलोत्थितम्) –c) दे3 घरणी (→धरणी), दे10 योद्धृता, ते1 चोद्भृता (→चोद्धृता), दे1 येन, दे10 ये च (→येन)

नमस्येद् वै पयोभक्ष स पापेभ्य प्रमुच्यते । प्राणायाम च य कुर्यात् सोऽपि पापात् प्रमुच्यते।।६५

।। इति श्रीवराहपुराणे भगवच्छास्त्रे अष्टाधिकद्विशततमोऽध्याय ।। २०८ ।।

# २०९

ऋषिपुत्र उवाच ।❀

एतच्छ्रुत्वा शुभ वाक्य धर्मराजस्य नारद ।
इद भावेन भक्त्या च पुनर्वचनमब्रवीत ।।१

नारद उवाच ।❀

सम सर्वेषु भूतेषु स्थावरेषु चरेषु च ।
धर्मराज महाबाहो पितुस्तुल्यपराक्रम ।।२
ब्राह्मणाना हितार्थाय यदुक्त मे प्रदक्षिणम् ।
इद श्रेय समाख्यान श्रुत श्रुतपर पदम् ।।३
त्रयो वर्णा महाराज यज्ञसामान्यभागिन ।
शूद्रा वेदपवित्रेभ्यो ब्राह्मणैस्तु बहिष्कृता ।।४
यथैव सर्वसमता तव भूतेषु मानद ।
तथैव तेषामपि हि श्रेयो वाच्य महामते ।
यथाधर्महित वाक्य शूद्राणामपि कथ्यताम् ।।५

यम उवाच ।❀

अह ते कथयिष्यामि चातुर्वर्ण्यस्य नित्यश ।
यद्धित धर्मयुक्त च नित्य भवति सुव्रत ।।६
केवल श्रुतिसयोगाच्छ्रद्धया नियमेन च ।
करोति पापनाशार्थमिद वक्ष्यामि तच्छृणु ।।७ वे २

---

६५ दे3 4 ○ –a) द2 नमस्याब्दै, दे7 नमस्येद्य (→नमस्येद्वै), द॰ नमस्तेभ्य पयोभक्ष्य, दे10 मनसे दव यो भक्ष –c) दे1 तु (→च), दे2 कृत्वा (→कुर्यात) –d) दे1 पापै (→पापात)

**पुष्पिका—**

**पुराणनाम**—दे6 ○, दे1 इत्यादिवाराहपुराणे भगवत्सास्त्रे, दे2 5 8 9 11 ते1 इत्यादि वा(दे3 4 श्रीवा)राहपुराणे भगवच्छास्त्रे, दे7 इति श्रीआदिवाराहपुराणे, दे10 इत्यादिवाराहपुराणे, मुवे इति श्रीवराहपुराणे भगवच्छास्त्रे **अध्यायनाम**—दे1-5 8-11 ते1 ससारचक्रे, दे6 ससारचक्र, दे7 ससारचक्रे निमेराख्यान नामाध्यत्य, मुवे ससारचक्रे पापनाशोपायनिरूवण नाम **अध्यायसख्या**—दे1-7 9 11 ○, दे8 ।।११३।।, मुवे दशाधिकद्विशततमोऽध्याय ।।२१०।।, ते1 षड्विशोत्तरद्विशततमोऽध्याय

**२०९**

❀ दे2 ऋषिरुवाच, दे10 ऋषिपुत्र उ०, दे11 ऋषि उवाच

१ –b) दे6 7 ऋषिपुत्रस्य (→धमराजस्य) –c) दे1 5 8 9 11 ते1 इम (→इद)

❀ दे1 श्रीनारद उ०, दे9 10 नारद उ०

२ –a) दे11** (→सम ), दे1*** (→भूतेषु) –b) दे1 स्थावरेषु***वा, दे3***स्थावरेषु च –d) दे5-7मुवे पितृ (दे5*) तुल्य° (→पितुस्तुल्य°), दे3 4 °पराक्रम (→°पराक्रम)

३ दे10 ○ –a) दे2-4 ते1 यथार्थाय (→हितार्थाय) –b) दे1 4 प्रदक्षिणा (→प्रदक्षिण) –c) दे3 ते1 इम (→इद), दे3 श्रेये, दे4 श्रेयो, दे6 तेय, दे9 श्रेय, ते1 श्रेय (→श्रेय ), दे1 3 4 ते1 समाख्यात, दे6 समास्थान (→समाख्यान) –d) दे1**, दे7 श्रुति (→श्रुत), दे2 °परायण, दे6 7 °विदा (दे7 °धा) वर (→°पर पद), दे4 श्रुत पापहर पर, ते1 श्रुत च परम पदम्

४ दे10 ab○ –a) दे5 9 11 मुवे महाभाग (→महाराज) –b) दे3 4 °समाज्ञ–, दे6 °सामत्य (→°सामान्य–), दे1 –भाजिन (→–भागिन ) –c) दे2 शूद्रो (→शूद्रा), द10 चेद° (→वेद°), दे1 °विहीनास्तु, दे2 °पवित्राभ्यो (→°पवित्रेभ्यो) –d) दे1 ब्राह्मणै सु, दे3 4 ब्राह्मणेषु, दे11 ब्राह्मणकस्तु (→ब्राह्मणस्तु), दे2 बहि कृत (→बहिष्कृता )

५ दे6 7 f ○ –a) दे2 10 तथेव (→यथैव), ते1 सर्वे (→सव–), दे4 मे तावत् (→–समता) –b) दे2 बहु–, दे4 सत्र– (→तव) –c) दे10 तथैव तेषा विहित –d) दे2 8 महामुने, दे10 महीयते (→महामते) –e) दे5-9 11 मुवे कम° (→धम°), दे6 7 कर्म (→वाक्य) –f) दे॰ कथित (→कथ्यता)

❀ दे6 7 ○, दे10 यम उ०

६ दे6 7 abc○ –a) दे3 अथ (→अह) –c) दे2 °युक्तस्य (→°युक्त च) –d) दे1****ति, दे6 7 युक्त भवति (→नित्य भवति), दे3-5 8 सुव्रत (→सुव्रत)

७ –a) दे1 यस्तु (→श्रुति–), दे3 4 ते1 °सयोग, दे7 °सयोगा, दे10 °सयोग(→°सयोगाद्) –b) दे1 बुद्धाया, दे2 शुभया (→श्रद्धया), दे6 7 शूद्रयोनिजमेव च –c) दे3 वारोति (→करोति) d) दे10 मे तराच्छ्रवण हित

।२१११८ गाव पवित्रा मङ्गल्या देवानामपि देवता ।
यस्ता शुश्रूषते भक्त्या स पापेभ्य प्रमुच्यते ।।८
सौम्ये मुहूर्त्ते सयुक्ते पञ्चगव्य तु य पिबेत् ।
यावज्जीवकृतात् पापात् तत्क्षणादेव मुच्यते ।।९
लाङ्गूलेनोद्धृत तोय मूर्ध्ना गृह्णाति यो नर ।
सर्वतीर्थफल प्राप्य सर्वपापै प्रमुच्यते ।।१०
प्रस्रावेन तु य स्नायाद् रोहिण्या मानवो द्विज ।
सर्वपापकृतान् दोषान् दहत्याशु न सशय ।।११
धेनुस्तनाद् विनिष्क्रान्ता धारा क्षीरस्य यो नर ।
शिरसा प्रतिगृह्णाति स पापेभ्य प्रमुच्यते ।।१२
ब्राह्मणस्य सदा स्नातो भक्त्या परमया युत ।
नमस्येत् प्रयतो भूत्वा स पापेभ्य प्रमुच्यते ।।१३
उदयान्नि सृत सूर्यं यस्तु भक्त्या नरो द्विज ।
दध्यक्षताञ्जलीभिस्तु त्रिभि पूजयते शुचि ।।१४
तस्य भानु प्रसन्नश्च अशुभ यत्समर्जितम् ।
तत्क्षणादेव निर्दग्ध भस्मीभवति तस्य तत् ।।१५
यावक दधिमिश्र तु पात्रे औदुम्बरे स्थितम् ।
सोमाय पौर्णमास्या हि दत्त्वा पापै प्रमुच्यते ।।१६
अरुन्धतीं ध्रुव चैव तथा सप्त महामुनीन् ।
अभ्यर्च्य विधिना रात्रौ तेभ्यो दत्त्वा च यावकम् ।।१७
एकाग्रमानसो भूत्वा यो नमस्येत् कृताञ्जलि ।
किल्बिष तस्य वै सर्वं तत्क्षणादेव नश्यति ।।१८
द्विज शुश्रूषते यस्तु तर्पयित्वा तु भक्तित ।
नमस्येत् प्रयतो भूत्वा स पापेभ्य प्रमुच्यते ।।१९

---

८ –a) दे8 गाव पवित्रमङ्गल्या –c) दे3 4 शुश्रूषयेद (→शुश्रूषते), दे1 भक्तो (→भक्त्या), दे2 यस्तावच्छ्रूयते भक्त्या

९ –a) दे6 सौमुहूर्त्ते च सयुक्ते –c) दे1 यावज्जीव स तत्पापात, दे, यावज्जीवानृत्यात्पापात –d) दे8 न्ह्क्षणादेव (→तत्क्षणादेव)

१० दे3 4 cd○ –a) दे3 5 लाङगूलेनोद्धत तोय, ते1 लाङगूलेवोज्झित तोय –b) दे3 5 मूर्ध्ना गृह्ण(दे5 °न्हा)ति ये नरा –c) दे3 सिरसा प्रनिगृह्णाति –d) दे3 मुवे स पापेभ्य प्रमुच्यते

११ दे4 ab ○ –a) दे3 प्रास्रावेन तु, दे5 8 9 11 मुवे प्रस्रवेन (मुवे °ण)तु (मुवे च), दे6 7 प्रस्रवने (दे7 °णे) तु (→ प्रस्रावेन तु) –b) दे1 3 6 9 11 ते1 रोहिण्या (→रोहिण्या), मुवे मानवे (→मानवो) –c) दे2 °पापान्वितान्, दे3 °पापानतान, दे10 °पापानि ये, ते1 °पापान् कृतान् (→°पापकृतान)

१२ –a) दे1 धेनो क्रमाद्, दे3 धनुस्तानाद, दे4 धेनु-स्थानाद, ते1 धेनुस्त्वनाद (→धेनुस्तनाद्), दे6 विनिष्क्रान्त (→विनिष्क्रान्ता) –c) दे, 4 शिरस्था (दे3 °स्ता) (→शिरसा), दे6 7 प्रतिगृह्णीत (→प्रतिगृह्णाति) –d) दे2 गृह्यपाप, दे6 7 सवपापै (→स पापेभ्य)

१३ –a) दे1 ब्राह्मणाना, दे2 ब्राह्मणास्तु, दे5 9 11 मुवे ब्राह्मणस्तु (→ब्राह्मणस्य) –ab) दे10 उच्छिष्ट ब्राह्मणाना तु समुद्धृत्य प्रयत्नत –c) दे3 प्रयता, दे7 प्रयुतो (→प्रयतो) –d) दे1 2ते1 स (दे1 त) दा पापै, दे3 4 तदा पापात्, दे6 7 सवपापै (→स पापेभ्य)

१४ दे3 ab ○ –a) दे4 उदये (→उदयान्) –b) दे2 4 5 7 11 नरो द्विज, दे6 नरोत्तम (→नरो द्विज), मुवे भक्त्या परमया युत –c) दे2 वह्न्यता–, दे6 8 दध्यक्षरा– (→ दध्यक्षताम), दे2 °ञ्जलीभिश्च (→°ञ्जलीभिस्तु) –d) दे7 त्रिभिश्च जायते शुचि

दे2-4 ते1 मुवे १४ b चरणात्परमधिकम्—

* उच्छिष्ट ब्राह्मणाना तु समुदधृत्य प्रयत्नत
नमस्येत प्रयनो भूत्वा स पापेभ्य प्रमुच्यते ।

[–1 मुवे ○ –2 दे2 सवपापै (→स पापेभ्य)]

१५ –a) दे1 तस्यै दे3 4 तस्या (→तस्य), दे1 प्रसन्नाश्च, दे2 , प्रसन्नस्तु (दे3 °स्य) दे4 प्रसन्न * (→प्रसन्नश्च), दे6 7 मनसा कमणा वाचा –b) मुवे ह्यशुभ (→अशुभ), दे1 प्रमार्ष्टि तत, दे 4 समार्जित, दे10 स मायने, ते1 समादितु (→ समर्जित) –d) दे3 तत् शृणु, दे4 तत्क्षणात (→तस्य तत) –cd) दे5 9 11 मुवे तस्य भानु स सद (दे6 °गृ)ह्य दूरी कुर्यात्सदा द्विज

१६ –a) मुवे तावक (→यावक) –b) दे1 उदिवरे, दे3 अदुम्बरे (→औदुम्बरे), दे10 पात्रेणौदुम्बरान्वित –c) दे3 सोमया, दे4 सोमाया, ते1 सौमाय (→सोमाय), दे3 पूर्णि° (→ पौण°), दे2 तु (→हि) –d) दे6 7 सव– (→दत्त्वा)

१७ –a) दे5 8 9 11 मुवे बुध (दे5 °धे), ते1 धृत (→ ध्रुव) –b) दे5 8 9 11 मुवे सर्वान् (→सप्त) –c) दे1 अभ्यर्थ्य (→अभ्यर्च्य), दे5-9 11 मुवे वेदविधिना, दे10 विधिना राशे (→विधिना रात्रौ) –d) मुवे तावक (→यावक)

१८ –a) दे3 4 ते1 °मनसा (→°मानसो)

१९ –a) दे2-4 शुश्रूषयेद, दे6 7 शुश्रू (दे6 °ष)यते (→शुश्रूषते) –b) दे1 तपयित्वा स्व–, दे2 5 7-9 11 मुवे तपयित्वाति, दे10 तपयित्वा च (→तपयित्वा तु), दे1 –शक्तित (→भक्तित)

विषुवत्ये च योगे तु शुचिर्दत्त्वा पयो नर ।
तस्य जन्मकृत पाप तत्क्षणादेव नश्यति ॥२०
प्राचीनाग्रान् कुशान् कृत्वा स्थापयित्वा वृष नर ।
द्विजै सह नमस्कृत्य सर्वपापै प्रमुच्यते ॥२१
दक्षिणावर्त्तशङ्खेन गत्वा प्राक्स्रोतस नदीम् ।
कृत्वाभिषेक विधिवत तत पापै प्रमुच्यते ॥२२
दक्षिणावर्त्तशङ्खेन तिलमिश्रोदकेन तु ।
उदके नाभिमात्रे तु य कुर्यादभिषेचनम् ॥२३
प्राक्स्रोतसा तु वै नद्या नरस्तत्राम्भसाऽऽप्लुत ।
यावज्जीवकृत पाप तत्क्षणादेव नश्यति ॥२४
अच्छिद्रपद्मपत्रेण सर्वरत्नोदकेन तु ।
त्रिशो यस्तु नर स्नायात् सर्वपापै प्रमुच्यते ॥२५
दक्षिणावर्त्तशङ्खेन पात्रशोध धरे स्थितम् ।
उदक य प्रतीच्छेत् शिरसा हृष्टमानस ।
तस्य जन्मकृत पाप तत्क्षणादेव नश्यति ॥२६
प्राक्स्रोतसा नदीं गत्वा नाभिमात्रे जले नर ।
स्नात्वा कृष्णतिलैर्मिश्रान् दत्त्वा सप्ताञ्जलीन् नर ॥२७
प्राणायामत्रय कृत्वा ब्रह्मचारी जितेन्द्रिय ।
यावज्जीवकृत पाप तत्क्षणादेव मुच्यते ॥२८
अन्यच्च ते प्रवक्ष्यामि गुह्याद् गुह्यतर मुने ।
कार्त्तिकेऽमलपक्षे तु एकादशी या स्मृता मुने ॥२९
भक्तिमुक्तिप्रदा सा तु नाम्ना ख्याता प्रबोधनी ।
या सा विष्णो परा मूर्त्तिरव्यक्तानेकरूपिणी । वे २११ ३०

२० –a) दे2-4 10 11 विषुवत्ये (दे3 °त्यै)व, दे5 8 9 विषुवत्ये (दे9 °ते) षु, दे6 7 विषुवत्या (दे7 °द्या)दि, मुवे विषुवेषु च, ते1 विपुलत्वेव (→विपुवत्ये च), दे2ते1 योगे तु दे3 4 यो मेस्तु, दे5 6 8 9 11 मुवे योगेषु, दे7 योगेन, दे10 सोमस्तु, ते1 वेगे तु (→योगे तु) –b) दे1 3 4 10 शुचिभूत्वा च (दे1 तु) यो नर (दे3 °रा)

२१ दे7 ○, दे6 abc ○ –a) दे6 दत्त्वा (→कृत्वा) –b) दे1 तपयित्वा (→स्थापयित्वा), दे3 विषा, दे4 तु यो (→वृष) –c) दे2ते1 नमस्तुभ्य, दे3 नमस्तुत्य (→नमस्कृत्य), दे1 त्रिस्रोतस्तु नर स्नायात्

२२ दे1 3 4 6 7 ○ –a) दे5 8 9 11 मुवे सव्येन (→शखेन) –b) दे5 8 9 11 मुवे कृत्वा, ते1 दत्त्वा (→गत्वा), दे5 6 8 9°स्रोतसा, ते1°स्रोतसी (→°स्रोतस), दे10 तिलमिश्रोदकेन तु –c)दे10 त्रिशो ह्यत्र नर स्नायात –d) दे10 सव–(→तत ), दे5 8 9 11 मुवे पापात (→पापै )

२३ दे7 ○ –a) दे5 8 °सव्येन (→°शङ्खेन) –b) दे1 10 पात्रशोध धरे स्थित –b) दे5 6 8 9 11 मुवे कृत्वा चैव ध (मुवे क) रे जल, ते1 तिलमिश्रोदक न तु –c) दे1 10 उदक य प्रयच्छेत (दे10 प्रतीक्षेत), दे5 6 8 9 11 मुवे शिरसा तद गृहीत्वा तु –d) दे1 10 शिरसा हृष्टमानस , दे5 6 8 9 11 मुवे विप्रो हृष्टमना शुचि

अत पर दे1 5 6 8-11 मुवे अधिकम—
*तस्य जन्मकृत पाप तत्क्षणादेव नश्यति ।

२४ –a) दे1 5-11 मुवे प्राक स्रोतस (दे10 °सा) नदी गत्वा; –b) दे1 5-11 मुवे नाभिमात्रे (दे5 8 9 11 मुवे °त्र) जले स्थित (दे1 10 नर ) –c) दे1 6 7 10 कृतात्पापात (→कृत पाप) –d) दे1 6 7 मुच्यते (→नश्यति)

दे1 5-11 मुवे २४b चरणात्परमधिकम—
स्नात्वा कृष्णतिलैर्मिश्रा दद्यात्सप्ताञ्जलीनर ।
प्राणायामत्रय कृत्वा ब्रह्मचारी जितेन्द्रिय ॥
( = २७cd–२८ab)

[–1 दे10 सत (→स्नात्वा), दे6-7 मिश्रा, दे10 मिश्र (→मिश्रा), दे6 7 10 सप्ताञ्जलीन्(दे10°लिं) (→सप्ताञ्जलीर्) ]

२५ दे1 10 ○ –a) दे3 अषिद्र°(→अच्छिद्र°), दे2ते1 °पत्रे तु (→°पत्रेण) –b) दे7 च (→तु) –c) दे2ते1 तीर्थै दे3 4 तिस्रो, दे5 मुवे त्रिधा, दे6 त्रयो, दे7 स्त्रियो, दे9 त्रिशो (→त्रिशो)

२६ दे1 3 4ते1 पुस्तकेष्वेवाऽय पाठ –b) दे4 पात्रशो*, ते1 पात्र शोघ (→पात्रशोध), दे4 करे (→धरे), दे3 स्थिति (→स्थित)

२७ दे1 3 4 ते1 पुस्तकेष्वेवाऽय पाठ –a) दे2°स्रोतस (→°स्रोतसा) –b) दे3 4 स्थित (→नर ) –c) दे3 4 कृत्वा (→स्नात्वा)

२८ दे1 3 4ते1 पुस्तकेष्वेवाऽय पाठ पाठान्तर नास्ति

२९ –b) दे6 महत् (→मुने) –c) दे8 कार्त्तिकैमलपक्षे तु, दे10 कार्त्तिके तु सिते पक्षे –d) दे2 10 ते1 एकादश्या (दे10°श्या), दे3 एकाशीया (→एकादशी या), दे1 स्मता चैंका द मनो (?), दे5-9 11 मुवे. स्मृता (दे7 °त्वा) ह्येकादशी तिथि

३० –a) दे5 7-9 11 मुवे या (→सा), दे3 7 10 भुक्तिमुक्तिप्रसादात्तु, ते1 भुक्तिमुक्तिप्रदानात्तु –b) दे10 ख्याता (→

१२११ ३० सा क्षिप्ता मानुषे लोके द्वादशी मुनिपुगव ।।३०
ये उपोष्यन्ति विधिवन्नारायणपरायणा ।
न तेषामशुभ किंचिज्जन्मकोटिकृत मुने ।।३१
अस्याश्रित्य पुरा पृष्टो धरण्या परमेश्वर ।
वराहरूपी देवर्षे सर्वलोकहिताय वै ।।३२
धरण्युवाच ।❀
अस्मिन् कलियुगे घोरे नरा पापरता प्रभो ।
ब्रह्मस्वहरणे युक्तास्तथा ब्राह्मणघातका ।।३३
गुरुद्रोहरता देवमित्रद्रोहरतास्तथा ।
स्वामिद्रोहरताश्चैव परदाराभिमर्शका ।।३४
परद्रव्यापहारेण ससक्ताश्च सुरेश्वर ।
अभक्ष्यभक्ष्यनिरता वेदब्राह्मणनिन्दका ।।३५
दाम्भिका भिन्नमर्यादा नायमस्तीतिवादिन ।
असत्प्रतिग्रहे सक्ता अगम्यागमने रता ।।३६
एतैश्चान्यैश्च पापैश्च ससक्ता ये नरा विभो ।
किमासाद्य गतिर्देव तेषा वद सुरेश्वर ।।३७
श्रीवराह उवाच ।❀
साधु देवि महाभागे यत्पृष्टोऽह वरानने ।
रहस्य ते प्रवक्ष्यामि लोकाना हितकाम्यया ।।३८
महापातकयुक्ता ये नरा सुकृतवर्जिता ।
तेषा मया हितार्थाय निर्मित तच्छृणुष्व मे ।।३९
या सा विष्णो परा शक्तिरव्यक्ताऽनेकरूपिणी ।
सा मर्त्ये निर्मिता भूमि द्वादशीरूपधारिणी ।।४०
तामुपोष्य नरो भद्रे महापापरताश्च ये ।
पुण्यपापविनिर्मुक्ता गच्छन्ति पदमव्ययम् ।।४१
नान्योपायो विशालाक्षि विद्यते किल शोभने ।

---

ख्याता), दे5 9 11 मुवे प्रबोधिनी, दे10 प्रबोधिनी (→प्रबोधनी) –c) दे6 यासि, दे10 या स (→या सा), दे10 यदा (→परा) –d) दे10 व्यक्तानेकस्वरूपिणी –f) दे4 °पुगवा, दे6 °पुगवे (→°पुङ्गव)

३१ –a) दे1 उपोषयित्वा, दे3 ये उपोषिति, ते1 ये न पोष्यन्ति (→ये उपोष्यन्ति), दे6 7 विधिना (→विधिवन) –b) दे1 2 °परायण (दे1 °ण) (→°परायणा ) –c) दे4 नि शेषमशुभ किञ्चित –d) दे6 °कोट– (→°कोटि–) ते1–क्षय (→–कृत)

३२ –a) दे1 प्रस्थाप्य चतुरो धत्वा, दे5-9 11 मुवे एकादशी समाश्रित्य, ते1 अस्यासृ***पष्टो –b) दे1 धरण्या (→धरण्या) दे5 9 11 मुवे पुरा पष्टो महेश्वर –c) दे5 9 11 मुवे धरया दे10 देवर्षि (→देवर्षे)

❀ दे4 धरण्यु उवाच, दे5 धणयुवाच, दे6 धरणीरुवाच दे10 धरण्यु**

३३ –a) दे6 °रत , ते1 °युता (→°रता ), दे2 मुने, दे10 सदा, ते1 शुभा (→प्रभो) –c) दे1 परस्व°, दे4 ब्राह्मस्वा° (→ब्रह्मस्व°), दे6 7 सक्तास (→युक्तास) –d) दे3 6 °घातक (→°घातका )

३४ दे11 ○ –a) दे4 गुरुदार– (→गुरुद्रोह–), दे1 ये च (→देव–) –c) दे6 7 पुत्र° (→स्वामि°), दे1 °रता ये च (→°रताश्चैव)

३५ –a) दे1 मुवे °हरणे, दे5 7 9 11 मुवे °हारे हि (→°हारेण), दे6 परद्रव्या महादेवि –b) दे6 7 ससक्ताश्च परस्परम, दे10 सयुक्ता परमेश्वर –c) दे3 4 अभक्षनिरता देव, दे5-9 11 मुवे अभक्ष्यभक्षणरता , दे10 अभक्ष्याभक्ष्यनिरताद् –d) दे1 6 7 10 देव°, दे4 गुरु° (→वेद°)

३६ –b) दे1 नास्ति नास्तीति–, दे3 8 ना यमस्ताति, दे6 नायमस्मीति (→नायमस्तीति) –c) दे8 9 °गृहे (→°ग्रहे) –d) दे1 आगम्या-, दे6 7 आ (दे6 अ) गम्य (→अगम्या–)

३७ –a) दे1 6 7 एतरन्यैश्च, ते1 एतैश्चाल्पैश्च (→एतैश्चान्यैश्च), दे1*** (→पापैश्च) –c) दे1 केमापसाद्य, दे2 10 कमासाद्य, दे 4 कामासाद्य (→किमासाद्य) –d) दे3 8 सरश्वर (→सुरेश्वर)

❀ दे1 9 श्रीवाराह उ०, दे6 मुवे श्रीवराह उवाच, दे7 वराह उवाच, दे10 वाराह उ०

३८ –a) दे3 9 ते1 देवी (→देवि)

३९ –b) दे3 सुकृति° (→सुकृत°) –d) दे6 7 यत्कृत (→निर्मित), दे1 2 10 ते1 यच्छणुष्व (→तच्छृणुष्व)

४० –b) दे3 4 अव्याक्ता (→अव्यक्ता) –c) दे3 साम्पत्त, दे4 सम्यक ता, दे6 साभूते, दे7 साधूमे (→सा मर्त्ये), दे1 4 5 8 9 11 मुवे ते1 भूमे, दे6 7 मर्त्ये (→भूमि)

अत पर दे5 8 9 अधिकम्—
तामुपोष्य नरा भद्रे द्वादशीरूपधारिणीम ।

४१ –a) दे1 लोके (→भद्रे) –b) दे6 °रत च (→°रताश्च) –d) दे1 4 ते1 गच्छन्ति परमव्ययम्

४२ –a) दे1 3 ते1 नान्योपाय (→नान्योपायो), दे5 9 11 मुवे ते1 उपायोऽत्त (दे8 तु) परो नान्यो –b) दे5-9 11 मुवे विद्यते हि वसुन्धरे –c) दे1 4 10 ते1 एकादश्या (दे3 4 °श्या)

एकादशी विना येन पापक्षयमुपेष्यति ॥४२
यथा शुक्ला तथा कृष्णा उपोष्या हि प्रयत्नत ।
शुक्ला भक्तिप्रदा नित्य कृष्णा मुक्ति प्रयच्छति ॥४३
तस्मात सर्वप्रयत्नेन कर्त्तव्य द्वादशीव्रतम ।
यदिच्छेद् वैष्णव स्थान गन्त वै भूतधारिणि ॥४४
वाचा च मनसा चैव कर्मणा यदुपार्जितम ।
पाप मासकत पसा दहत्येकादशी कता ॥४५
रटन्तीह पुराणानि भूयो भूयो वरानने ।
न भोक्तव्य न भोक्तव्य सप्राप्ते हरिवासरे ॥४६
यदीच्छथ नरा गन्त तद् विष्णो परम पदम् ।
न भोक्तव्य न भोक्तव्य तदा केशववासरे ॥४७
ऊर्ध्वबाहुर्विरौम्येष प्रलाप मे शृणष्व तत् ।
आराधयस्व विश्वेशमेकादश्यामतन्द्रित ॥४८
न शङ्खेन पिबेत तोयं न हन्यान्मत्स्यसूकरौ ।
एकादश्या न भुञ्जीत पक्षयोरुभयोरपि ॥४९
स ब्रह्महा सुरापश्च स स्तेयी गुरुतल्पग ।
एकादश्या तु यो भडक्ते पक्षयोरुभयोरपि ॥५०
किं तेन न कत पाप दुर्वृत्तेनात्मघातिना ।
एकादश्या विशालाक्षि भडक्ते यो न विजानता ॥५१
न शक्नोति यदा शक्लामेकादश्यामपोषितम ।
तदा नक्तेन कर्त्तव्य तथैवायाचितेन वा ॥५२
एकभक्तेन दानेन कर्त्तव्यं द्वादशीव्रतम ।
न करोति यदा भूमि व्रत वा दानमेव वा ।
महापातकभागी स्यात सुगतिं नाप्नुयात क्वचित् ॥५३
उपवासासमर्थानां सदैव पृथुलोचने ।
एका सा द्वादशी पुण्या उपोष्या या प्रबोधिनी ॥५४ वे २११ ५५

(→एकादशी), दे3 4 दि (दे3 वि) न पाप (→विना येन) –d) दे2 ते1 पाप क्षयमुपेक्षति, दे3 4 क्षय मव (दे3**) भविष्यति, दे5-9 11 मुवे सवपापक्षयो भवेत, दे10 पापक्षयमुपोष्यते

४३ –b) दे9 मुवे ह्युपोष्या (→उपोष्या), दे5-9 11 मुवे सा (→हि) –c) दे1 शक्लभुक्ति° दे4 शक्ला भुक्ति° दे8 शुक्ता भक्ति°, दे10 शुक्ला मुक्ति° (→शुक्ला भक्ति°) –d) दे3 कृत्वा, दे4 6 8 कृष्ण–, ते4 कृष्णा (→कृष्णा), ते1 मुक्ति (→मुक्ति)

४४ –b) दे5-9 11 मुवे कत्तव्या (→कत्तव्य), दे5-9 11 मुवे सदा (→–व्रत) –c) दे5-9 11 मुवे लोक (→स्थान) –d) दे5 8 9 वै रूप–, दे10 वैष्णव– (→वै भूत–), दे1 8 10 11 मुवे ते1 –धारिणी (दे, °णी) (→–धारिणि)

४५ –a) दे6 7 वाचा च कमणा चैव, मुवे मनसा वचसा चैव –b) दे5-9 11 मुवे समुपार्जित (→यदुपार्जित) –c) दे3 10 साम°, दे4 सव° (→मास°)

४६ दे4 cd ○ –a) दे3 रटयन्ति, दे4 रटन्ति च, दे5 8 9 मुवे दहन्तीह, दे6 7 वदतीह, ते1 पठन्तीह (→रटन्तीह) –b) दे8 भूयो** (→भूयो भूयो), दे9 वरा** (→वरानने) –d) ते1 प्राप्ते च (→सप्राप्ते)

४७ दे3 ○, दे4 ab ○, दे6 7 10 cd ○ –a) दे6 7 यदीच्छेत, दे10 यदीच्छति (→यदीच्छथ) –d) दे1 प्राप्ते (→तदा)

४८ दे6 7 ab ○ –a) दे1 4 8 9 11 ते1 विरोम्येष (→विरोम्येष) –b) दे5 8 9 11 मुवे तन् (→तत), दे1 प्रलाप शृणु मे तत –c) दे1-4 ते1 आराधयति (दे3 °त, दे10 °तु) (→ आराधयस्व), दे6 7 एकादश्या न भोक्तव्य –d) दे6 7 इति सत्य ब्रवीमि ते

४९ –a) दे6 शाखेन (→शखेन), दे8 पवित्रोऽय (→ पिबेत्तोय) –b) दे6 7 खादेत (→हन्यान) –c) दे3 एकादश्या, दे6 एकादशी (→एकादश्या)

५० दे10 ○ –b) दे स्वस्तेयी दे4 स्तेयी च (→स स्तेयी)

५१ –a) दे1 किं च तेन कृत पाप –b) दे 4 दुरात्मेना°, दे8 दुवत्तेना°, दे10 दौरात्म्येना° (→दुवत्तेना°) –c) दे1 3 5 एकादश्या (→एकादश्या) –d) दे1 5 11 मुवे भुडक्त (दे7 10 °क्ते) येन, दे4 भुडक्ते तेन (→भुडक्ते यो न)

५२ –a) दे10 चायम (→शुक्ला), दे5-9 11 मुवे एकादशी च या (दे6 त्वया, दे7 तु या) शुक्लाम –b) दे1 ते1 उपोषित (→उपोषितु), दे5-9 11 मुवे असमथ उपोषितु (दे6 °त) –c) दे5-9 11 मुवे तदा नक्त प्रकत्तव्य –d) दे10 च (→वा), दे5 9 11 मुवे तथाऽयाचितमेव वा

५३ –a) दे3 5 एका (→एक–), दे1 नक्तेन (→दानेन) –c) दे1 4 5 8 9 11 मुवे ते1 भूमे, दे6 7 देवि (→भूमि) –d) दे2-4 6 10 च (→वा) –e) दे5 8 * (→स्यात) –f) दे10 सुत वा (→सुगतिं), दे3 सुगत ना पुरा क्वचित दे4 सुकृत न पुरा क्वचित, दे7 स गतिं प्राप्नुयात्क्वचित

५४ दे3 4 cd ○ –a) दे3 6 उपवास° (→उपवासा°) –b) दे2 तदैव, दे5-9 11 मुवे ते1 तथैव (→सदैव) –c) दे3 एकादश्या द्वादशी पुण्या –d) दे5-9 11 सो (दे6 सु)

११५५ तस्यामाराध्य विश्वेश जगतामीश्वरेश्वरम् ।
प्राप्नोति सकल तद्धि द्वादशद्वादशीफलम् ॥५५
पूर्वभाद्रपदायोगे सैव वा द्वादशी भवेत् ।
अतीव महती तस्यां सर्वकृत्यमथाक्षयम् ॥५६
उत्तराङ्गारक्युता यदि सा भवति प्रिये ।
तदा सा भवति पुण्या कोटिकोटिगुणोत्तरा ॥५७
यदन्यकाले वर्षैस्तु केशवाल्लभते फलम् ।
सकदेवार्चिते तस्यां लभते भूतधारिणि ॥५८
यथा प्रबोधनी पुण्या तथा यस्यां स्वपेद्धरि ।
उपोष्या हि महाभागे अनन्तफलदा तु सा ॥५९
शयने बोधने चैव कटिदाने च सुन्दरि ।
उपोष्यैव विधानेन याति मल्लयता नर ॥६०
तस्मात् सर्वप्रयत्नेन द्वादशीं समुपोषयेत् ।
यदिच्छेत विशालाक्षि शाश्वतीं गतिमात्मन ॥६१
एकादशी सोमयुता कार्त्तिके मासि भामिनि ।
उत्तराभाद्रसयोगे अनन्ता सा प्रकीर्त्तिता ॥६२
तस्या यत्क्रियते भद्रे सर्वमानन्त्यमश्नुते ।
[अनन्तपुण्यफलदा तेनानन्ता स्मृता प्रिये ॥]६३
एकादशी भौमयुता यदा स्याद् भूतधारिणि ।
स्नात्वा देव समभ्यर्च्य प्राप्नोति परम फलम् ।
प्राप्नोति सकल तद्धि द्वादशद्वादशीफलम् ॥६४
जलपूर्णं तदा कुम्भ स्थापयित्वा विचक्षण ।
पञ्चरत्नसमोपेत घतपात्रयुत तथा ॥६५
तस्य स्कन्धे त घटित मत्स्यरूप जनार्दनम ।

---

पोष्या दे10 ह्यपोष्या (→उपोष्या), दे1 य, दे2 मुवे सा, ते1 या (→या), दे1 प्रबोधना, दे2 ने1 प्रबोधनी (→प्रबोधिनी)

५५ दे4 a ○ -b) दे6 जगता चेश्वरेश्वर, दे10 जगतामीश्वर पर -c) मवे चैतद (→तद्धि) -d) दे1 सपूण-, दे3 6 द्रादशा दे7 द्वादशी, दे10*** (→द्वादश-)

५६ -a) दे1 4 6 पूवभद्र° (दे4 °द्रा°), दे5 9 11 मुवे पूर्वभाद्र°(→पूवभाद्र°) -b) दे1 च दे6 7 चेद, मुवे या(→वा) -c) दे1 महत ते1 महता (→महती), दे1 तस्या (→तस्या) -d) दे1 सवकृत्य तथाश्यय, दे5 9 11 मुवे सव कृतमिहाक्षयम

५७ दे1 3 4 पुस्तकेष्वेव cd चरणौस्त -a) दे2 6 7 ते1 उत्तराङ्गारसहिता दे5 8 9 11 मुवे उत्तरा भाद्रसहिता -b) दे2 5 9 11 मुवे ते1 यदि सै (दे7ते1 चै) कादशी भवेत -c) दे3 4 महती (→भवति)

५८ -a) दे1 वासे तु, दे4*** (→वर्षैस्तु), दे2 5-9 11 मुवे ते1 तदा कोटिगुण पुण्य (दे2 ते1 पूर्वात), दे10 तदातिमहती पुण्य -b) दे6 लभ्यते लक्ष्यते फल, दे7 अनन्त लभते फल -c) दे1 सकृदेवाचने तस्या, दे4 सकृदेव हिते तस्या, दे6 7 सकृदेवार्चिता (दे6°ता) तस्या -d) दे2 4 ते1 °धारिणी (→°धारिणि)

५९ -a) दे1 प्रबोधना, दे2 4-11 मुवे प्रबोधिनी (→प्रबोधनी) -b) दे1 तदा (→तथा), दे6 स्वय (→स्वपेद), दे6 प्रलापेऽपि तथा हरि, दे7 प्रस्वपेति तथा हरे, दे9 तथा यस्या स्वय हरि -c) दे3 4 ते1 उपोष्य हि, दे6 8 उपोष्यामि (→उपोष्या हि), दे7 महापुण्या (→महाभागे) -d) मुवे त्वनन्त° (→अनन्त°), दे5-9 11 मुवे हि (→तु)

६० -b) दे2 ते1 तथा पाश्वनिवत्तने, दे4 कटदिनेपसुन्दरि, दे5-9 11 मुवे हरेस्तु परिवत्तने (दे6 7 °ते) -c) दे1 3-5 7-11 ते1 उपोष्यैव विधानेन दे6 उपोष्य विधिनानेन -d) दे4 यत्करोति विधि नरा दे5 9 11 मुवे नरो निर्मलता व्रजेत

६१ -b) दे5 6 द्वादशी(→द्वादशी) -c) दे1 यदीच्छेच्च, दे4 6 8 10 11 मुवे यदीच्छेत (मुवे °त्तु) (→यदिच्छेत) -d) दे1 8 शास्वती (→शाश्वती)

६२ दे4 bcd ○ -a) दे2 7 सोमयुक्ता, ते1 भौम युक्ता (→सोमयुता) -c) दे1-3 °भद्र- (→°भाद्र-) -d) दे5 9 11 मुवे अनन्तफलदा हि सा (दे6 7 भवेत)

६३ दे1-4 ते1 पुस्तकेष्वेव cd चरणौस्त -a) दे1 7 यस्या, दे3 तस्या (→तस्या), ते1 य (→यत), दे3 भद्र (→भद्रे) -b) दे5 8 9 11 मुवे तदनन्तगुण स्मृत, दे6 7 तदनन्तफल लभेत -d) दे4 बुधै (→प्रिये)

६४ -b) दे6 7 यदि (→यदा), दे1 3 4 10 °धारिणी (→°धारिणि) -c) ते1 स्नात्वा देवेशमभ्यर्च्य -d) दे1 2 10 ते1 पद (→फलम) -e) दे5-9 11मुवे तच्च (→तद्धि) -f) दे1 8***, दे6 7 द्वादशी (→द्वादश-), दे1-4 ते1 -द्वादशी नर (→-द्वादशीफलम)

६५ -a) दे2 ते1 अन्न° (→जल°), दे4 8 °पूर्णां (→°पूण), दे5 8 9 मुवे तथा (→तदा) -b) दे4 5 विचक्षणा (→विचक्षण ) -c) दे3 °समोपेते (→°समोपेत)

६६ -a) दे2-4 10 ते1 तस्या (→तस्य) -ab) दे5-9 11 मुवे तस्योपरि न्यसे मत्स्यस्वरूप तु जनादनम् -c) दे5 9 11

**माषकेन सुवर्णेन सुतप्तेन वरानने ।।६६**
**स्नापयित्वा विधानेन कुङ्कुमेन विलेपितम् ।**
**पीतवस्त्रयुगच्छन्न छत्रोपानद्युगान्वितम् ।**
**पूजयेत् कमलैर्देवि मद्भक्त सयतेन्द्रिय ।।६७**
**मत्स्य कूर्म वराह च नरसिह च वामनम् ।**
**राम राम च कृष्ण च बुद्ध कल्की च वै नम ।।६८**
**इत्येवमादिभिर्मन्त्रै पुष्पैर्धूपै समर्चयेत् ।**
**ततस्तस्याग्रतो देय नैवेद्य घृतपावितम् ।।६९**
**एव सपूज्य गोविन्द दिवाऽपि कमलेक्षणे ।**
**रात्रौ चोत्थापन कार्यं देवदेवस्य सुव्रते ।।७०**
**प्रभाते विमले स्नात्वा भक्त्या सपूज्य केशवम् ।**
**पुष्पधूपादिनवेद्यै फलैर्नानाविधै शुभै ।।७१**

**ततस्तु पूजयेद् विद्वानाचार्यं भक्तिभावित ।**
**अलङ्कारोपहारैश्च वस्त्राद्यैश्च स्वशक्तित ।।७२**
**पूजयित्वा विधानेन त देव प्रतिपादयेत् ।**
**जगदादि जगद्रूप अनादि जगदादिकृत् ।**
**जलशायिन् जगद्योने प्रीयता मे जनार्दन ।।७३**
**अनेनैव विधानेन य कुर्याद् व्रतराडिदम् ।**
**तस्य पुण्यफल यस्मान्मत्त श्रृणु वसुधरे ।।७४**
**यदि वक्त्रसहस्राणा सहस्राणि भवन्ति हि ।**
**सख्यातु नेह शक्यन्ते प्रबोधिन्यास्तथा गुणा ।**
**तथाप्युद्देशमात्रेण शक्त्या वक्ष्यामि तच्छृणु ।।७५**
**चन्द्रतारार्कसकाशमधिशक्त्यानुजीविभि ।**
**सहैव यानमातिष्ठेत्स तु विष्णुपुरे चिरम् ।।७६** वे,२११ ७८

मुवे माष (मुवे निष्क)मात्र सुवर्णेन –d) दे5 9 11 मुवे घटित तु (→सुतप्तेन)

६७ –a) दे5 9 11 मुवे पञ्चामृतेन सस्नाप्य –c) दे2 पीत (→पीत–) –d) ते1 छत्र (→छत्रो–), द3 छत्रोपान्नयुगान्वित –e) दे6 कलशर(→कमलर) –f) दे2 3 ते1 स(ते1 स) जितद्रिय (→सयतेद्रिय )

६८ –a) दे10 ते1 मत्स्य (→मत्स्य), दे3 4 च वाराह (→वराह च), दे10 मत्स्य कूर्मो वराहश्च –b) दे1 2 नारसिह च, दे6 नारसिहेति, दे10 नारसिहश्च (→नरसिह च), दे10 वामन (→वामनम) –c) ते1 क* (→कृष्ण), दे10 रामो रामश्च कृष्णश्च –d) दे10 ते दश (→वै नम ), दे1 वुध कल्का च तौ नम , दे3 वुध कलकीमेव च, दे4 वुधकल्की च वामन, दे5 9 11 मुवे बुद्ध चव च (दे6 9 11 तु) कल्कि (दे11*) न (दे6 कर्किण)

६९ दे6 cd ○ –a) दे3 4 इत्येवमादिमत्रैश्च, दे5 9 11 मुवे एव दशा(दे6 °श)वतारा (दे6 °राह)श्च –b) दे1 3 4 10 पुष्प– (→पुष्पैर्), दे5-9 11 मुवे पूजयेद् भक्तिसयुत –c) दे5-9 11 मुवे पुष्पैधूपैस् (दे7 °दीपैस्) तथा दीपैर् (दे7 धूपैर्), ते1 त** स्याग्रतो देय –d) दे1 4 10 ते1 °पाचित(→°पावित), दे5 9 11 मुवे नैवेद्यैर्विविधैरपि

७० दे6 ○, दे7 bcd ○ –a) दे5 8 9 11 मुवे सपूज्यैवमलङ्कारैर्, दे7 सपूज्य केशव पुष्पैर् –b) दे5-9 11 मुवे विविधैरुपशोभित –c) दे4 रात्रौ वा स्थापन काय –d) दे10 सुव्रत (→सुव्रते)

७१ दे6 ○, दे7 abc ○ –c) दे1 पुष्पैर्धूपैश्च, दे3 4 पुष्पधूपाद्य– (→पुष्पधूपादि–)

७२ –b) दे1 3 आचार्यो, द2ते1 आचार्णो, दे5 आचाय– (→आचाय), दे5 9 11 मुवे °सयुत (→°भावित ) –c) दे6 अलङ्कृतो° (→अलङ्कारो°), दे5 8 9 सोपहारैश्च वस्त्राद्यै –d) दे5 8 9 अलङ्कालै(दे9 °रै)श्च शक्तित , दे6 7 वसनाद्यैश्च शक्तित

७३ –c) दे1 जगदाद, दे6 जगदीशो (→जगदादि), द3 जराभूयम्, दे4 10ते1 जगदभूपम् (→जगद्रूप) –d) दे1 जगन्नाथातिशक्तिमत, दे5-9 11 मुवे जगदादिरनादिमान् –e) दे2 4ते1 जलशायी, दे3 जलशाद्र, दे5-9 11मुवे जगदादिर्(→जलशायिन), दे5-9 11 मुवे जगदयोनि (→जगदयोने) –d) दे1 10 जनादन (→जनादन )

७४ –b) दे1 व्रतमुत्तम, दे3 व्रतदादिद, दे10 व्रतराजक, ते1 व्रतरात्रिद (→व्रतराडिदम), दे4 कुर्यात्कृष्णमादिक, दे5-9 11 मुवे कुर्यादेकादशीव्रत –c) दे1 यत्तन, दे3 पश्यात, दे4 पश्चात, दे10 मत्त , ते1 यस्यान (→यस्मान) –d) द3 तत (→मत्त ), दे5-9 11 मुवे तच्छृणुष्व वसुन्धरे, दे10 श्रृणु तत्त्वेन सुन्दरि

७५ –a) दे1 व्रत (→वक्त्र–) –b) दे6ते1मुवे तै (→हि) –c) दे1 सख्या तु, दे2 सख्यात, दे3 स*त्व(→सख्यातु), दे1 4 5 9 11 मुवे नैव (→नेह) –d) दे1 3 4 10 प्रबोधन्यास (→प्रबोधिन्यास्) –e) दे6 तथा तथाशमात्रेण –f) दे1-4 10 भक्त्या (→शक्त्या)

७६ –a) दे1 °सङक्रान्तम् (→°सङ्काशम्) –b) दे1 अधिन्यास्तथा गुणा , दे3 4 अधिशक्त्या च (दे3*) जीविभि , दे5-9 11मुवे ते1अधिष्ठाया(दे5 8 9 °या) नु(दे8 9ते1 तु) जीविभि –c) दे5-9 11मुवे आगच्छेन (→आतिष्ठेत्) –d) दे5-9 11मुवे मम लोक वसुन्धरे, ते1 स तु विष्णवयने चिरम्

२१ ७८ तत कल्पसहस्रान्ते सप्तद्वीपेश्वरो वसेत् ।
आयुरारोग्यसपन्नो जन्मातीतो भवेत् तत ।।७७
ब्रह्मघ्नश्च सुरापश्च स्तेयी च गुरुतल्पग ।
पापान्येतानि सर्वाणि शृण्वतो दहते क्षणात् ।।७८
पश्येच्च धीमानधनोऽपि भक्त्या
स्पृशेन्मनुष्य इह धीयमान ।
शृणोति भक्त्याऽथ मति ददाति
विकल्मष सोऽपि दिव प्रयाति ।।७९
दु स्वप्न प्रशममुपैति पठ्यमान
माहात्म्य भवभयमोचन नराणाम् ।
य कुर्यात् किमुतह देवि सम्यक्
कृतात्मा व्रतपर प्रबोधनाख्यम् ।।८०
त धन्यास्ते कृतार्थाश्च तरेव सुकृत कृतम् ।
तैराप्त जन्मन सार ये काले कीर्त्तयन्ति माम् ।।८१
नारायणाच्युतानन्त वासुदेवेति यो नर ।
सतत कीर्त्तयेद् भूमि याति मल्लयता प्रिये ।।८२
कि पुन श्रद्धया युक्त पूजयेन्मामनन्यधी ।
गुरूपदिष्टमार्गेण याति मल्लयता नर ।।८३
तस्य यज्ञवराहस्य विष्णोरमिततेजस ।
प्रणाम ये च कुर्वन्ति ते पूज्या सतत सुरै ।।८४
तस्मात् सुनियतैर्भाव्य वैष्णव मार्गता पदम् ।
दुर्ल्लभ वैष्णवत्व हि त्रिषु लोकेषु सुन्दरि ।।८५
जन्मान्तरसहस्रेषु समाराध्य वृषध्वजम् ।
वैष्णवत्व लभेत् कश्चित् सर्वपापक्षये सति ।
पापक्षयमवाप्नोति ईश्वराराधने कृते ।।८६
ज्ञानमन्विच्छता रुद्र पूजयेत् परमेश्वरम् ।

---

७७ -a) दे4 कल्पे (→कल्प–), द10 °सहस्राणि (→°सहस्रान्ते) -b) दे2 5-9 11 मुवे भवेत (→वसेत्) -d) दे2 नर (→तत ), द1 जन्मना तु शतानि षट, दे3 जन्मा तु दशतानि षट, द4 जन्मानि तु दसानि षट, द6*********, द7 सवसौख्य-समन्वित , दे10 जन्मायुतशतानि षट, त1 जन्यातीत भवेन्नर

७८ -b) द3 तियक् च (→स्तया च), दे3 °तल्पक (→°तल्पग ) -c) दे3 4 पापानेतानि (→पापान्येतानि) -d) दे1 2 10 ते1 शृण्वानो (→शृण्वतो), द1 दहति (→दहत), दे1 क्रमात् (→क्षणात्), दे5-9 11 मुवे श्रवणेनव नाशयेत्

७९ -a) दे7 पठेत (→पश्येत), दे1 पश्येत्वधीमान धनोपि भक्त्यो, दे6 पश्यच्च धीमानिधनोऽपि भक्त्या -b) दे2 7ते1 मनुष्या, दे5 8 9 मनुष्य, दे10 मनुष्यो, दे11 मनुष्ये (→मनुष्य[ ]), दे1-5 10ते1 दीपमान , मुवे चिन्त्यमान (→धीयमान ) -c) दे5 8 9 11मुवे भक्तस्य (→भक्त्याऽथ), दे6 शृणोति भक्त्या****
**, द7 शृणोति भक्त्या यदि वा श्रावयच्च -d) द2 ते1 विकल्मक (→विकल्मष ), द6 प्रयाति (→प्रयाति)

८० -a) मुवे दु स्वप्न (→दु स्वप्न), दे1 पच्यमान, दे5 गम्यमाने, दे6 9 11 मुवे पठ्यमान (→पठ्यमान) -b) दे5 8 9 11 मुवे माहात्म्ये (→माहात्म्य), दे5 8 9 11 मुवे °हारके (→°मोचन), दे5 8 9 11 मुवे नरस्य (→नराणा), दे1 महातपा भयभषेव नराणा, दै6 (महात्म्ये) भयापहार कुरुते नरस्य, दे7 भयापहार कुरुते नरस्य, दे10 माहात्म्य भवभय एव तन्नराणा -d) दे1 पुतात्मा, दे3 4 सातात्मा (→कृतात्मा), दे1 3 4 °वर (→°पर) -cd) दे5-9 11 मुवे य कुर्याद् व्रतवरमेतदव्यया या बोधिन्या किमुतफल तु त (दे7 ततो)स्य वाच्यम, दे10 य कुर्यात्किचनेदेत्यु सम्यक शातात्मा व्रतप्रवर प्रबोधनाख्य

८१ -a) दे10 मति-योसे कृतार्थाश्च -c) दे3 त रास, दे4 त सार, दे5 9 11 मुवे तैरात्म- (→तैरास), दे1 जन्मना सार, दे5 8 9 11 मुवे -जन्मसफल, दे6 7 -जन्मसाफल्य (→जन्मन सार) -d) दे5-9 11 मुवे कृत ये व्रतकारका (दे6 7°चारिण )

८२ -b) दे3 4 नरा , दे6 -मरा (→नर ) -c) दे1 4-9 11 मुवे ते1 भूमे (→भूमि) -d) दे6 7 मल्लोकता (→मल्लयता), दे1 हि स , दे6 7 नर (→प्रिये)

८३ -c) दे3 4 गुरोपदेश° (→गुरूपदिष्ट°) -d) दे6 7 मल्लोकता (→मल्लयता), द6 नरा (→नर )

८४ -c) दे6 8 9 11 प्रमाण, मुवे प्रयाण (→प्रणाम), दे1 3 4 ये प्र-, दे10 ते1 येपि (→ये च) -d) दे1 नरा , दे6 7 नरै (→सुरै )

८५ -a) दे6 भाव्यै (→भाव्य) -b) दे6 वैष्णव्य- (→वैष्णव), दे1 वैष्णवै मग्निना पद, दे3 4 वैष्णव मागती पद, दे10 वैष्णव मागमुत्तम, मुवे वैष्णव मागमास्पदम

८६ दे4 d-f ○ -a) दे2-4 10ते1 °सहस्रेण (→°सहस्रेषु) -b) दे6 ममराध्य वषा द्विज, ते1 आराध्य वृषभध्वजम् -d) दे1-3 10ते1 °क्षय (→°क्षये), दे1-3 10ते1 विना (→सति) -f) मुवे चेश्वरा° (→ईश्वरा°), दे2 3 10ते1 शुभे (→कृते)

८७ -b) दे1 पूज्य स्यात् (→पूजयेत्), दे1 3 परमेश्वर. (→परमेश्वरम्) -c) दे1 सयाति, दे3 4 यज्ञाति, दे10 गच्छन्ति

मा समाराध्य सयाति तद् विष्णो परम पदम् ।
वैष्णवा हि महाभागे पुनन्ति सकल जगत् ।।८७
सस्मृत कीर्त्तितो वाऽपि दृष्ट स्पृष्टोऽपि वा प्रिये ।
पुनाति भगवद्भक्तश्चाण्डालोऽपि यदृच्छया ।।८८
एतज् ज्ञात्वा तु विद्वद्भि पूजनीयो जनार्दन ।
वेदोक्तविधिना भद्रे आगमोक्तेन वा सुधी ।।८९
यम उवाच ।❀
एतच्छ्रुत्वा महाभागा धरणी सशितव्रता ।
समाराध्य जगन्नाथ विधिना तल्लय गता ।
अतो यत्नेन वै साध्य वैष्णवत्व विपश्चिता ।।९०
ये वैष्णवा महात्मानो विष्णुपूजनतत्परा ।
तेषा नैवास्त्यय लोको यान्ति तत् परम पदम् ।।९१
ये सकृद् द्वादशीमेतामुपोष्यन्ति विधानत ।
प्रबोधनाख्या सुधियस्ते यान्ति परम पदम् ।।९२
न यम किङ्करान् दण्डान् नरकाश्च न यातना ।
पश्यन्ति द्विजशार्दूल इति सत्य मयोदितम् ।।९३
एतत् ते सर्वमाख्यात यथातत्त्व यथाश्रुतम् ।
कथित ते महाभाग यत्त्वया परिपृच्छितम् ।।९४
स्वयभुवा यथा प्रोक्त गुह्याख्यान महामुने ।
तत्ते सर्वं समासेन व्याख्यात धर्मवत्सल ।।९५ वे २/१ ९९

।। इति श्रीवराहपुराणे भगवच्छास्त्रे नवाधिकद्विशततमोऽध्याय ।।२०९।।

---

(→सयाति), दे5-9 11 मुवे मा(दे6 7 स)माराध्य तथा (दे7 यथा) याति -d) दे10 वैष्णव (→तद्विष्णो ) -e) दे5 9 11 मुवे °भागा (→°भागे)

८८ -a) दे1 सस्मृता, दे सस्मत्त, दे4 सस्मात (→ सस्मृत ), दे3 कीर्त्तिता (→कीर्त्तितो) -b) दे6 दष्टै, ते1 हृष्ट (→दष्ट ), दे1 स्पष्टोथ, ते1 पुष्टोपि (→स्पष्टोऽपि) -c) दे2ते1 भक्त्या (→भक्तश), दे3 पुनाति मभवद्भक्त, दे4 पुनाति मम भक्त्या च

८९ -a) दे1 3 4 एव (→एतद), दे7 हि (→तु) -c) दे7 देवोक्त° (→वेदोक्त°), दे10 सर्वैर (→भद्रे) -d) दे1 प्रभु, दे6 सुधे, दे10 पुन (→सुधी )

❀ दे10 यम उ०

९० दे3 d ○ -b) दे4 10 शसित° (→सशित°) -c) दे6 ममाराध्य (→समाराध्य), दे4 अवाप्य परमा मुदम, दे6 विधिना तत्क्षय गता -f) दे2 4 ते1 वैष्णवेन, दे10 दुलभ हि (→वैष्णवत्त्व), दे1 वैष्णवेनाविपश्चिता

९१ -a) दे4 10 ये वैष्णवो, दे7 वैष्णवाना (→ये वैष्णवा) -b) दे10 विष्णुरूपेण तत्परा -c) दे3 लोके (→लोको), दे6 तेषा नैवास्म्यह लोके -d) दे1 10 ते (→तत)

९२ दे3 4 ○ -b) दे1 6 उपोषन्ति (→उपोष्यन्ति) -c) दे1 6 प्रबोधनाख्य (→प्रबोधनाख्या)

९३ -a) दे1 न यम किकारान् दण्ड–, दे2 3 ते1 न यम किकरा दण्डा, दे5 8 9 11 न यम यातनादण्डान्, दे6 7 याम्यान (दे6 यस्यान) यातना दण्डा -b) दे1 3 4 नरकानि (दे1 °न्न) न यातना, दे5 9 11 मुवे नरक न च किङ्करान -d) दे6 7 सत्यमेत मयोदितम

९४ दे6 7 cd ○ -b) दे1 यथातत्त, दे4 यथा यत्त्वा, मुवे यथा दष्ट (→यथातत्त्व) -c) दे2 मुवे मे (→ते) -d) दे1 यक्रमा पृष्टवान् खलु

९५ दे6 7 cd ○ -d) दे3 4 आरयात(→व्याख्यात) दे1 5 8 9 °वत्सल, दे2 4 °वत्सला (→°वत्सल)

**पुष्पिका—**

**पुराणनाम**—दे6 ○, दे1 2-5 8-11 ते1 इत्यादि वाराहपुराणे, दे3 इत्यादि श्रीवाराहपुराणे, दे4 इत्यादि वराहपुराणे भगवच्छास्त्रे, दे7 इति श्रीआदिवाराहपुराणे भगवच्छास्त्रे, मुवे इति श्रीवाराहपुराणे **अध्यायनाम**—दे1 2 4 6 10 11 प्रबोधिनीमाहात्म्य (दे6 °त्म्ये), दे3 5 8 9 ते1 प्रबोधिनीमाहात्म्य नाम, दे7 हरिबोधिनीमाहात्म्य नाम अध्याय, मुवे पापनाशोपवणन नाम **अध्यायसख्या—**दे1-7 9-11 ○, दे8 ।।११४।।, मुवे एकादशाधिकद्विशततमोऽध्याय ।।२११।।, ते1 सप्तविंशोत्तरशततमोऽध्याय

# २१०

नारद उवाच ।❀

२१२१ साधु साधु महाराज सर्वधर्मविदावर ।
त्वया तु कथिता दिव्या कथेय धर्मसहिता ॥१
अतोऽहमपि सुप्रीतस्तव धर्मपथे स्थित ।
तव वाक्यानि मृष्टानि प्रोक्तानि च श्रुतानि च ॥२
त्वयाऽहं चैव राजेन्द्र पूजितश्च विशेषत ।
गच्छामि त्वरितो लोकान् यत्र मे रमते मन ।
स्वस्ति तेऽस्तु महाराज अकम्पो भव सुव्रत ॥३
एवमुक्त्वा ततो यातो नारदो मुनिसत्तम ।
तेजसा द्योतयन् सर्व गगन भास्करो यथा ।
विचचार दिव रम्या कामचारी महामुनि ॥४
गते तस्मिस्तु सुचिर स राजा धर्मवत्सल ।
मा दृष्ट्वा सुमनो विप्रा वाक्यैश्चित्रैश्च वन्दयन् ॥५
कृत्वा पूजा च मे युक्ता प्रियमुक्त्वा च सुव्रत ।
विसर्जयामास विभु सुप्रीतेनान्तरात्मना ॥६
एतद्व कथित विप्रास्तस्य राज्ञ पुरोत्तमे ।
यथा दृष्ट श्रुत चैव यथा चेहागतो ह्यहम् ॥७

वैशम्पायन उवाच ।❀

तस्य तद्वचन श्रुत्वा हृष्टपुष्टास्तपोधना ।
साधु साधु इति प्रोक्ता विस्मयोत्फुल्ललोचना ॥८
केचिद् वैखानसास्तत्र केचिदासन्निरासना ।
यायावरास्तथा चान्ये वानप्रस्थास्तथा परे ॥९
शालीनाश्च तथा केचित् कापोती वृत्तिमास्थिता ।
तथाऽन्ये जगृहुर्वृत्ति सर्वभूतदया शुभाम् ॥१०

---

२१०

[ब1-৩ अध्यायोऽय नास्ति]

❀ दे1 10 नारद उ०

१ –a) दे6 महाभाग (→महाराज) –d) दे3 4 °सहिता (→°सहिता)

२ –a) दे3 4 अहो° (→अतो°) –c) दे1 वाक्यानि पृष्टानि, दे3 4 6 7 वाक्यानि मिष्टानि, दे5 8 9 वाक्यानि सृष्टानि, मुवे वाक्यान्निस्सृतानि (→वाक्यानि मृष्टानि) –d) दे6 7 पुण्यानि (→प्रोक्तानि), दे10 श्रुतानि मे (→श्रुतानि च)

३ –c) दे6 त्वरिता (→त्वरितो) –d) दे3 10 ते (→मे) –e) दे6 स्वस्ति तस्तु, दे7 स्वस्ति तेस्त (→स्वस्ति तेऽस्तु) – f) दे1 तु कप्यो, दे3 4 10 अकप्यो, मुवे त्वकम्पो (→अकम्पो)

४ –a) दे6 7 एतच्छ्रुत्वा, दे8 10 11 एवमुक्ता (→एवमुक्त्वा) –b) दे1 6 7 °पुगव , दे2 ते1 °सत्तम (→°सत्तम ) –d) दे3 गगनो (→गगन) –e) दे3 4 9 10 ते1 दिव रम्य, दे6 दिव्यै रम्या (→दिव रम्या) –f ) दे4 कामाचारी, दे5-9 11 मुवे कामचारो (→कामचारी)

५ दे3 4 d ○ –c) दे4 सुमुनो, दे6 स मना, मुवे सुमना (→सुमनो), दे1 विप्र, दे6 विप्र , दे7 विप्रा (→विप्रा) –d) दे6 7 चित्रैर्वाक्यै च नेदयान (दे7 नदयन्), मुवे वाक्यैश्चित्रवन्दयन

६ दे3 4 ○ –a) दे6 पूजा (→पूजा) –b) दे6 11 ते1 प्रियमुक्ता (→प्रियमुक्त्वा), दे2 10 ते1 सुव्रत , दे6 सव्रता , दे7 सुव्रता (→सुव्रत) –d) दे6 सुप्रेते° (→सुप्रीते°)

७ दे3 4 a ○ –b) दे5 8 राज्ञ, दे9 राज (→राज्ञ ) –d) दे1 तथा (→यथा), दे3 4 ते1 वेदागतो (→चेहागतो) दे6 यथा चैवागतिस्म्यह, दे7 यथा चवगतोस्यह

❀ ते1 ○, दे1 10 वैशपायन उ०, दे6 वैशपायन

८ –a) दे3 4 तस्या (→तस्य) –b) दे1 हृष्टस्तुष्ट सुयोधन –c) दे1 10 साधु साध्विति ते (दे10 च) प्रोक्ता, दे5-9 11 मुवे साधुसाध्विति चैवोक्त्वा (दे6 7 11 °क्ता) –d) दे1 °लोचना, दे6 7 °लोचन (→°लोचना )

९ दे5 9 11 मुवे पुस्तकेषु ९ab, ८ b चरणात्पर अस्ति, दे3 4 d ○ –c) दे3 4 या या वरास्तथा राज्ञे, ते1 पापा नरास्तथा चान्ये

१० दे3 4 ○ –a) दे1***श्च तथा केचित्, दे6 7 शालीनाश्च **** –b) दे1 कौपीना, ते1 कापोती (→कापोती) –c) दे1 ये चान्ये जगृहु पूव, दे5 8 9 11 मुवे तथा चान्ये जगृहुर्वत्ति

शिलोञ्छाश्च तथैवान्ये काष्ठान्ताश्च महौजस ।
अपाकपाचिन' केचित् पाकिनश्च क्वचित् पुन ।।११
नानाविधिचरा केचित् केचिदात्मविनिर्जिता ।
स्थानमौनव्रता केचित् तथान्ये जलशायिन ।।१२
तथोर्ध्वशायिकाश्चान्ये तथान्ये मृगचारिण ।
पञ्चाग्नयस्तथा केचित केचित् पर्णफलाशिन ।।१३
अब्भक्षा वायुभक्षाश्च तथान्ये शाकभक्षिण ।
अतोऽन्येऽति तथा तीव्र तपश्च प्रतिपेदिरे ।
तपसोऽन्यन्न चास्तीति चिन्तयित्वा पुन पुन ।।१४
जन्मनो मरणाच्चैव केचिद् धीरा महर्षय ।
त्यक्त्वा धर्ममधर्मं च शाश्वते नियमे स्थिता ।।१५

वैशम्पायन उवाच ।❀

श्रुत्वा चैव कथामेतामृषयो दिव्यवर्चस ।
जगृहुर्नियमास्तास्ताञ्छुभहेतोरनिन्दिता ।।१६
नाचिकेतोऽपि धर्मात्मा पुत्रं दृष्ट्वा तपोधनम् ।
प्रीत्या परमया युक्तो धर्ममेवान्वचिन्तयत् ।।१७
वेदार्थममितं विष्णुं शुद्धं चिन्मयमीश्वरम् ।
[चिन्तयामास धर्मात्मा तप परममास्थित ।।१८
इदं तु परमाख्यान भगवद्भक्तिकारकम् ।]
शृणुयाच्छ्रावयेद् वापि सर्वकामानवाप्नुयात् ।।१९ ३ २१२

।। इति श्रीवराहपुराणे भगवच्छास्त्रे दशाधिकद्विशततमोऽध्याय ।।२१०।।

---

११ दे3 4 a, d ◯ –a) दे1 शिलोञ्छिनस्तथा वान्ये, दे6 7**** तथैवान्ये, दे11 ते1 शिलोञ्छाश्च तथैवान्ये –b) दे1 3 4 10 ते1 काष्ठोत्थाश्च, दे6 7 नैष्ठिकाश्च (→काष्ठान्ताश्च), दे1 कस्थोन्ताश्च तामसा –c) दे1 3 4 10 °पाकिन (→°पाचिन)

१२ दे3 4 ◯ –a) दे1 विधवरा, दे5 8 9 11 मुवे विधिघरा (दे8 °रा, दे11 °रा), दे6 व्रतघरा, दे7 व्रतघरा (→ विधिचरा) –b) दे2 ते1 केचिदात्मा न निर्जिता, दे5-9 11 मुवे जितात्मानस्तु केचन, दे10 केचिदात्मजितोभवन् –c) ते1 स्नान° (→स्थान°)

१३ दे3 4 ab ◯, दे10 cd ◯ –a) दे9 तयोघ्व° (→तथोघ्व°), दे3******श्चायि, दे4 ****** तथा, दे7 तथो घ्वशायिन केचित –b) दे1***, दे3 काश्चान्ये, दे4 अन्ये च (→तथान्ये), दे3 मृगवारिण, दे4 8 मृगवारिणा, दे6 मतवारिणी (→मृगचारिण)

१४ –a) दे1 3 अभक्ष्या, दे6 अभवा, दे11 अद्भक्षा, ते1 अभक्षा (→अब्भक्षा), दे3 4 8 9 °भक्ष्याश्च (→°भक्षाश्च) –b) दे1 3 10 ते1 °भक्षणा, दे4 °भक्षका (→°भक्षिण) –c) दे4 आथोभ्योति तथा तीव्र, दे5 8 9 11 मुवे अतोऽन्येऽप्यति तीव्र वै, दे6 7 अतोन्यम (दे7 °द) पि तीव्र वै, दे10 अथान्यन्यत्तथा तीव्र –d) दे3 ततश्च (→तपश्च), दे5 8 9 11 मुवे तपश्चैव प्रपेदिरे, दे6 7 तपो (दे7 °मो) ये प्रतिपेदिरे –e) दे1-4 ते1 तपसा न त (दे1 स) दस्तीति

१५ –a) दे3 4 जन्मना, दे10 जन्मतो (→जन्मनो), दे3 4 मरण चैव, ते1 मरणाश्चैव (→मरणाच्चैव) –b) दे2 धीरा, + भीता, दे3 8 11 ते1 वीरा, दे10 भीता (→धीरा) –d) दे2 ते1 शाश्वत (→शाश्वते), दे3 4 शाश्वता नियमे स्थिताम्, दे5-9 11 मुवे शाश्वती (मुवे °ती) धियमास्थिता (दे7 °त)

❀ दे10 मुवे ◯, दे1 9 वैशम्पायन उ०

१६ –a) दे1 श्रुत्वा चैव कथा दिव्या –d) दे4 सुख°, मुवे भय° (→शुभ°), दे6 शुशुभेतोरनिंदका

१७ –a) दे1 6 7 नासि–, दे3 नासे–, दे4 नास्ति (→ नाचि–), दे2 °केतोपि, + °केत तु (→°केतोऽपि) –b) मुवे पुत्रो (→पुत्र) –d) दे1 धर्ममेवानुसश्रिता, दे2 ते1 घममेवानुसेवित दे3 4 10 धममेवानुसेवत (दे10 °ते), दे7 घममेवानुचिंतयत

१८ दे1-4 10 ते1 cd ◯ –a) दे1 वेदागतमित, दे2 ते1 वेदाथगमित, दे3 वेदथ इति त, दे4 वेदाथनियत, दे7 वेदाथ मपि त, दे10 देवाथगमित (→वेदाथममित) –b) दे1 शुद्धातितमिद सदा, दे5 9 11 मुवे श्रद्धान्वितमिद सदा, दे10 श्रद्धान्वित इद पठेत

१९ दे1-4 10ते1 ab◯ –a) दे6 इद तु परमाख्य तु –d) दे1 7 सर्वान्कामान्, दे3 सर्वाथमान्, दे4 सर्वधर्मान् (→सवकामान्)

**पुष्पिका**—

**पुराणनाम**—दे1 इत्यादि वाराहपुराणे भगवच्छास्त्रे, दे2 3 इत्यादि वा(दे3 श्रीवा)राहपुराणे भगवच्छास्त्रे, दे4 इत्यादि श्रीवाराहपुराणे भगवच्छास्त्रे प्रागितिहासे, दे5 8 9 11 इत्यादि वाराहपुराणे प्रागितिहासे, दे6 इति, दे7 इति श्रीआदिवाराहपुराणे, दे10 ते1 इत्यादि वाराहपुराणे, मुवे इति श्रीवराहपुराणे प्रागितिहासे **अध्यायनाम**—दे1 ससारचक्रोपाख्याने प्रबोधिनीमाहात्म्य, दे2 ससारचक्रो प्रबोधनिसमाप्तम्, दे3 4 ससारचक्रोपाख्यान प्रबोधनी माहात्म्य समाप्तम, दे5 8 9 11 ससारचक्रोपाख्याने प्रबोधनीय समाप्त, दे6 ससारचक्रोपाख्याने, दे7 ससारचक्रोपाख्यान नामाध्याय, दे10 वैशपायनीय, मुवे ससारचक्रोपाख्याने प्रबोधनीय नाम, ते1 ससारचक्रोपाख्यानप्रबोधनीसमाप्तिर्नाम **अध्यायसख्या**—

# २११

सूत उवाच ।❀

वे २१३ १ पुरा देवैर्विनिहते सग्रामे तारकामये ।
अत्युच्छ्रिते प्रतिबले दानवाना बले तथा ॥१
लब्धपदे सहस्राक्षे क्षीणशत्रौ गतास्पदे ।
सम्यक् प्रसूतिमापन्ने त्रैलोक्ये सचराचरे ॥२
शृङ्गेऽति चाचलेन्द्रस्य मेरो सर्वहिरण्मये ।
मणिविद्रुमचित्रे च विपुले पङ्कजासने ॥३
सुखोपविष्टमेकाग्र स्थिरचित्त कृतक्षणम ।
निवृत्तकार्यमुदित सूर्यवैश्वानरद्युतिम् ॥४
प्रणम्य मूर्ध्ना चरणावुपगम्य समाहित ।
ब्रह्माण परिपप्रच्छ सनत्कुमार एव हि ॥५

सनत्कुमार उवाच ।❀

भगवञ्छ्रोतुमिच्छामि पुराणमृषिसम्मतम ।
गोकर्णं तु महाभाग त्वत्तस्तत्त्वविदावर ॥६
कथमुत्तरगोकर्णं दक्षिण च कथ विभो ।
शृङ्गेश्वरस्य परम कथ सम्यक् प्रतिष्ठितम् ॥७
क्षेत्रस्य किं प्रमाण स्यात् कि च तीर्थफल स्मृतम् ।
कथ पशुपतिस्तत्र भगवान् मृगरूपधृक् ॥८
सर्वैस्त्वत्प्रमुखैर्देवै कथमासादित पुन ।
मृगरूप कथ चास्य शरोर क्व प्रतिष्ठितम् ॥९

---

दे1-7 9 11 ◯, दे8 ॥११५॥, मुवे द्वादशाधिकद्विशततमोऽध्याय ॥२१२॥, ते1 अष्टविंशदुत्तरद्विशततमोऽध्याय

२११

[ब1-३ पुस्तके अध्यायोऽय नास्ति]

❀ दे1 9 10 सूत उ०

१ दे10 cd ◯ –a) दे8 9 दैवैर्, दे10 देवे (→देवैर), दे6 विनिहिते (→विनिहते) –b) दे2ते1 अत्युर्जिते, दे6 7 अनुथि (दे7 °त्थि) ते (→अत्युच्छ्रते), दे1 दैत्ये हते च प्रबले –d) दे1 3 ते1 बल, दे4 बल– (→बले), दे6 नवा (→तथा)

२ –a) दे2 4ते1 लब्धे (→लब्ध–), दे3 पाद–, दे4 पद– (→–पदे), मुवे सहस्राक्षे लब्धपदे –b) दे3 4 क्षीग (दे4 °णा) रात्रौ (→क्षीणशत्रौ), दे1-4 10 ते1 गत(दे2 ते1 °ता)स्पते, दे6 7 गता य (दे7 °प) दि (→गतास्पदे) –c) दे3 प्रश्रुति, दे4 श्रुतिसम, दे6 सक्रुति, दे7 प्रक्रुति (→प्रसूति), दे4 आपन्नै, दे9 आपन्नो (→आपन्ने)

३ –a) दे1 शृगोदि पावतद्रस्य, दे3 4 सृगेति चावलेद्रस्य, दे5-9 11 मुवे शृङ्गे चैवाचलेन्द्रस्य –b) दे6 7 मेरोरस्य (दे7 °म्य) (→मेरो सव–), दे1 मेरो सव हि लिब्धपदे –c) दे5-9 11 मुवे °विद्धे (→°चित्रे) –d) दे3 4 विदुले (दे4 °लो) (→विपुले), दे3 4 पकजाशने, दे6 सकटासने (→पकजासने)

४ –a) दे2 °मेवाग्र, दे3 4 °नेकाग्रे (दे3 °ग्र) (→°मेकाग्र) –b) दे2 ते1 °चित्त(→°चित्त), दे3 शतलक्षण, दे4 च तत्क्षणा, दे5 मुवे कृतेक्षण (→कृतक्षण) –c) दे1 निवत्त°, दे7 निवृत्त°, दे10 निवत्त° (→निवृत्त°), दे1 4 मुवे मुदित (→उदित)

५ –a) दे4 5 प्राणाम्य (→प्रणम्य), दे4 8 मूर्द्धा(→मूर्ध्ना) –b) दे5 9 11 मुवे °गह्य (→°गम्य), दे6 7 कृताजलि (→समाहित ) –c) दे1 ब्राह्मणान दे3 ब्राह्मण, दे4 ब्रह्माणा (→ब्रह्माण), द3 ब्राह्मग परिपच्छन, दे6 7 सनत्कुमार पप्रच्छ, ते1 ब्रह्माण परिपच्छत –d) दे5 8 9 11 कुमार सनतपूवक दे6 7 ब्रह्मा (दे6°ह्म) ण परम (दे6 °म) द्युति , मुवे कुमारो नातिपूवक

❀ दे1 10 सनत्कुमार उ०

६ दे6 7 cd ◯ –b) दे2 4 10 ते1 °सम्मित, दे3 °सस्मित, दे5 7-9 11 मुवे °सस्तुत, दे6 °सयुत (→°सम्मत) दे5 7 9 11 मुवे पुराण (→गोकण), दे5**, दे8 त्वतस (→–भाग) –d) दे1 तीथ ब्रह्मविदावर, दे3 8 तत्वतत्ववता (दे8 °स्त विदा) वर, दे4 तत्व तवा*ता वर, दे10 त्वत्त सत्ववतावर

७ –a) दे1 °गोकण–, दे4 °गोकर्णा (→°गोकण) –b) दे3 4 दाक्षिणा, दे5 दक्षणा, दे8 दक्षण, ते1 दक्षिणे (→दक्षिण), दे3 4 कथा (→कथ) –c) दे3 4 सृगे° (→शृङ्गे°), दे6 प्रथम, दे10 भ्रमत (→परम) –d) दे6 7 विनि (दे7 °ति) ष्ठति (→प्रतिष्ठित)

८ दे3 4 ८–९ ◯ –b) दे10 किंस्वित, ते1 किञ्चित (→किं च) –d) दे2 5 8 9 मुवे भगवन (→भगवान), दे1 मत्यरूपधक, दे6 7 मगरूपधत (दे7 °भृत) (→मृगरूपधृक)

९ दे3 4 ◯ (द्र ८ पा वि ) –a) दे6 9 सर्वे, दे8 स वै (→सर्वैस), दे1 10 तत् (→त्वत) –b) दे1 °मासादितु, दे6 7 °मासादित (→°मासादित ), दे6 7 पुरा (→पुन )

यथा यत्र च यस्तत्र विधिसम्यगनुष्ठितम् ।
तत्सर्वं निखिलेनाशु ब्रूहि मे वागविदा वर ॥१०
एवमुक्त स भगवान् ब्रह्मा ब्रह्मविदा वर ।
उवाच तस्मै पुत्राय गुह्यमेतत् पुरातनम् ॥११
ब्रह्मोवाच ।❀
शृणु वत्स महाभाग यथा तत्त्व ब्रवीमि ते ।
पुराणमेतद् ब्रह्मर्षे सरहस्य यथाश्रुतम् ॥१२
अस्ति भूधरराजस्य मन्दरस्योत्तरे शुचौ ।
मुञ्जवान् नाम शिखरी नन्दनोपवनद्युति ॥१३
वज्रस्फटिकपाषाणप्रवालाङकुरशर्कर ।
नीलामलशिलावर्णगुहानिर्झरकन्दर ॥१४
विचित्रकुसुमोपेतैर्लतामञ्जरिधारिभि ।
रेजे य प्रांशभि शृङ्गैरुल्लिखद्भिरिवाम्बरम् ॥१५
दर्यस्तत्राधिक रेजुर्नानाधातुपरिस्रवै ।
शिलीन्ध्रकसुमोपेताश्चित्रिता इव सर्वत ॥१६
तत्र केतकिखण्डाश्च कुन्दखण्डाश्च पुष्पिता ।
उन्मीलिता इवाभान्ति धातकीवनराजिभि ॥१७
भिन्नेन्द्रनीलविमलैर्धौतै प्रस्रवणाम्बुभि ।
चित्रै कुसुमसछन्नै शिलाप्रस्तरविस्तरै ॥१८
शक्रचापनिभै रम्यै कुबेरभवनद्युति ।
तस्मिन्नगवरे हृष्टा विहरन्त्यमरस्त्रिय ॥१९
कूजद्भि शिखिभिर्मत्तै नृत्यद्भिश्चाप्सरोगणै । वे २१३ २०

१० -a) दे1 5 8 9 तत्र (→यत्र), दे3 वस्तत्र च, दे4 च सवत्र, दे10 च तास्तत्र (→च यस्तत्र) -b) दे1 5 8 9 मुवे ते1 विधि, दे10 विधि (→विधि-), दे1 8 11 मुवे अनुष्ठित (→ अनुष्ठित), दे6 7 सम्यग्विधिरनुष्ठित -c) दे1 6 निखिल चा (दे6 ना) शु (→निखिलेनाशु) -d) दे10 वेद-, ते1 वाक्य- (-मे वाग), दे1 3 वर (→वर)

११ दे6 7 cd ○ -b) दे3.4**ब्रह्म दे6 ब्रह्मा ब्रह्मा दे8 ब्रह्मा**, दे10 ब्रह्मा वेद-(→ब्रह्मा ब्रह्म-), दे1 3 5 8 9 11 वर, दे6 7 पति (→वर ) -d) दे1 गुहा (→गुह्य)

❀ दे6 7 ○, दे2 ब्रह्मो उवाच, दे3 4 ब्रह्म (दे4 °ह्मा) उवाच, दे10 ब्रह्मो०

१२ -b) दे3 4 तच्च (→तत्त्व) -ab) दे6 7 सनत्कुमार सवज्ञ एव (दे6**) माह पितामह -c) दे3 4 ब्रह्मण्ये (दे4 °ण्यो) (→ब्रह्मर्षे) -d) दे7 मया (→यथा-), दे6 रहस्य च मया श्रुत

१३ -a) दे6**, दे7 कथ (→अस्ति) -b) दे1 शुभौ, दे11** (→शुचौ) -c) दे7 मजुवान, दे9*जवान, दे10 मजवान, ते1 मजुला (→मुञ्जवान), दे1 7 9 10 मुवे शिखरो (→शिखरी) -d) दे6 °पवनो (→°पवन-)

१४ -a) दे6 °स्फोटिक- (→°स्फटिक-), दे1 6 9 11 मुवे -पाषाण (→-पाषाण-) -b) दे1-ककर, दे2ते1 -शकरा, दे10 -शकर(→-शकर ), दे6 प्रवार कुरु शकर -c) दे1 नील-मणि-, दे10नीलामन, ते1लीलामल-(→नीलामल-), दे1 -कण-, दे4 -वर्णा, दे10 -वण, मुवे -वर्णो(→-वण-) -d) दे5 8 9 11 गुहो, ते1 गहा (→-गुहा-), दे1-4 ते1 -कन्दरा, दे7 -कन्धर, (→-कन्दर ), दे7 स्फाटिकोत्तरकधर

१५ -a) दे4 °पोतैर् (→°पेतैर्) -b) दे1 3 ल्ता (→ लता-), दे3 मुजरि,दे5 8 9-मजर-,ते1-मजलि-(→-मञ्जरि-) -c) दे6 7 राजतै दे10 रेजेयै (→रेजे य ) -d) दे3 4 इवातर (→इवाम्बर), दे6 ते1 न लिख (ते1 रूक्षव) द्भिरिबावर

१६ दे4 cd ○ -a) दे1 दर्ग्रास, दे6 त्रयस दे7 दयास, ते1 तपस (→दयस), दे7 तत्राधिका (→तत्राधिक), दे6 ग्रेत् (→ रेजुर) -b) दे3 नाग्रा° दे7 ताना° (→नाना°), दे3 4 °श्रवै दे10 °प्लवै ते1 °स्तलै (→°स्रवै ), दे1 नानारत्ना शिलोच्चया -c) दे1 शिलेन्ध्र°, दे2-4 शिलिन्ध्र° (→शिलीन्ध्र°), दे6 शिलीत्र कुसु*** दे7 शिलीव कुसुमैश्चित्रैश -d) दे7 तव (→इव)

१७ दे4 ab○ -a) दे5 8 9 11मवे तेऽत्र(→तत्र), दे1 °रन्धाश्च (→°खण्डाश्च) -b) दे6 कुद- दे11 कुद (→कुन्-), दे3 कुडखाडस्य पुष्पिता -c) दे3 4 उन्मिलिता, दे6 7 उन्मीलित (→उ मीलिता), दे3 5 7 इवाभाति, दे6 इवाभामि (→इवा भान्ति) -d) दे1 धातुकी°, दे3 4 घातकि° (→धातकी°), दे6 °राजिते (→°राजिभि )

१८ -a) दे1 इन्द्रनीलमयेर्दिव्यै -b) दे3 4 धौ*, दे5 धौतो (→धौतै ), दे1 धौतैश्च श्रवणात्मभि -c) दे4 विचित्रै (→ (→चित्रै ), दे8 कुसुम (→कुसुम-), दे1 8 सछन्नै, दे3 6 7 -सछिन्नै (→-सछन्नै )

१९ -a) दे4 °निभै **, दे11°निभैरन्यै (→°निभै रम्यै ), दे1 शक्रचापिभि रम्यैश्च -b) दे3 कुबेर-, ते1 कुलेन (→कुबेर-), मुवे °द्युतौ (→°द्युति ) -c) दे1 दृष्ट्वा दे5 7-9 11 मुवे रम्ये (→हृष्टा) -d) दे1 व्यहरत्वमरस्त्रिय, दे3 4 विहरत्परमस्त्रिय, दे5 8 9 मुवे महोरगनिषेविते, दे7 नानामृगनिषेविते

अत पर दे5 9 11 मुवे अधिकम—
*क्रीडद्भिर्देवमिथुनैर्नृत्यद्भिश्चाप्सरो गणै ।

२० दे5-9 11 मुवे ते1 cd○ -a) दे3 4 मर्त्यै (→ मत्तै ) -b) दे1 3,4,10 नृत्य चा (दे1 °त्य वा, दे10 °त्यैश्चा)

अनङ्गहीने वेदाना पारगे साधुवर्त्तिनि ।
सदाचारयुते दद्यादल्पवित्तेऽपि भूतले ॥१४॥

षडिभ पात्रैरुपेत च ब्राह्मणाय निवेदयेत् ।
एक मधुघृत पात्र द्वितीय घृतपूरितम् ॥१५॥

तृतीय तिलतैलस्य चतुर्थं गुडसयुतम् ।
पञ्चम लवणापूर्णं षष्ठ गोक्षीरपूरितम ॥१६॥

एतान् दत्त्वा रसान राजन सदा जन्मान्तरे भवेत् ।
सुभगो दर्शनीयश्च नारी वा पुरुषोऽपि वा ॥१७॥
—(p 75)

[च चि (व्र ख) P 479 480, ग र P 541 L1 2, ज क P 182 L5 7]

[–L3 च चि महाराज (→महाभाग) –L5 ज क पक्षगा (→पक्षत) –L6 च चि उपोषितेन नक्तेन –L7 च चि, ज क वा उमया (→चाप्युमया) –L9 च चि श्री कण्ठेति च वै उर –L12 च चि हर वा गौरी सयुक्त –L16 च चि कृत्वाप्येव (→कृष्णेऽप्येव) –L17 च चि द्वितीया तु (→द्वितीयाया) –L23 च चि खडगै पात्ररुपेतश्च –L26 च चि सयुत (→पूरितम) –L27 च चि सत्त (→सदा)]

## कृत्यकल्पतरु
## (व्रतकाण्ड)

(वराहपु०) अध्याय ५९

अविघ्नचतुर्थीव्रतम्—

अगस्त्य उवाच ।

तथाविघ्नव्रत राजन् कथयामि शृणुष्व तत्
[येन सम्यक् कृतेनेह न विघ्नमुपजायते] ॥१॥

चतुर्थ्यां फाल्गुने मासि गृहीतव्य व्रत त्विदम् ।
नक्ताहारेण राजेन्द्र तिलान्न पारण स्मृतम् ।
तदेवाग्नौ च होतव्य तद्देय ब्राह्मणाय च ॥२॥

चातुर्मास्य व्रत देव कृत्वा वै पञ्चमे तथा ।
सौवर्णं गजवक्त्र च कृत्वा विप्राय दापयेत् ॥३॥

पायसै पञ्चभि पात्रैर्व्यपेतसलिलैस्तथा ।
एव तस्य व्रत कृत्वा सर्वविघ्नै स मुच्यते ॥४॥

हयमेधस्य विघ्ने तु कृतवान् सगर पुरा ।
एतदेव चरित्वा तु हयमेध स आप्तवान् ॥५॥

तथा रुद्रेण देवेन त्रिपुर निघ्नता पुरा ।
एतदेव कृत यस्मात् त्रिपुर तेन पातितम् ।
तथा तु गच्छता स्वर्गं त्वेतदेव व्रत कतम् ॥६॥

अन्यैरपि महीपाले पृथिवी विजिगीषुभि ।
तपोर्थिभिर्यज्ञकृते विघ्नोपशमन परम् ॥७॥

दिव्याय शूराय गजाननाय ।
लम्बोदरायैकरदासुराय
[नगात्मजादेहमलोद्भवाय ।
कुठारहस्ताय नभश्चराय ।
एव प्रपूज्य स्तुतिभि पुनश्च ।
होम कुर्याद्विघ्नविनाशहेतो ॥८॥
—(p 82)

[च चि (व्र ख) P 525 L5,8,11,13,16-22 ○, ज क P 221 L8 12,16 22 ○]

[–L1 च चि ज क अथविघ्नहर राजन कथयामि तवानघ –L4 ज क तिलाना (→तिलान्न) –L5 ज क ब्राह्मणेष च –L6 ज क चैव कृत्वैव (→देव कृत्वा वै), च चि चातुर्मास्यव्रत चैव कृत्वेत्थ पञ्चमे तथा –L7 च चि राजत वापि (→गजवक्त्र च) –L9 ज क इत्थ व्रतमिद कृत्वा सर्वविघ्नात्प्रमुच्यते –L10 च चि यज्ञे (→विघ्ने), च चि, ज क सजाते (→कृतवान) –L11 ज क समाप्तवान (→स आप्तवान) –L13 च चि, ज क एतदेव हरश्चक्रे त्रिपुर (ज क °रो) येन हन्ति च (ज क घातित) –L14 च चि, ज क मया समुद्रमथने त्वेतदेव व्रत कृतम –L15 च चि, ज क अन्यैरपि महीपालैरेतदेव पुरा कृतम ]

## चतुर्वर्गचिन्तामणि
## (व्रतखण्डे)

(वराहपु०) अध्याय ५९

अनेन कृतमात्रेण सर्वविघ्नै प्रमुच्यते ॥९ab॥
—(p 525)

[ज क p 221]

## कृत्यकल्पतरु
## (व्रतकाण्डे)

(वराहपु०) अध्याय ६०

शान्तिपञ्चमी—

अगस्त्य उवाच ।

शान्तिव्रत प्रवक्ष्यामि तव राजन् शृणष्व तत् ।
येन चीर्णेन शान्ति स्यात्सवदा गृहमेधिनाम् ॥१॥
पञ्चम्या शुक्लपक्षस्य कार्तिके मासि पार्थिव ।
आरभ्य वर्षमेक तु भुञ्जीताम्बुविवर्जितम् ॥२॥

नक्त देव तु सम्पूज्य हरि शेषोपरि स्थितम् ।
अनन्तायेति पादौ तु **कटि वासुकये तथा** ॥३॥
तक्षकायेति जठरमुर कर्कोटकाय च ।
पद्माय कण्ठ सम्पूज्य महापद्माय **वै भुजौ** ॥४॥
शङ्खपालाय वक्त्र तु कुटिलायेति वै शिर ।
**पूर्व** विष्णगत पूज्य पथक **चैव प्रपूजयेत्** ॥५॥
क्षीरेण स्नपन कुर्यात् तानुद्दिश्य हरे पुन ।
तदग्रे होमयेत्क्षीर तिलै सह विचक्षण ॥६॥
एव सवत्सरा**ते त** कुर्याद् ब्राह्मणभोजनम् ।
**नागांश्च काञ्चनान कत्वा** ब्राह्मण**भ्यो** निवेदयेत ॥७॥
एव य कुरुते भक्त्या व्रतमेतन्नराधिप ।
तस्य शान्तिर्भवेन्नित्य **न नागेभ्यो** भय **भवेत** ॥८॥
—(p 96)

[च चि (व्र ख) P 556 557]

[–L1 च चि शान्तिव्रत प्रवक्ष्यामि शृणुष्वैकमना नप –L2 गहमेधिन (→गहमेधिनाम) –L4 भुञ्जीयादम्लवर्जितम –L5 नक्त तु पूजयेद्देव –L6 धतराष्ट्राय वै कटि –L8 दोयुगम (→वै भजौ) –L9 कुलिकायेति वै शिर –L10 विष्णु सर्वाङ्गमप्येव पथक चैव प्रपूजयेत –L11 हरिमुद्दिश्य वाग्यत –L12 तदग्नौ (→तदग्रे), नृपोत्तम (→विचक्षण) –L13 तपण (→भोजन) –L14 नाग तु काञ्चन कृत्वा स्वकर्णेन विधारयेत –L16 नागेभ्यश्चाभय तथा]

**कृत्यकल्पतरु**

**(व्रतकाण्डे)**

(वराहपु०) अध्याय ६१

कामषष्ठी—

अगस्त्य उवाच ।
कामव्रत महाराज शृणु मे गदतोऽधुना ।
येन कामा **सुसिद्धा स्युर्म**नसा चिन्तिता अपि ॥१॥
षष्ठ्या फलाशनो यस्तु वर्षमेक व्रत चरेत् ।
**माघमासे** सिते पक्षे **पञ्चम्या नक्त**भोजन ॥२॥
षष्ठ्या तु प्राशयेद्धीमान् **फलमेक तु पार्थिव** ।
ततो भुञ्जीत यत्नेन वाग्यत शुद्धमोदनम् ॥३॥
ब्राह्मणै सह राजेन्द्र अथवा केवलै फलै ।
तमेक दिवस स्थित्वा सप्तम्या पारयेन्नृप ॥४॥
अग्निकार्यं तु कुर्वीत गुहरूपेण केशवम् ।
पूजयित्वा विधानेन वर्षमेक व्रत चरेत् ॥५॥
षडवक्त्र कार्तिक गुह सेनानी **पावकात्मज** ।
कुमार स्कन्द इत्येव पूज्यो विष्णुश्च नामभि ॥६॥

समाप्तौ तु व्रतस्यास्य कुर्याद् **ब्राह्मणभोजनम्** ।
षण्मुख सवसौवण ब्राह्मणाय निवेदयेत् ॥७॥
सर्वे कामा समृद्ध्यन्ता मम देव **षडानन** ।
त्वत्प्रसादादिम भक्त्या गृह्यता विप्र माचिरम् ॥८॥
अनेन दत्त्वा मन्त्रेण ब्राह्मणाय सयुग्मकम् ।
तत कामा समृद्ध्यन्ति सव एवेह जन्मनि ॥९॥
अपुत्रो लभते पुत्रमधनो लभते धनम् ।
भ्रष्टराज्यो लभेद्राज्य नात्र कार्या विचारणा ॥१०॥
—(p 98)

[च चि (व्र ख) P 615 616]

[–L2 च चि समध्यन्ति (→सुसिद्धा स्युर) –L7 अथवा केवल फल –L8 पारण (→पारयेन) –L16 विधिना चिरम]

**कृत्यकल्पतरु**

**(व्रतकाण्डे)**

(वराहपु०) अध्याय ६२

आरोग्यसप्तमीव्रतम्—

अथापर महाराज व्रतमारोग्यसञ्ज्ञितम् ।
कथयामि पर पुण्य सवपापप्रणाशनम् ॥१॥
तस्यैव माघमासस्य सप्तम्या समुपोषित ।
पूजयेद्भास्कर देव विष्णुरूप सनातनम् ॥२॥
आदित्य भास्कर रवे भानो सूय दिवाकर ।
**इति मन्त्रेण** सम्पूज्यो **देव सर्वेश्वरो** रवि ॥३॥
षष्ठ्या चैव कृताहार सप्तम्या**मुपवासकृत्** ।
अष्टम्या चैव भुञ्जीत एष एव विधि क्रम ॥४॥
अनेन वत्सर पूण विधिना योऽचयेद्रविम् ।
तस्यारोग्य धन धान्यमिह जन्मनि जायते ।
परत्र च शुभ स्थान यद्गत्वा न निवत्तते ॥५॥
—(P 223)

[च चि (व्र ख) P 747]

[–L4 च चि विश्वरूप –L6 प्रभाकरेति सपूज्यो, विभु (→रवि) –L11 सुख स्थान]

**चतुर्वर्गचिन्तामणि**

**(व्रतखण्डे द्वितीयभागे)**

(वराहपु०) अध्याय ६३

अगस्त्य उवाच—

मासि भाद्रपदे **मासे शुक्लपक्षे सुरेश्वर** ।
**सप्तम्यामुपवासेन** पुत्रप्राप्तिपद **व्रतम्** ॥२॥

षष्ठ्या चव सुमकृत्या सप्तम्या **पूजयेद्धरिम्** ।
**देवैर्यमगत** देव मातभि परिवारिनम ।ˆ॥

**तत प्रभाते विमले ऽष्टम्या** प्रयतो हरिम् ।
प्राग्विधानेन गोविन्द अचयित्वा विधानत ॥४॥

**तस्याग्रत** कृष्णतिल सघृतर्ह**ममाचरेत** ।
ब्राह्मणान् भोजयेद् भक्त्या यथाशक्त्या **तु दक्षिणाम्** ॥५॥

तत स्वय तु भुञ्जीत प्रथम बिल्वमे**ककम** ।
पश्चाद् यथेष्ट भुञ्जीत स्नेहा**द्य षडरसान्वितम्** ॥६॥

प्रतिमासमनेनव विधिनोपोष्य मानव ।
कृष्णाष्टमीमपुत्रोऽपि लभेत् पुत्र न सशय ॥७॥

**वत्सरान्ते च गोयुग्म कृष्ण देय** द्विजातये ॥११cd॥

इद **पुत्रव्रत** नाम मया ते परिकीर्त्तितम् ।
एतत् कृत्वा नर पाप सवरेव प्रमुच्यते ॥१२॥

—(p 734)

**कृत्यकल्पतरु**

**(व्रतकाण्डे)**

(वराह पु०) अध्याय ६४

शौयव्रतम्—

अगस्त्य **उवाच ।**

अत पर प्रवक्ष्यामि शौयव्रतमनुत्तमम् ।
येन भीरोरपि महाशौर्यं भवति तत्क्षणात् ॥१॥

मासि चाश्वयुजे शुद्धा नवमी **साह्युपोषिता** ।
सप्तम्या कृतसकल्प स्थित्वाष्टम्या निरोदन ॥२॥

नवम्या **प्राशयेत्** पिष्ट प्रथम भक्तितो नृप ।
ब्राह्मणान्भोजयेद् भक्त्या देवी चव तु पूजयेत् ।
दुर्गा देवी महाभागा महामाया महाप्रभाम् ॥३॥

एव सवत्सर यावदुपोष्य **तु** विधानत ।
व्रतान्ते भोजयेद्धीमान् यथाशक्त्या कुमारिका ।४॥

हेमवस्त्रादिभिस्तास्तु भूषयित्वा स्वशक्तित ।
पश्चात्क्षमापयत्ता तु देवी मे प्रीयतामिति ॥५॥

एव कृते **भ्रष्टराज्यो** लभेद्राज्य **न** सशय ।
अविद्यो लभते विद्या **भीरु** शौर्यं च विन्दति ॥६॥

—(p 273)

[च चि (व्र ख) P 957 958, कृ र P 364 ]

[–L3 कृ र शुद्धा नवमी समुपोषित –L8 च चि कृ र. **विभिवन्नृप** (→तु विधानत) –L9 कृ र विप्रान् (→ग्रामान) –L10 च चि पूजयित्वा तु शक्तित –L12 च चि कृ वा (→कृन) ]

**कृत्यकल्पतरु**

**(व्रतकाण्डे)**

(वराहपु०) अध्याय ६५

सावभौम व्रतम्—

अगस्त्य उवाच ।

सावभौमव्रत चान्यत् कथयामि समासत ।
येन सम्यककृतेनाशु सावभौमो **भवेन्नृप** ॥१॥

कार्तिकस्य तु मासस्य दशमी शुक्लपक्षगा ।
तस्या नक्ताशनो नित्य दिक्षु शुद्धबलि हरेत् ॥२॥

विचित्रकुसुमभक्ष्यै **पूजयेच्च द्विजास्तथा** ॥३ab॥

सर्वा भवत्य सिद्धयन्तु मम जन्मनि जन्मनि ॥३ef॥

एवमुक्त्वा बलि **दत्त्वा तासु** शुद्धेन चेतसा ।
ततोऽधरात्रे भुञ्जीत दध्यन्न **च** सुसस्कृतम् ॥४॥

पूर्वं पश्चाद्यथेष्ट **च** एव सवत्सर नृप ।
य करोति **नृपो** नित्य तस्य दिग्विजयो भवेत् ॥५॥

—(P 309)

अथैकादशीव्रतानि—

अगस्त्य उवाच ।

एकादश्या तु यत्नेन **नक्त** कुर्याद्यथाविधि ।
मागशीर्षे तु शुक्लपक्षादारभ्याब्द विचक्षण ।
तदव्रत धनदस्येष्ट कृत्त वित्त प्रयच्छति ॥६॥

—(P 310)

**कृत्यकल्पतरु**

**(व्रतकाण्डे)**

(वराहपु०) अध्याय ६५

प्रकीर्णव्रतानि—

एकादश्या निराहारो यो भुङक्ते द्वादशी दिने ।
शुक्ले वा **यदि** कृष्णे वा तद्व्रत वैष्णव महत् ॥७॥

**एतद् विद्वान** सुघोराणि हन्ति पापानि पार्थिव ।
त्रयोदश्या तु नक्तेन धमव्रत**मिद स्मृतम्** ॥८॥

शुक्लपक्षे फाल्गुनस्य **तदारभ्य विचक्षण** ।
रौद्रव्रत चतुदश्या **कृष्णपक्षे विशेषत** ।
त माघमासादारभ्य पूर्णं सवत्सर नृप ॥९॥

इन्द्रव्रत पञ्चदश्या शुक्लाया **नक्तभोजनात्** ।
पितृव्रतममावास्यामिति **बीज तवोदितम्** ॥१०॥

दशपञ्च च वर्षाणि य एव कुरुते नृप।
तिथिव्रतानि कस्तस्य फल **ब्रूते** प्रमाणत ॥११॥

अश्वमेधसहस्राणि राजसूयशतानि च।
इष्टानि तेन राजेन्द्र कल्पोक्ता क्रतवस्तथा ॥१२॥

एकमेव **व्रत** हन्ति **कृत** पापानि नित्यश।
य पुन सव**मेवतत** कुर्यान्नर वरात्मज ॥१३॥

स शुद्धो विरजान् लोकानाप्नोति सकलान्नृप ॥२३॥

—(P 452)

[का वि P 425, 436, 450 L3 4, 11 15, च चि (व्र ख) P 982 L1 10, (का नि ख) P 633 L11 13 कृ र P 420 461 L1 13 व कौ P 42 L11, 12 ज क P 391 L 1 10]

[–L2 च चि भवेन्नर –L3 का वि शुक्लपक्षिका –L4 च चि मर्त्यो ज क नक्त (→नित्य), का वि तस्या नक्ताशनो राजन दिक्षु शुद्ध फल लभेत –L5 कृ र विचित्रै कुसुमैभक्त्या पूजयित्वाथ ब्राह्मणान –L8 कृ र ततो रात्रौ च भुञ्जीत तदन्नञ्च सुसस्कृतम –L11 का वि, व कौ नक्तेन नर, च चि भक्तेन नर (→यत्नेन नक्त) –L12 कृ र मार्गशीर्षे च शुक्लादौ]

## अपरार्कटीका

(वराहपु०) अध्याय ६६

अलाभे वेद**मन्त्राणां** पञ्चरात्रोदितेन **हि**।
**आचारेण प्रवर्त्तन्ते** ते मा प्राप्स्यन्ति मानवा ॥११॥

ब्राह्मणक्षत्रियविशा पञ्चरात्र विधीयते।
शूद्रादीना च तच्छ्रोत्रपदवीमुपयास्यति ॥१२॥

—(p 13)

[शू शि I P 73 L1 4]

[–L2 शू शि अविचारेण प्रपद्यन्ते तेषा प्राप्स्यन्ति मानवा]

## नित्याचारपद्धति

(वराहपु०) अध्याय ६६

**वेदेन** पञ्चरात्रेण **भिक्षायज्ञेन** च **द्विज**।
प्राप्योह नान्यथा वत्स वषकोट्ययुतैरपि ॥१८॥

—(P 509)

## अपरार्कटीका (याज्ञवल्क्यस्मृते)
## (आचाराध्याये)

(वराहपु०) अध्याय ७०

ये वेदमागनिमुक्तास्तेषा मोहाथमेव च।
सिद्धान्त**सञ्ज्ञक पूर्व** मया शास्त्र प्रदर्शितम् ॥४२॥

**पशुर्यो**ऽपशुभावस्थ स यदा पतितो भवेत्।
तदा पाशुपत शास्त्र ज्ञायते **विश्वमोहकम्** ॥४३॥

—(P 12)

## चतुर्वर्गचिन्तामणि

### (कालनिणयखण्डे)

(वराहपु०) अध्याय ७०

कृते नारायण शुद्ध सूक्ष्ममूर्तिरुपास्यते।
त्रेताया यज्ञरूपेण पञ्च**रात्रेण** द्वापरे ॥२५॥

—(p 659)

## स्मृतिरत्नाकर

### (आह्निक प्रकरण)

(वराहपु०) अध्याय ७०

यद्वेदबाह्य कम**स्यान्मामुद्दिश्योपसेव्यते**।
तद्रौद्रमिति विख्यात कनिष्ठ गदित नृणाम् ॥२२॥

यद्धीन**कमसयुक्त** केवल तामस **च** यत्।
तद्दुगति**प्रद** नृणामिह लोके परत्र **च** ॥२३॥

—(p 71)

## नित्याचारपद्धति

(वराहपु०) अध्याय ७०

मा विष्णोव्यतिरिक्त ये **ब्राह्मणश्च** द्विजोत्तम।
**यजन्ति** पापकर्माणस्ते यान्ति नरक नरा ॥४१॥

—(p 590)

[नि प्र P 591]

[–L2 नि प्र भजन्ते (→यजन्ति)]

## अपरार्कटीका

(वराहपु०) अध्याय ७१

**यथैव** मोहितास्ते हि **भविष्यन्तो जना द्विज**।
लौल्यार्थिनस्तु शास्त्राणि करिष्यन्ति कलौ नरा ॥५२॥

नि श्वाससहिता **या** हि लक्षमात्र प्रमाणन ।
4 सव पाशुपतो **योगो भेदा पाशुपतास्तत** ॥५ ॥

**एतया** वेदमार्गादेयदन्यदिह जायते ।
तत्क्षुद्रकमविज्ञेय रौद्र शौचविवर्जितम् ॥५४॥

—(p 12)

## स्मृतिरत्नाकर

(वराहपु०) अध्याय ७१

गोवध्याकारण मह्य यावत्पश्यति **योगवित्** ॥३८cd॥

ऋषीणा मायया सव**मिति सचिन्त्य तत्र वै** ।
शशाप ताञ्जटाभस्ममिथ्याव्रतधरास्तथा ॥३९a-d॥

—(p 72)

## स्मृतिरत्नाकर

(वराहपु०) अध्याय ७२

विष्णुरेव पर ब्रह्म त्रिभेदमिह पठ्यते ।
वेदसिद्धान्तमार्गेषु त न जानन्ति मोहिता ॥४॥

—(p 84)

## स्मृतिरत्नाकर

(वराहपु०) अध्याय ७३

एवमुक्ते पुनर्वाक्यमुवाचोमापतिर्मुदा ।
अन्य देहि वर **विष्णो** प्रसिद्ध सवजन्तुषु ॥४२॥

**मर्त्यो** भूत्वा भवानेव मामाराधय केशव ।
4 मा वहस्व च देवेश वर मत्तो गृहाण च ।
येनाह सवदेवाना पूज्यात्पूज्यतमो भवेत् ॥४३॥

—(p 164)

## त्रिस्थलीसेतु

(वराहपु०) अध्याय ९६

कस्यचित्त्वथ कालस्य द्वादशाब्दे धराधरे ।
वाराणसी गतो देवस्तत्र स्नानमसौ करोत् ॥२४॥

गङ्गाया **तत्र** देवेशो यावन्मज्जति भामिनि ।
4 तावत्कपाल पतितं यल्लग्न ब्रह्मण पुरा ॥२५॥

कपालमोचन नाम ततस्तीर्थमनुत्तमम् ।
पृथिव्या ख्यातिमगमद् वाराणस्या धराधरे ॥२६॥

—(p 170)

## चतुर्वर्गचिन्तामणि

(दानखण्डे)

(वराहपु०) अध्याय ९८

होता उवाच—

तिलधेनु **जलधेनु** रसधेनु च पार्थिव ॥८५cd॥

दहि शीघ्र येन भवान् **क्षुत्तृ**षावर्जितो **दिवि** ।
**रमते** यावदादित्यस्तप्यते **दिवि** चन्द्रमा ॥८६॥

4 एवमुक्तस्ततो राजा **विधान** पृष्टवानिदम् ।
**यथा भवेत्तिलधेनोस्तच्छृणुष्व** नराधिप ॥८७॥

चतुर्भि **सेनिकाभिस्तु** प्रस्थ एक प्रकीर्तित ।
ते षोडश भवेद् धेनुश्चतुर्भिर्वत्सको भवेत् ॥९०॥

8 इक्षुदण्डमया पादा दन्ता पुष्पमया शुभा ।
नासा गन्धमयी तस्या जिह्वा गुडमयी **तथा** ॥९१॥

पुच्छे स्रक्कल्पनीया स्यात् घण्टाभरणभूषिता ।
ईदृशी कल्पयित्वा तु स्वणशृङ्गी **प्रकल्पयेत्** ॥९२॥

12 कास्यदोहा रूप्यखुरा पूवधेनुविधानत ॥९३ab॥

—(p 404)

[कृ क (दा का) P 146 L6 12]
[–L7 कृ क सा तु षोडशभि कार्या]

## नित्याचारप्रदीप

(वराहपु०) अध्याय ९८

वैष्णवदीक्षा—

दीक्षितात्मा **गुरौ** भूत्वा वाराह शृणुयाद् यदि ।
**तेन** वेदा पुराणानि सर्वे मन्त्रा ससग्रहा ॥४८॥

जप्ता स्यु पुष्करे तीर्थे प्रयागे सिन्धुसागरे ।
4 **देवहृते** कुरुक्षेत्रे वाराणस्या विशेषत ॥४९॥

ग्रहणे विषुवे चैव यत् फल जपता **भवेत्** ।
तत् फल द्विगुण तस्य दीक्षितो य **शृणोति** च ॥५०॥

**देवा अपि** तप कृत्वा ध्यायन्ति **च** वदन्ति **च** ।
8 कदा नो भारते वर्षे जन्म स्याद् भूतधारिणि ।
दीक्षिताश्च भविष्यामो वराह शृणुम **कदा** ॥५१॥

वाराह **षोडशात्मान** त्यक्त्वा देह कदा **पुन** ।
यास्याम परम स्थान यद्गत्वा न पुनर्भवेत् ॥५२॥

12 **एव यो**ऽर्चति तत्त्वेन **यश्च** पश्यति **मण्डलम्** ।
**यश्चेम** शृणुयाद् देवि सर्वे मुक्ता इति **श्रुति** ॥५५॥

भगवस्त्वत्प्रसादेन ससाराणवतारण ।
इच्छामस्त्वैहिकी **भक्ति** विशेषेण तपोधन ॥१६॥

—(p 710 712)

## जयसिंहकल्पद्रुम

(वराहपु०) अध्याय ११०

सुवणकपिला पूर्वा द्वितीया गारपिङ्गला ।
तृतीया चैव रक्ताक्षी चतुर्थी गुडपिङ्गला ॥१५॥

नवमी पाटला ज्ञेया दशमी पुच्छपिङ्गला ॥१७ab॥

—(p 763)

## अपरार्कटीका

(वराहपु०) अध्याय १११

सुवणशृङ्गी य कृत्वा रौप्ययुक्ता **खुरेष्वथो** ।
ब्राह्मणस्य करे दत्त्वा सुवण रौप्यमेव **वा** ॥३०॥

कपिलायास्तदा पच्छ ब्राह्मणस्य करे न्यसेत् ।
उदक च करे दत्त्वा वाचयेच्छ्रद्धया**न्वित** ॥३१॥

ससमुद्रगुहा तेन सशैलवनकानना ।
रत्नपूर्णा **भवेद्**त्ता पृथिवी नात्र सशय ॥३२॥

पृथिवीदानतुल्येन दाने**नानेन मानव** ।
**तारितैर्या**ति पितृभिर्विष्ण्वाख्य **यत्पर** पदम् ॥३३॥

ब्रह्मस्वहारको गोघ्नो भ्रूणहा पाकभेदक ।
महापातकयुक्तोऽपि वञ्चको ब्रह्मदूषक ॥३४॥

निन्दको ब्राह्मणाना च **तेषा कर्माभि**दूषक ।
एव पातकयुक्तोऽपि गवा दानेन शुद्धचति ॥३५॥

यश्चोभयमुखी दद्यात्प्रभूतकनका**वृताम्** ।
तद्दिन पायसाहार पयसा वातिवाहयेत् ॥३६॥

सुवणस्य सहस्रेण तदर्धेनापि भामिनि ।
तस्याप्यध **शत वाथ** पञ्चाशच्च ततोधकम् ।
यथाशक्ति प्रदातव्य वित्तशाठ्यविवाजतम् ॥३७॥

इमा गृहाणोभयमुखी भवास्त्राता समास्तु वै ।
**मम** वश **विशुद्धि स्यात्**सदा स्वस्तिकरो भव ॥३८॥

प्रतिगृह्णामि ता धेनु कुटुम्बार्थे विशेषत ।
स्वस्तिभवतु ते नित्य **भद्र चान्ते** नमो नम ॥३९॥

**द्यौस्ते प्रतिददामि पृथिवीं ते** प्रतिगृह्णा**मि** ।
**इद कस्मा अदादिति** च वसुन्धरे ।
**विसृजेद** ब्राह्मण **दधिगा च** तस्य गृह नयेत् ॥४०॥

—(P301-302)

[ च चि (दा ख ) P 479 ]

[–L1 च चि खुरोऽथवा (→खुरेष्वथो) –L5 ससमुद्र वना तेन –L7 दानेनतेन मानव –L8 पदमव्ययम (→यत्पर पदम) –L9 गोष्ठो (→गोघ्नो) –L13 प्रसूत (→प्रभूत) –L15 तामिति (→भामिनि) –L20 त्वा (→ता) –L21 रुद्रमातर (→भद्र चान्ते) –L23 क इद कस्मा इदेति जपेन्मन्त्र वसुन्धरे –L24 देवि (→दधि) ]

## दानमयूख

(वराहपु०) अध्याय १११

यश्चोभयमुखी दद्यात् प्रभूतकनका**न्विताम्** ।
तद्दिन पायसाहार पयसा वातिवाहयेत् ॥३६॥

सुवणस्य सहस्रेण तदर्द्धेनापि **वा पुन** ।
तस्याप्यद्ध**शत वाथ** पञ्चाशच्च **तथाद्धकम्** ।
यथा **शक्त्यापि** दातव्य वित्तशाठ्यवि**वर्जितम्** ॥३७॥

—(P 212)

ब्राह्म पाद्म वैष्णव च शैव भागवत तथा ॥६९cd॥

तथान्यन्नारदीय च माकण्डेय च सप्तमम् ।
आग्नेयमष्टम प्रोक्त भविष्य नवम तथा ॥७०॥

दशम ब्रह्मवैवर्त लैङ्गमेकादश **तथा** ।
वाराह द्वादश प्रोक्त स्कान्द **चैव** त्रयोदशम् ॥७१॥

चतुदश वामन च कौम पञ्चदश **तथा** ।
मात्स्य च गारुड चैव ब्रह्माण्ड**न्निम तथा** ॥७२॥

—(P 275)

## जयसिंहकल्पद्रुम

(वराहपु०) अध्याय १११

**एता दश** समाख्याता **कपिलास्ते** वरानने ।
सर्वा ह्येता महाभागास्तारयन्ति न सशय ।
सगमेषु प्रशस्ताश्च सवपापप्रणाशना ॥१२॥

—(P 763)

## विष्णुस्मृतौ—कवशवैजयन्तीटीका ।

(वराहपु०) अध्याय १११

सुवर्णस्य सहस्रेण तदर्धेनापि **वा पुन** ।
तस्याप्यर्द्धं **शत वापि** पञ्चाशच्च ततोऽधकम् ॥३७a-d॥

—(P 825)

## कृत्यकल्पतरु
### (व्रतकाण्डे)
(वराहपु०) अध्याय ११४

विष्णुप्राप्तिव्रतम्—

द्वादश्यामुपवास तु ये वै कुर्वन्ति ते नरा ।
**मामेव प्रतिपद्यन्ते** मम भक्ति परायणा ॥१०॥
कृत्वा चैवोपवास तु **गृहीत्वा चाञ्जलि तत** ।
नमो नारा**यणायेति** आदित्य**मभि**लोकयेत् ॥११॥
यावन्तो विन्दव **केचित पतन्त्यञ्जलितो जलात** ।
तावद् वषसहस्राणि स्वर्गलोके महीयते ॥१२॥
**ग्रार्त्तवश्चव** पुष्पैश्च **मृगग धश्च धूपनै** ।
**य एव कारयेद्भूमि** तस्यापि श्रृणुयाद् **गतिम** ॥ १४॥
दत्त्वा शिरसि पुष्पाणि इम मत्रमुदाहरेत् ॥१५ab॥
ॐ इति कृत्वा मन्त्र ॥

[सुरश्रेष्ठ धराधर] सुमनम सुमना गृह्य प्रीयता मे **भगवन् विष्ण** एतेन मन्त्रेण सुमनो दद्यात् ॥१६॥ [गन्ध मन्त्र उच्यते] ॐ नमस्तुभ्य विष्णवे व्यक्त [सगन्धिगन्ध गृह्णेम भगवते विष्णवे] **एतेन** मन्त्रेण **गन्धान** दद्यात ॥१७॥

अश्रुत्वापि च शास्त्राणि यो मामेव **च** कारयेत् ।
मम लोक स गच्छेच्च जायते च चतुर्भुज ॥१९॥
श्यामाक षष्ठिक **चैव च सद भोज्यानि गुणास्**तथा ।
शालीन **यवान्न च** तथा **सुख नीवारभक्तकम** ॥२१॥
**एतानि यस्तु** भुञ्जीत मम कर्मपरायण ।
**स स्याच्च** शङ्खचक्राङ्को **लाङ्गलीमुसली गदी** ॥२२a-d॥
—(P 344)

[का वि P 446, 449 L1-2 च चि (व्र ख) P 1203 व क्रि कौ P 50 L1 2]

[–L2 का वि, व कौ वत्स मामेव पश्यन्ति मम व्रतपरायणा –L3 च चि गहीत्वा च जलाञ्जलिम –L4 च चि नमो नारायणायेति आदित्य चावलोकयेत् –L7 च चि पाण्डु रैश्चैव पुष्पैस्तु सृष्टैग धैश्च धूपनै –L9 म त्रमुदीरयेत ]

## कृत्यकल्पतरु
### (नियतकालकाण्डे)
(वराहपु०) अध्याय ११५

षष्ठ्यष्टमी चामावास्या उभे पक्षे चतुर्दशी ।
**मैथुन नैव** सेवेत **द्वादशीं च मम प्रियाम** ॥४॥
—(p 359)

[च चि (का नि ख) P 725 गृ र P 412 कृ र p 548, प्रा वि P 367]

## त्रिस्थलीसेतु
(वराहपु०) अध्याय ११५

अकामो वा सकामो वा **वटमूलेषु सुन्दरि** ।
**शीघ्र** प्राणान् प्रमुञ्चेत **यदीच्छेत्परमा गतिम्** ॥४२॥
—(p 49)

## वीरमित्रोदय
### (पूजाप्रकाशे)
(वराहपु०) अध्याय ११६

ममैवाचनकाले तु यस्तु **वाक्य** प्रभाषते ।
नवमश्चापरा**धो**ऽय न मुञ्चामि वसुन्धरे ॥१३॥
—(p 171)

शरीर **मण्ड**यित्वा तु यो मामाप्नोति माधवि ॥३३ab॥
—(p 187)

## नित्याचारप्रदीप
(वराहपु०) अध्याय ११७

कल्यमेव समुत्थाय हन्याद् भेरी यथोदिताम् ।
**यदि** भेरी न **विद्येत कवाट तत्र** वादयेत् ॥३॥
**दीप प्रज्वालयित्वा** तु हस्तशौच तु कारयेत् ॥५cd॥
चरणौ वन्दयित्वा **तु** दन्त**काष्ठमु**पानयेत् ॥६cd॥
निर्माल्य शिरस कश्चित् भक्त्या **चापोह्य मानव** ॥८ef॥
कुर्यात्तु मुखकर्माणि **स्वच्छेन** सलिलेन च ॥९cd॥
शीघ्रमभ्यञ्जन **कुर्याद दद्यात तैल घतञ्चयत** ॥१६cd॥
**पश्चात पृष्ठे पुनश्चैव** पादौ पश्चात् कटि तथा ॥२०ab॥
**कलायस्यापि** चूर्णेन पिष्टचूर्णेन वा पुन ।
एतेनोद्वर्त्तन कुर्याद् **गन्धद्रव्यैश्च सयुतम** ॥२७a-d॥
—(p 557-558)

## नित्याचारप्रदीप
(वराहपु०) अध्याय ११८

**वदरस्य च शाक च** मधुकोदुम्बर तथा ॥४ef॥
एते चान्ये च बहव शतशोऽथ सहस्रश ।
कर्मण्या**स्ते च सर्वं वै** ये मया परिकीर्त्तिता ॥५॥
व्रीहीणाञ्च प्रवक्ष्यामि उप**योगञ्च** माधवि ॥६ab॥
**धर्मधार्मिकरक्त च** सुगन्धिरक**शालिकम** ।
दीर्घ**शूक** महाशालिवर कुङ्कुम**पक्षिकम्** ॥७॥
**ग्रामशालिसमुद्राणां सुश्रीका कुलशालिकाम्** ।
**यवान्न विविध देय कर्मण्य मम माधवि** ॥८॥

कमण्याश्चैव मुदगश्च तिला कष्णा कुलत्थका ।
गोधूमका महामुद्गा कुलत्थमथवाप्यलुम ।।९।।

प्रतिगह्णाम्यह ह्येतत सर्वं भगवत प्रियम् ।।१०ef।।

पशूना सप्रवक्ष्यामि वन्याना भागवासिनाम ।
ये ममैवोपयोज्यानि गव्य मधु घृत तथा ।
माहिषञ्चाविक छागमयाज्ञिकमुदाहृतम् ।।११।।

माग मास तथा छाग शाश वा मम युज्यते ।।१२ab।।

कमण्य रौरव मास मायूर कुक्कुट तथा ।
लावक वार्तिकञ्चैव प्रशस्तश्च कपिञ्जल ।।१६।।

रेणुक प्राशिकश्चैव हारीतश्चैव वीर्यवान् ।
तथा कुरुवकश्चैव पितृणा प्रवर प्रिय ।।१६a d।।

—(p 674 675)

[ नि प P 331 L13 14 शू शि I P 143 144 L13 15 वी मि (शु प्र) P 80 L13 14 ]

[ -L13 नि प मेध्य ममोपयोग्य हि गव्य दधिपयोघतम, वी मि अमरायोपयोज्यानि गव्य दधि पयोघतम -L14 नि प अमध्येय स उदाहृतम -L15 शू शि शाश समनुयुज्यते ]

## कृत्यरत्नाकार

(वराहपु०) अध्याय १२१

अष्टम्याञ्च चतुर्दश्या षष्ठयाञ्च द्वादशी तथा ।
अमावास्याञ्चतुर्थ्याञ्च मैथुन योऽधिगच्छति ।।२।।

—(p 548)

## चतुर्वर्गचिन्तामणि

### (कालनिर्णयखण्डे)

(वराहपु०) अध्याय १२१

तिर्यग्योनिं न गच्छेत् स मम लोक हि गच्छति ।।७cd।।

—(p 725)

## कृत्यरत्नाकर

(वराहपु०) अध्याय १२२

वराह उवाच—

कौमुदस्य तु मासस्य या सिता द्वादशी भवेत् ।
अर्च्चयेद्यस्तु मा तत्र तस्य पुण्यफल शृणु ।।९।।

यावल्लोका हि वर्तन्ते यावत्त्वञ्चैव माधवि ।
मद्भक्तो जायते तावदन्यभक्तो न जायते ।।१०।।

कृत्वा वै मम कर्माणि द्वादश्या मत्परो नर ।
ममैव बोधनार्थाय इम मन्त्रमुदीरयेत् ।।११।।

ब्रह्मेन्द्ररुद्रैरभिष्टूयमानो भवानृषिर्वन्दितवन्दनीय ।
प्राप्ता तवेय किल कौमुदाख्या जागृष्व जागृष्व च लोकनाथ ।।१२।।

मेघा गता निमलपूणचन्द्र शारद्यपुष्पाणि च लोकनाथ ।
अह ददानीती च पुण्यहेतोर्जागृष्व जागृष्व च लोकनाथ ।।१३।।

स यज्ञो यत्र भासि त्व सवयज्ञानुभवोसि यज्ञा ।
यजन्ति वार्त्तासुविशुद्धसत्त्वा प्रबुध्य जागृष्व च लोकनाथ ।।१४।।

एव कर्माणि कुवन्ति द्वादश्या ये यशस्विनि ।
मम भक्ता नरश्रेष्ठास्ते यान्ति परमा गतिम् ।।१५।।

एव वै शारद कम निखिल कथित मया ।
मोदते देवससारे मम भक्त सुखावह ।।१६।।

—(p 425)

[कृ क P 426 L11 12 ○, L15 16 ○ व कौ P 480 L1 4 ○, L11 12 ○ ]

[-L7 कृ क ब्रह्मेन्द्ररुद्रैरभिपूज्यमानो -L8 कृ क द्वादशी (→किल) -L9 व कौ मनोरमाणि (→लोकनाथ) -L10 व कौ धमहेतोर् (→पुण्यहेतोर), प्रबुध्य (→जागृष्व) ]

## कृत्यरत्नाकर

(वराहपु०) अध्याय १२३

आषाढकृत्यम्—

भगवानुवाच ।

अन्यत्तव प्रवक्ष्यामि कमससारमोक्षणम् ।
कदम्ब कुटजाश्चैव धनकोऽज्जुनकस्तथा ।
एभिरभ्यचन कुर्य्याद्विधिदृष्टेन कमणा ।।४५।।

तत सस्थापन कृत्वा मम मन्त्रविधि स्मृत ।।
नमो नारायणायेत्युक्त्वा इम मन्त्रमुदीरयेत् ।।४६।।

पश्यन्ति मेघान्यपि मेघश्याम ह्यपगत सिच्यमान महीमिमाम् ।
निद्रा भगवान गृह्णातु लोकनाथ वर्षास्विम पश्यतु लोकवृन्दम् ।।४७।।

आषाढमासे द्वादश्या सवशक्तिकर शिवम् ।

**यत्र** तेन विधानेन **भूमि मत्कर्म्म** कारयेत् ।
**स पुमान न** प्रणश्येत **सहारेषु** युगे युगे ॥४८॥
—(p 208 209)

[कृ क P 392 L5 ○ व कौ 288 L5-7 स म P 81 L8 वी मि (स प्र) P 57 L8 10]

[-L7 कृ क गृह्णातु (→पश्यतु) L8 कृ क, स म सर्वशान्तिकर शुभम (कृ क शिव) -L 9 कृ क वी मि य एतेन विधानेन भूमिर्मे (वी मि ज्ञात्वा मे) कमकारयेत -L10 वी मि, ससारेषु युगे युगे]

**कृत्यकल्पतरु**

**(तीर्थविवेचनकाण्डे)**

(वराहपु०) अध्याय १२५

कुब्जाम्रकमाहात्म्यम्—

वराह उवाच ।

एव कुब्जाम्रक ख्यात **तीर्थमेतद्यशस्विनि ।**
**ये मृतास्तत्र** गच्छन्ति **ते मल्लोकाय निष्कला** ॥१३॥

तीर्थं कुब्जाम्र**क पुण्य** मम लोक सुखावहम ॥२४cd॥

तीर्थ **कुमुदारक चैत्र** तस्मिन् कुब्जाम्रके स्थितम् ।
स्नानमात्रेण सुश्रोणि स्वग**मार्गप्रद तु तत्** ॥२५॥

कौमुदस्य तु मासस्य तथा मार्गशिरस्य च ।
वैशाखस्य **च** मासस्य कृत्वा वे कम दुष्करम् ॥२६॥

यो वै परित्यजेत् प्राणान् **पुमान स्त्री वा** नपुसक ।
निष्कला लभते सिद्धि मम **लोकाय** गच्छति ॥२७॥

तीथ मानस इत्येव यस्तु **तत्राभि**धीयते ॥२८cd॥

तस्मिन् स्नात्वा विशालाक्षी गच्छते नन्दन वन ॥२९ab॥

तत्र **यो मुञ्चति** प्राणान् कौमुदस्य तु द्वादशीम् ।
पुष्कला लभते सिद्धि मम **लोकाय** गच्छति ॥३१॥

मायातीर्थमिति ख्यात येन माया विजानते ॥३२cd॥

तस्मिन् कृत्वोदक ब्रह्मन् मायातीर्थे महायशा ।
दशवर्षसहस्राणि मद्भक्तो जायते नर ॥३३॥

अथवा म्रियते तत्र मायातीरे यशस्विनि ।
मायायोगी ततो भूत्वा मम लोकाय गच्छति ॥३५॥

तीर्थं **सर्वपिक** नाम सर्वकमगुणान्वितम् ॥३६cd॥

यस्तत्र **स्नाति वै** कश्चिद्वैशाखस्य तु द्वादशीम् ।
निष्कल लभते स्वर्गं सहस्रान दश पञ्च च ॥३७॥

तीर्थं **पूर्वामुख** नाम तत्र केचिन्न **जायते** ॥३९cd॥

**सर्वदा तत्र गङ्गाया** शीतल जायते जलम् ।
यत्र चोष्ण भवत्यम्बु ज्ञेय पूर्णमुख **च तत** ॥४०॥

स्नात्वा गच्छति सुश्रोणि मम **लोक महायशा** ॥४१ab॥

पुनरन्यत् प्रवक्ष्यामि **शृणु तत्त्वेन माधवि ।**
अशोक नाम **तत्रैव स्नात्वा शोक न पश्यति** ॥४५a-d॥

सवसङ्गैश्च निर्मुक्तो मम लोकाय गच्छति ॥४९cd॥

तीर्थं च **करवीराख्य** मम लोकसुखावहम् ॥५०cd॥

तस्य चिह्न प्रवक्ष्यामि येन **विज्ञायते भवि ।**
पुरुषैर्ज्ञानवद्भिश्च मम भक्ति**विनिश्चितै** ॥५१॥

माघमासस्य सुश्रोणि शक्लपक्षस्य द्वादशीम् ।
पुष्यते करवीर तु मध्याह्ने तु न सशय ॥५२॥

तत्राऽथ म्रियते भूमि माघमासे तु द्वादशीम् ।
ब्रह्माण मा च पश्येत **तथैव** वृषभध्वजम् ॥५४॥

पुण्डरीकमिति ख्यात **तीर्थं तत्र** महद्यश ॥५६cd॥

**स्नात्वा प्राप्नोति** सुश्रोणि फल तत्र महागुणम् ॥५७cd॥

पुण्डरीकस्य यज्ञस्य यजमानस्य यत्फलम् ॥५८ab॥

अथवा म्रियते तत्र **नष्टत्रासो** महातपा ।
दशाना पुण्डरीकाणा फल प्राप्नोति मानव ॥५९॥

सिद्धि च लभते **धन्या** मम लोकाय गच्छति ॥६०cd॥

अग्नितीर्थे **तु वै स्नातस्तस्मिन** कुब्जाम्रके स्थित ॥६१cd॥
**सप्तधाग्नि प्रवेशेन** यत्फल **लभते नर ।**
प्राप्नोति तन्महाभागे स्नातमात्रो **न** सशय ॥६८॥

अथवा म्रियते तत्र **शुक्लामेका त** द्वादशीम् ।
विशद्रात्रोषितस्तत्र मम लोकाय गच्छति ॥६९॥
—(p 206-208)

[वी मि (ती० प्र०) P 377 L1-2]

**शूद्राचारशिरोमणि** Part I

(वराहपु०) अध्याय १२७

शूद्रस्यापि प्रवक्ष्यामि मद्भक्तस्य **वरानने ।**
या तु दीक्षा समासाद्य मुच्यते सर्वकिल्बिषै ॥२२॥
दीक्षा **वै सा तु शूद्राणामुपचारश्च ईदृश** ॥२३cd॥
—(p 72)

## वीरमित्रोदय
### (पूजाप्रकाशे)

(वराहपु०) अध्याय १२८

विष्णोर्नैवेद्यपात्रमधिकृत्य—

सौवर्णं राजत कास्य येन दीयेत प्रापणम ।
तानि सर्वाणि सत्यज्य ताम्र तु मम रोचते ॥१९॥
सुदीक्षितैर्विशद्धैस्त मम कमपरायणै ।
सदा ताम्रेण कत्तव्यमेव भूमे मम प्रियम् ॥५१॥
—(p 81)

## वीरमित्रोदय
### (पूजाप्रकाशे)

(वराहपु०) अध्याय १२९

विष्णुपूजने विहिताना द्वात्रिंशदपराधाना प्रायश्चित्त मधिकृत्य—

धरण्युवाच—

देवपूजापराधास्ते द्वात्रिंशत्परिकीर्त्तिता ॥५ab॥
कर्मणा केन शुद्धयन्ति अपराधस्य कारिण ।
तन्ममाचक्ष्व तत्त्वेन मम प्रीत्या च माधव ॥६॥

वाराह उवाच—

राजान्न तु न भोक्तव्य शुद्धैर्भागवतै शुभे ॥१४cd॥
यद्यप्येष ममाशेन राजा राज्ये प्रवत्तते ।
राजस तामस वापि कर्मकुर्वन सुदारुणम् ॥१५॥
अनेन गर्हित देवि राजान्न हि वसुन्धरे ।
धमसस्थापनार्थाय तत्त मे न हि रोचते ॥१६॥
—(p 166)

यथा राज्ञस्तु भोक्तव्य शभैर्भागवतै शुभे ॥१७cd॥
स्थापयित्वा तु मा देवि विधिदष्टेन कर्मणा ।
धनधान्यसमृद्धानि दत्त्वा भागवतेषु च ॥१८॥
सिद्धध भागवतैश्चान्न मम प्रापणशेषजम ।
भुञ्जानस्तु वरारोहे न स पापेन लिप्यते ॥१९॥
—(p 167)

## वीरमित्रोदय
### (पूजाप्रकाशे)

(वराहपु०) अध्याय १३०

दन्तकाष्ठमखादित्वा यो हि मामुपसर्पति ।
सर्वकालकृत कम दिनेनैकेन नश्यति ॥१॥
मनुष्य किल्विषी भद्रे कफपित्तसमन्वित
पूयशोणितसपूर्णो दुर्गन्ध मुखमस्य तत् ॥५॥
न सहे दूषित देवि दन्तकाष्ठमभक्षयत ॥६ab॥
आकाशशयन कृत्वा दिनानि द्वे च पञ्च च ।
अभुक्तदन्तकाष्ठश्च एव शुद्धयति मानव ॥९॥
—(p 167)

## वीरमित्रोदय
### (पूजाप्रकाशे)

(वराहपु०) अध्याय १३१

गत्वा तु मैथुन तत्र न स्नातो मामपस्पशेत ।
रेत पिबति वर्षाणां सहस्राणि चतुद्दश ॥१॥
यावकेन त्र्यह भक्त्वा पिण्याकेन पुनस्त्र्यहम ।
वायुभक्षो दिन त्वेक ततो मुच्येत किल्विषात ॥८॥
दष्टवा तु मृतक भद्रे नर पञ्चत्वमागतम् ।
मम शास्त्र बहिष्कृत्वा अस्माक य प्रपद्यते ॥११॥
पितरस्तस्य सुश्रोणि आत्मा चैव पितामहा ।
श्मशाने जम्बुका भूत्वा भक्षयन्ति शवास्तथा ॥१२॥
एकाहारो दिनान् सप्त त्रिरात्र वा उपोषित ।
पञ्चगव्य तत पीत्वा शीघ्र मुच्येत किल्विषात ॥१६॥
शवे दृष्टेऽपराधस्य एष ते कथितो विधि ॥१७ab॥
नारी रजस्वला स्पृष्ट्वा यो मा स्पृशति निभय ।
रागमोहसमायुक्त कामेन च वशीकृत ॥१९॥
वर्षाणा च सहस्रैक रज पिबति निर्घृण ।
अन्ध सजायते देवि दरिद्रो मूर्ख एव च ॥२०॥
तप कृत्वा त्रिरात्र तु आकाशशयन तथा ॥२३cd॥
मुच्यते किल्विषाद्देवि आचारेण बहिष्कृत ॥२४cd॥
स्पृष्ट्वा तु मृतक भूमि मम क्षेत्रेषु तिष्ठति ।
शत वषसहस्राणि गर्भेषु परिवत्तते ॥२६॥
दशवषसहस्राणि चाण्डालो जायते पुन ।
अन्ध शत सहस्राणि मण्डूकश्च शत समा ॥२७॥
मक्षिका त्रीणि वर्षाणि टिट्टिभैकादश समा ।
हसो वै सप्त चान्यानि कृकलासो भवेत्समा ॥२८॥
अश्वो वषशत चैव खरोष्ट्रौ त्रिंशक भवेत् ।
चतुर्विंशा बलीवर्द श्वा च द्वादशवार्षिक ।
मार्जारो नववर्षाणि वानरो नव पञ्च च ॥२९॥

स्पृष्ट्वा तु मृतक भमि मम कमपरायण ।
एकाहारस्ततस्तिष्ठेद्दिनानि दश पञ्च च ॥३५॥
तत एव विधि कृत्वा पञ्चगव्य तु प्राशयेत् ।
शुद्ध एव विशुद्धात्मा कमणा न च लिप्यते ॥३६॥
—(p 168 170)

[नि प P 506 L6 8 नि प्र P 21 L6]

[-L7 नि प तथव च (→आत्मा चव) -L8 नि प शव तथा]

## वीरमित्रोदय
## (पूजाप्रकाशे)

(वराहपु०) अध्याय १३२

**स्पृशन्मामत्र यो** भूमि वातकम प्रमुञ्चति ॥१ab॥
मक्षिका पञ्चवर्षाणि **मप्तवर्षाणि** मूषक ॥२ab॥
**दिनत्रय यावकेन कणश्चापि दिनत्रयम्** ॥६ab॥
सव**सङ्गान्** परित्यज्य मम **लोक स** गच्छति ॥६ef॥
—(p 170)

## वीरमित्रोदय
## (पूजाप्रकाशे)

(वराहपु०) अध्याय १३३

पुरीष **च प्रमुञ्चति** मम कम समाचरन् ॥१cd॥
दिव्य**वषसहस्राणि** रौरवे नरके **स्थित** ।
पुरीष भक्षयेत्तत्र **अपराध** हि **नित्यश** ॥२॥
**एक जलेशय कृत्वा एकमाकाशशायिनम्** ।
**कृत्वा मत्प्रापण चव** अपराधात प्रमुच्यते ॥४॥
—(p 170 171)

## वीरमित्रोदय
## (पूजाप्रकाशे)

(वराहपु०) अध्याय १३४

**कूर्मो** भवति सुश्रोणि **जातीर्वै** सप्त **सप्त च** ॥१ef॥
आकाशशयन कृत्वा दिनानि दश पञ्च **च** ।
मुच्यते किल्बिषाद् **भूमि एवमेतन्न** सशय ॥३॥
भूषितो नीलवस्त्रेण **यस्तु मा** प्रतिपद्यते ।
**शतानि पञ्चवर्षाणा** कृमिर्भूत्वा स तिष्ठति ॥४॥
अविधानेन सस्पृश्य यस्तु मामुपसपति ।
स मूख पापकर्मा **व** मम विप्रियकारक ॥७॥
तेन दत्त वरारोहे गन्ध माल्य **सुगन्ध्यपि** ।
प्रापण च न गृह्णामि **मृष्ट** चापि कदाचन ॥८॥

धरण्युवाच—

उपस्पशसमाचार रहस्य वक्तुमहसि ॥१०cd॥
केन कमविभागेन **शुद्धा** भागवता भुवि ।
उपस्पृश्योपसपन्ति तव कमपरायणा ॥११॥

वराह उवाच—

विमुच्य सवकर्माणि **यस्तु** मामुपसर्पति ।
तस्य वै शृणु सुश्रोणि उपस्पर्शस्य **या** क्रिया ॥१४॥
भूत्वा पूर्वमुखस्तत्र पादो प्रक्षाल्य चाम्बु**ना** ।
उपस्पृश्य यथान्याय तिस्रो वे गृह्य मृत्तिका ॥१५॥
तत प्रक्षाल**येद्धस्तो** जलेन तदनन्तरम् ।
सप्त कोश **तत कृत्वा** मुख प्रक्षालयेत्तत ॥१६॥
पादमककमेकत्र पञ्च पञ्च **ददात्युत** ।
**कोशानि सयत**स्तत्र यदीच्छेत मम प्रियम् ॥१७॥
**तिस्र** कोशान् पिबेत् तत्र सवकायविशोध**ना** ।
कराभ्या मुख**मुन्मृज्य** सवमिन्द्रियनिग्र**हम्** ॥१८॥
प्राणायाम तत कृत्वा मम **चित्तपरायण** ।
कमणा विधिदृष्टेन **सवससारमोक्षणम्** ॥१९॥
**वारत्रय** स्पृशेत्तत्र शिरो **ब्रह्मात्र** सस्थित ।
**त्रीस्तु** वारान् पुनस्तत्र उभे **ते** कणनासिके ॥२०॥
स्पृशेत्तु निष्कल तत्र **सोमो** यत्र व्यवस्थित ।
वारत्रय क्षिपद् **भूमौ जलस्य प्रसृतीस्तथा** ॥२१॥
एव **भक्त न** कत्तव्य ममाभिगमनेषु च ।
उपस्पृ**शेत्सदाचारो** यदीच्छेत मम प्रियम् ॥२२॥
एव हि कुवतस्तस्य मम **धमव्यवस्थितिम्** ।
अपराधो न विद्येत **एव भूमि न** सशय ॥२३॥

**धरण्युवाच—**

उपस्पृश्य विधानेन यस्तु कर्माणि **नाप्नुयात्** ।
तापन शोधन चैव तद् भवान् वक्तुमहति ॥२५॥

वराह उवाच—

शृणु तत्त्वेन मे भूमि इद गुह्यमनिन्दिते ।
या गति **प्रतिपद्येत** मम **कमबहिष्कृत** ॥२६॥
**व्यभिचार नर** कृत्वा यस्तु मामुपसपति ।
**दशवषसहस्राणि दशवर्षशतानि च** ॥

क्रमिभूत्वा यथान्याय तिष्ठते पुरुषाधम ॥२७॥
प्रायश्चित्त प्रवक्ष्यामि तस्य पापस्य शोधनम् ॥२८ab॥
महासान्तपन कृत्वा तत कृच्छ्र च पुष्कलम ।
ब्राह्मणा क्षत्रिया वेश्या मम ये च मते स्थिता ॥२९॥
अनेन विधिना कृत्वा प्रायश्चित्त यशस्विनि ।
किल्विषात्तु प्रमुक्तास्ते गच्छन्ति परमा गतिम् ॥३०॥
यस्तु क्रोधसमायुक्तो मम कमपरायण ।
स्पृशत्तु मम गात्राणि कृत्वा चित्त चलाचलम् ॥३१॥
न चाह रागमिच्छामि न क्रुद्ध च यशस्विनि ।
इच्छामि शान्त दान्त च भूमि भागवत शुचिम् ॥३२॥
जितेन्द्रियसमायुक्त लाभालाभविवर्जितम् ।
अहङ्कारविनिमुक्त कमण्यभिरत मम ॥३३॥
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वरानने ।
योनिदोषास्तु लभते शुद्धो भागवत शुचि ॥३४॥
पल्ली जातो वषशत श्यनो वषशत पुन ।
मण्डूकस्त्रिशद् वर्षाणि यातुधान पुनदश ॥३५॥
ऊणनाभिस्त्रिशद् वर्षाणि रेतोभक्षस्तु जायते ।
अन्धो जायेत सुश्रोणि पञ्च सप्त तथा नव ॥३६॥
गृध्रो द्वात्रिशद् वर्षाणि चक्रवाको दशव तु ।
शैवालभक्षकश्चैवमाकाशशयन तथा ॥३७॥
ब्राह्मणो जायते भूमि मण्डूकश्च पथि स्थित ।
आत्मकर्मापराधेन प्राप्त ससारसागरम् ॥३८॥
ततो मा भाषते ब्रह्मन् विष्णुर्मायाकरण्डक ।
क्रुद्धो भागवतो ब्रह्मन् यन शुद्धयति किल्बिषात् ॥४९॥
कृत्वा तेन व्रत चैव मम कमपरायण ।
षष्ठकालेन भुञ्जीत गृह्णन् भिक्षामनिन्दिते ॥
अष्टौ भिक्षा यथान्याय क्रुद्धो भगवता गृहे ॥५०॥
यत्र तेन विधानेन ब्रह्मन् कर्माणि कारयेत् ।
मुच्यते किल्विषात्तत्र एवमाह जनादन ॥५१॥
अकमण्येन पुष्पेण यो मामचयते नर ।
पतन तस्य वक्ष्यामि तच्छृणुष्व वसुन्धरे ॥६०॥
नाह तत्प्रतिगृह्णामि न चैवेते मम प्रिया ।
मूर्खैर्भागवतैर्दत्त मम विप्रियकारिभि ॥६१॥
पतन्ति रौरवे घोरे नरके तदनन्तरम् ॥६२ab॥

प्रायश्चित्त महाभागे येन शुद्धयन्ति मानवा ॥६७cd॥
एकाहार तत कृत्वा मासमेक वसुन्धरे ।
वीरासनविधि चैव कारयेत्सप्त वत्सरान् ॥६८॥
चतुथभक्तमेकेन वाश्नीत घृतपायसम् ।
दिनत्रय यावकेन वायुभक्षो दिनत्रयम् ॥६९॥
यस्त्वनेन विधानेन देवि कर्माणि कारयेत् ।
सवपापविनिमुक्तो मम लोक स गच्छति ॥७०॥
—(P 171-176)

## वीरमित्रोदय
## (पूजाप्रकाशे)

(वराहपु०) अध्याय १३५

रक्तवस्त्रेण सयुक्तो यो हि मामुपसपति ।
तस्यापि शृणु सुश्रोणि कम ससारमोक्षणम् ॥१॥
रजस्वलासु नारीषु रजो यत्त् प्रवत्तते ।
तेनासौ रजसा स्पृष्ट कमदोषेण जायते ॥२॥
वर्षाणि दश पञ्चैव तिष्ठते तत्र निश्चय ।
रजो भूत्वा महाभागे रक्तवस्त्रपरायण ॥३॥
यस्तु मामन्धकारे तु विना दीपेन सुन्दरि ।
स्पृशते च विना मन्त्रैरवशो रागमोहित ॥८॥
पतन तस्य वक्ष्यामि तच्छृणुष्व वसुन्धरे ।
तेन क्लेश समासाद्य क्लिश्यते हि नराधम ॥९॥
अन्धो भूत्वा महाभागे जन्मैक तु स तिष्ठति ।
सर्वाशी सवभक्षश्च मानवश्चैव जायते ॥१०॥
प्रायश्चित्त प्रवक्ष्यामि अन्धकारेषु य स्पृशेत् ॥१२ab॥
अक्ष्णो पट्ट बन्धयित्वा दिनानि दश पञ्च च ।
एकाहारस्ततो भूत्वा तिष्ठेच्चव समाहित ॥१३॥
यस्य कस्य च मासस्य एका च द्वादशी पुन ।
एकाह च तत कृत्वा तिष्ठेच्चव जलाशय ॥१४॥
ततो यवागू भुञ्जीत गोमूत्रेण समायुतम् ।
एव निस्तरते देवि जन्मससारसागरात् ॥१५॥
यस्तु कृष्णेन वस्त्रेण मम कमपरायण ।
भूमि कर्माणि कुर्वीत तस्य त्व पतन शृणु ॥१६॥
घुणो वै पञ्चवर्षाणि काष्ठभक्षश्च जायते ।
मशकस्त्रीणि वर्षाणि दशकस्त्रीणि पञ्च च ॥१७॥
मत्स्यो द्वादशवर्षाणि काको वषत्रय तथा ।
पञ्चवर्षाणि नकुलो मार्जारो नव पञ्च च ॥१८a-d॥

ततो ममापराधेन स्थित पारावतो भुवि ।
तिष्ठते मम पार्श्वे तु यत्रैवाह प्रतिष्ठित ॥१९॥
प्रायश्चित्त प्रवक्ष्यामि तस्य ससारमोक्षणम् ॥२०a b॥

सप्ताह यावक भुक्त्वा त्रिरात्र सप्त पिण्डिका ।
त्रीणि पिण्डास्त्रिवार तु एवमुच्येत किल्विषात् ॥२१॥

वाससाऽनवधौतेन यो मे कर्माणि कारयेत् ।
शुचिर्भागवतो भूत्वा मम कर्मानुसारत ॥२३॥

तस्य दोष प्रवक्ष्यामि अपराध च सुन्दरि ।
पतित येन ससारे वाससोच्छिष्टकारिणा ॥२४॥

देवि भूत्वा दुगतस्तु जन्म चैक न सशय ।
उष्ट्रश्चैक भवेज्जन्म ज म चैक खरस्तथा ॥२५॥

गोमायुरेक जन्मापि जन्म चैक हयस्तथा ।
सारङ्गस्त्वेकजन्मा वै मृगो भवति चकत ॥२६॥

सप्तजन्मोत्तर भूमि पश्चाद भवति मानुष ।
मद्भक्तश्च गुणज्ञश्च मम कमपरायण ।
निरपराधो दक्षश्च अहङ्कारविवर्जित ॥२७॥

प्रायश्चित्त प्रवक्ष्यामि मम भक्तसुखावहम् ॥३०cd॥

यावकेन त्र्यह तिष्ठेत् पिण्याकेन पुनस्त्र्यहम् ।
कणभक्षस्त्र्यह च स्यात फलभक्षस्तथैव च ।
शाकभक्षस्त्र्यह तिष्ठेत पयोभक्षो दिनत्रयम् ॥३१॥

श्वानोच्छिष्ट तु यो दद्यान् मम कमपरायण ।
पात तस्य प्रवक्ष्यामि ससारस्य महाद्भुतम ॥३३॥

श्वानो वै सप्तजन्मानि गोमायु सप्त वै तथा ।
उलूक सप्तवर्षाणि पश्चाज्जायेत मानव ॥३४॥

विशुद्धात्मा श्रुतिज्ञश्च मद्भक्तश्चैव जायते ।
गृहे भागवतोत्कृष्टे अपराधविवर्जित ॥३५॥
शृणु तत्त्वेन वसुधे प्रायश्चित्त महौजसम् ॥३६ab॥

मूलभक्षो दिनास्त्रीणि फलभक्षो दिनत्रयम् ॥३७ab॥

दध्याहारो दिनास्त्रीणि पायसेन दिनत्रयम् ।
वाय्वाहारो दिनास्त्रीणि स्नान कृत्वा दृढव्रत ॥३८॥

एव दिनान्येकविंश कृत्वा वै शुभलक्षणम् ।
अपराध न विन्देत मम लोक च गच्छति ॥३९॥

भुक्त्वा वाराहमास तु यस्तु मामुपसर्पति ।
पतन तस्य वक्ष्यामि यथा भवति सुन्दरि ॥४०॥
वराहो दशवर्षाणि भूत्वा चरति व वने ।
व्याघ्रो भूत्वा महाभागे समास्तिष्ठति सप्तति ।
कृमिभू त्वा समा सप्त तिष्ठते तस्य पुष्करे ॥४१॥

अथो व मूषिको भूत्वा वर्षाणि च चतुर्दश ।
एकोनविशवर्षाणि यातुधानश्च जायते ॥४२॥

शल्यकश्चाष्टवर्षाणि जायते स वनेचर ।
व्याघ्रास्त्रिशच्च वर्षाणि जायते पिशिताशन ॥४३॥

एव ससारिता गत्वा वराहामिषभक्षक ।
जायते विपुले सिद्धे कुले भागवतस्तथा ॥४४॥

गोमयेन दिना सप्त कणाहारेण सप्त वै ॥४७cd॥
पानीय च ततो भुक्त्वा तिष्ठेत्सप्तदिनानि वै ।
अक्षारलवणे सप्त सक्तुभिश्चत्रय तथा ॥४८॥

तिलभक्षस्तु सप्तैव सप्त पाषाणभक्षण ।
पयोभक्षस्तु सप्ताह कारयेच्छुद्धिमात्मन ॥४९॥

शान्तिदान्तिपरो भूत्वा अहङ्कारविवर्जित ।
दिनान्येकोनपञ्चाशच्चरेत्कृच्छ्र विशुद्धये ॥५०॥

विमुक्त सवकामेभ्यो ज्ञानवान् विगतज्वर ।
कृत्वा तु मम कर्माणि मम लोकाय गच्छति ॥५१॥

जालपाद भक्षयित्वा यस्तु मामुपसपति ।
जालपादस्ततो भूत्वा वर्षाणि दश पञ्च च ।
कुम्भीरो दशवर्षाणि दश वर्षाणि कच्छप ॥५२॥

तावद् भ्रमति ससारे मम चैवापराधत ॥५३ab॥

प्रायश्चित्त प्रवक्ष्यामि जालपादस्य भक्षणात् ॥५५ab॥

यावकान्नस्त्र्यह तिष्ठेत जलाहारो दिनत्रयम् ॥५६ab॥

अक्षारलवण कृत्वा पुनस्तिष्ठेत् दिनत्रयम् ।
एव पञ्चदशाहानि प्रायश्चित्त समाचरेत् ॥५७॥
—(p 176-181)

## वीरमित्रोदय

### (पूजाप्रकाशे)

(वराहपु०) अध्याय १३६

स्पृष्ट्वा तु दीपक सुभ्र यस्तु मामुपसपति ।
[अप्रक्षाल्यैव हस्तौ च मम कर्माणि कारयेत् ।]
तस्यापराधाद् वै भूमि फल प्राप्नोति मानव ॥१॥

यस्य कस्य च मासस्य शुक्लपक्षस्य द्वादशी ।
चतुर्थकालमाहार आकाशशयन तथा ॥५॥

दीप दत्वा **वरारोहे भवन्ति** मनुजा भुवि ॥६ab॥
श्मशान यो नरो गत्वा **स्नातो मामुपसपति** ॥८ab॥
जम्बूको जायते **भूमि** वर्षाणि नव पञ्च च ।
**गृध्रश्च** नववर्षाणि जायते **खेचरस्तथा** ।
**चरतो** मानुष मास उभौ तौ गृध्रजम्बुको ॥९॥
पिशाचो जायते तत्र वर्षाणि नव पञ्च च ॥१०ab॥
कृत्वा चतुथभक्ष तु **कृत्वा तु** दश पञ्च च ।
आकाशशयन कुर्यादेक**वासा** कुशास्तरे ॥४८॥
प्रभाते पञ्चगव्य तु **प्राशयेत्**कमकारणात् ।
विमुक्त सवपापेभ्यो **विष्णुलोक च** गच्छति ॥४९॥
पिण्याक भक्षयित्वा तु **यस्तु** मामुपसपति ॥ ५०ab॥
**जम्बूको** दशवर्षाणि **बकश्चैव स मानव** ।
जायते मानवस्तत्र मम कमपरायण ॥५१॥
यावकेन दिनैक तु तक्रेण सह कारयेत् ।
एकपिण्डविमिश्रेण उदकेन **तथापरम्** ॥५३॥
एव ततो विधि कृ**त्वा** मम कमपरायण ।
रात्रौ वीरासन कु**र्यादाकाशे कायशोधनम** ॥५४॥
आकाशशयन कृत्वा प्रभाते **तु समाहित** ।
पञ्चगव्य तत पीत्वा शीघ्र पापात् प्रमुच्यते ॥५५॥
**यो वै वराहमासेन** मम कुर्वीत प्रापणम् ॥५७ab॥
**यावन्मात्राणि वाराह गात्रे रोमाणि सन्ति वै** ।
तावद् वर्षसहस्राणि नरके पततेऽशुभे ॥५९॥
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
वाराहेण तु मासेन यस्तु कुर्वीत प्रापणम् ॥६०॥
यावन्ति तत्र सिक्थानि भाजन**े सस्थितानि वै** ।
**तावद वर्षसहस्राणि** शौकरी योनि**माप्नुयात** ॥६१॥
फलाहा**रस्तु सप्ताह सप्त** मूलाशन तथा ।
दिनानि सप्त तिष्ठेत **तथा** वै पायसेन च ॥६६॥
**तक्रेण** सप्तदिव**स** सप्त यावकभोज**नम्** ।
**दध्याहारो भवेत** सप्त **अनङ्गारविवर्जित** ॥६७॥
**यस्त्वेव कुरुते भूमि** मयोक्त कमससदि ।
प्रायश्चित्त महाभागे मम **लोक स गच्छति** ॥६८॥
**मद्यपस्तु** वरारोहे प्रविशेद् भवन मम ॥६९ab॥
दशवर्षसहस्राणि दरिद्रो जायते पुन ॥७०ab॥
**यस्तु भगवतो** भूत्वा कामरागेण मोहित ।
**दीक्षितोऽपि पिबेन्मद्य** प्रायश्चित्त न विद्यते ॥७१॥

अग्निवर्णा सुरा पीत्वा **मुच्यते किल्बिषात्तत** ॥७२cd॥
**पारक्येणावधूतेन यस्तु मामुपसपति** ॥८०ab॥
करोति मम कर्माणि स्पशते मा **तथा स्थित** ।
मगो जायेत सुश्रोणि वर्षाणि **दश** सप्त च ॥८१॥
हीनपादेन जायेत चैक जन्म वसुन्धरे ।
मूखश्च क्रोधनश्चैव **मम भक्तश्च जायते** ॥८२॥
अष्टभक्त तत कृत्वा मम कर्मपरायण ।
**माघमासस्य सुश्रोणि** शुक्लपक्ष **तु** द्वादशीम् ॥८४॥
तिष्ठेज्जलाशये तत्र क्षान्तो दान्तो जितेन्द्रिय ।
अनन्यमानसो भूत्**वा** मम **कमपरायण** ॥८५॥
प्रभाताया तु शवर्य्यामुदिते **च** दिवाकरे ।
पञ्चगव्य तत पीत्वा मम कर्माणि कारयेत् ॥८६॥
**यस्त्वनेन** विधानेन प्रायश्चित्त समाचरेत् ।
सवपापविनिमुक्तो मम लोकाय गच्छति ॥८७॥
अदत्त्वा यो नवान्नानि मम कर्मपरायण ।
**भुङक्ते भूमि न चान्नानि परदत्तानि** कानिचित् ॥८८॥
पितरस्तस्य नाश्नन्ति वर्षाणि दश पञ्च च ॥९०cd॥
उपवास त्रिरात्र तु **एकरात्र तथव च** ।
आकाशशयन कृत्वा चतुर्थेऽह्नि शुद्धयति ॥९३॥
एव **ततो** विधि कृत्वा उदिते च दिवाकरे ।
पञ्चगव्य तत पीत्वा शीघ्र मुच्येत किल्बिषात् ॥९४॥
अदत्त्वा गन्धमाल्यानि **धूप यो मे** प्रयच्छति ।
**मृतोऽसौ** जायते **भूमे** यातुधानो न सशय ॥९६॥
यस्य कस्य **च** मासस्य शुक्लपक्षे **तु** द्वादशीम् ।
उपोष्य चाष्टभ**क्तन आकाशशयन स्वपेत** ॥९९॥
प्रभाताया तु शर्वर्य्यामुदिते च दिवाकरे ।
पञ्चगव्य तत पीत्वा शीघ्र मु**च्येत्** किल्बिषात् ॥१००॥
**उपानद् गूढपादस्तु मम स्थान विशेत्तु य** ।
चर्मकारस्तु जायेत **स वर्षाणि** त्रयोदश ॥१०२॥
**ततो जन्मपरिभ्रष्ट** शूकरो जायते नर ।
शूकराच्च परिभ्रष्ट श्वानस्तत्रैव जायते ॥१०३॥
ततो श्वानात्परिभ्रष्ट **मनुष्यश्चैव** जायते ।
मद्भक्तश्च विनीतश्च अपराधविवर्जित ॥१०४a d॥
भेरी शब्दमकृत्वा तु यस्तु मा प्रतिबोधयेत् ।
बाधिरो जायते **भूमे एक** जन्म न सशय ॥१०६॥

यस्य कस्य च मासस्य शुक्लपक्षे तु द्वादशीम् ।
आकाशशयन कृत्वा शीघ्र मुच्येत् किल्विषात् ॥१०८॥
प्रभूतमन्न भुक्त्वा वै अजीर्णेन परिप्लुत ।
उदगारेण समायुक्तो यस्तु मामुपसपति ॥११०॥
जन्म चक भवेत श्वा व जन्म चक च वानर ।
शृगालो जन्म चेक च छागश्चैवैक जन्मनि ।
एक जन्म भवेदन्धो मूषिकश्च पुनर्भवेत ॥१११॥
भावितश्चैव ससारे जायते विपुले कुले ।
शुद्धो भागवतश्रेष्ठो ह्यपराधविवर्जित ॥११२॥
यावकेन त्र्यहतिष्ठेन्मूलेन च पुनस्त्र्यहम् ।
फलाहारो दिनास्त्रीणि अक्षारलवणस्त्र्यहम ॥११४॥
पायसेन दिनांस्त्रीणि सक्तुभिश्च दिनत्रयम् ।
वायुभक्षस्त्र्यह तिष्ठेदाकाशशयन कुशे ॥११५॥
प्रभाताया तु शवर्य्यामुदिते च दिवाकरे ।
पञ्चगव्य पिबेद्धरि शरीरपरिशोधनम् ॥११६॥
य एतेन विधानेन प्रायश्चित्त समाचरेत् ।
न तस्य भवते दोषो मम लोक च गच्छति ॥११७॥
यस्तु भागवतो नित्य पठते च दृढव्रत ।
कृत्वा सर्वापराधानि न स पापेन लिप्यते ॥१२२॥
—(p 181-187)

[कृ क p 189 L 58]

कृत्यकल्पतरु

(तीर्थविवेचनकाण्डे)

(वराहपु॰) अध्याय १३७

सूकरमाहात्म्यम्—वराह उवाच ।

पर कोकामुख स्थान स्थान कुब्जाम्रक पर ।
पर च सौकर स्थान सवससारमोक्षणम् ॥७॥
यत्र सस्था मया देवि उद्धृतासि रसातलात् ।
तत्र भागीरथी गङ्गा मम शौचार्थमागता ॥८॥
शृणु पुण्य महाभागे मम क्षेत्रे तु सुन्दरि ।
यदाप्नोति महाभागे गत्वा च सौकर प्रति ॥१३॥
दश पूर्वान् स्वकान् वश्यानपरान् सप्त च पच च ।
स्वग नयति तास्तत्र मातृत पितृतश्च ह ॥१४॥
गमनादेव सुश्रोणि तथैव मुखदशनात् ।
सप्तजन्मान्तर भद्रे जायते वि ले कुले ॥१५॥
एव वै मानुषो भूत्वा अपराधविवर्जित ।
गमन तस्य क्षेत्रस्य मरण तत्र कारयेत् ॥१७॥
ये मृतास्तत्र सुश्रोणि क्षेत्रे सूकरके मम ॥१८ab॥
चक्रतीर्थं महाभागे चक्र यत्र प्रतिष्ठितम् ॥२०ab॥
तत्र गत्वा महाभागे तदन्वायशुभ शुचि ।
स्नान कुर्याद्यथान्याय माघवे मासि द्वादशीम् ॥२१॥
दशवषसहस्राणि दशवषशतानि च ।
धनधान्यसमृद्धस्तु जायते विपुले कुले ॥२२॥
धन्वी तूणी शरी खड्गी जायते च चतुर्भुज ।
नरो भूत्वा महाभागे स मुक्त सर्वकिल्विषात् ॥२५॥
अन्तकाले महाभागे यो गच्छेच्छौकर प्रति ॥२६cd॥
तस्य पुण्य प्रवक्ष्यामि स्नातस्यापि यशस्विनि ॥२८ab॥
पातकान्यपि य कृत्वा मूर्खो भूत्वा दृढव्रत ।
कौमुदस्य तु मासस्य शुक्लपक्षे तु द्वादशीम् ॥२९॥
तारिता पितस्तेन तथैव च पितामहा ॥३०ab॥
यावन्ति जलबिन्दूनि तस्य गात्रेषु सुन्दरि ।
तावद्वषसहस्राणि मद्भक्तश्चव जायते ॥३१॥
मृतास्तत्र विशालाक्षि रूपतीर्थे महौजसि ।
दीप्तिमन्तश्च जायेरन द्युतिमन्तश्चतुर्भुजा ॥३५a-d॥
पुनरन्यत्प्रवक्ष्यामि तत्र सौकरके मम ।
योगितीर्थमिति ख्यात दुर्विज्ञेयमृषेरपि ॥४०॥
योगितीर्थे च ये स्नात्वा मम कमपरायणा ॥४१ab॥
क्रोधरागविनिर्मुक्तास्ते यान्ति कृतनिश्चया ॥४२ef॥
अहोरात्रोषितस्तत्र य करोति यशस्विनि ।
तीर्थे स्नान विनिर्मुक्तो मम कमपरायण ॥४३c f॥
स त मृगयते तीर्थं योगायतन सस्थित ।
स च त लभते तीर्थ मत्प्रसादान्न सशय ॥४४a-d॥
तत्र प्राणान् परित्यज्य मम कर्मपरायण ॥४५ab॥
एतत्ते कथित भद्रे योगितीर्थं महाफलम् ॥४६ab॥
अस्य चिह्न प्रवक्ष्यामि योगतीर्थस्य सुन्दरि ॥४७ab॥
मागशीषस्य मासस्य शुक्लपक्षे त द्वादशीम ।
अकस्मादन्धकारोऽत्र तस्मिंस्तीर्थे तु जायते ॥४८॥
त्रीणि हस्तसहस्राणि त्रीणि हस्तशतानि च ।
त्रयो हस्ता विशालाक्षि परिमाण विधीयते ॥४९॥
एतच्चिह्न ततो दष्ट्वा मरण योऽत्र कारयेत् ।
स्नान चैव विशालाक्षि पूर्वोक्ता गच्छते गतिम् ॥५०॥
एतच्चिह्न महाभागे योगितीर्थे मयि स्थिते ।
आश्रयेत् सिद्धिकामस्तु यदीच्छेत् परमा गतिम् ॥५१॥

पुनरन्यत प्रवक्ष्यामि तीर्थे सौकरके मम ।
यत्र तप्त तपश्चैव सोमेन तदनन्तरम् ॥५२॥

सोमेन रचिता भूमिदृश्यते चन्द्रम प्रभा ॥८३ab॥
आत्मन पश्यति छाया यथान्यायपथे स्थित ।
सोमश्चैव न दृश्यते एष वै विस्मय पर ॥८४॥

एतत्ते कथित भद्रे सोमतीर्थविनिश्चितम ।
भवन्ति मनुजा येन त्यक्त्वा ससारसागरम् ॥८६॥

तस्य पूर्वेण पार्श्वेण तीर्थं गध्रवट स्मतम् ।
यत्र कामो मृतो गृध्रो मानुषत्वमुपागत ॥९०॥

स्नान साकोटके तीर्थे य प्राप्नोति च माधवि ॥२६५cd॥

दशवषसहस्राणि दशवषशतानि च ।
नन्दन वनमाश्रित्य मोदते तत्र वै सदा ॥२६६॥

पुनरन्यत् प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
तीथ वैवस्वत नाम आदित्यो यत्र तप्यते ।
तेन तप्त महाभागे पुत्रार्थेन यशस्विनि ॥२८१॥

अष्टमेन तु भक्तेन यस्तु स्नायीत सुन्दरि ।
दशवषसहस्राणि आदित्येन स मोदते ॥२९०॥

अथवा म्रियते तत्र तीर्थे वैवस्वते शुभे ।
न स गच्छति सुश्रोणि यमस्य भवन क्वचित् ॥२९१॥

मरण च प्रवक्ष्यामि तत्र सौकरके भुवि ॥२९२cd॥

कृत्वा ह्यनशन चैव दिनानि दश पञ्च च ।
सवसङ्गान्परित्यज्य मम लोकाय गच्छति ॥२९३॥
—(p 209 212)

[ वी मि (ती प्र) P 376 L20 22 23 ○ ]

[ –L2 वी मि मोचक (→मोक्षण) –L5 वी मि क्षेत्रेऽत्र –L9 वी मि मुखस्य मम दशनात –L12 वी मि तीथस्य (→क्षेत्रस्य) –L15 वी मि तदर्थाय शुभ शुचि ]

## वीरमित्रोदय

### ( तीथप्रकाशे )

(वराहपु०) अध्याय १३७

तारित सवससारात् श्वेतद्वीपाय गच्छति ॥२६ab॥
—(p 376)

यदि देव प्रसन्नोऽसि देयो मा वाञ्छितो वर ।
मम गर्भगतो भूत्वा विष्णो मत्पुत्रता व्रज ॥२८५॥
—(p 501)

## कृत्यकल्पतरु

### (नियतकालकाण्डे)

(वराहपु०) अध्याय १३९

षष्ठ्यष्टम्यमावास्या उभौ पक्षौ चतुर्दशी ।
अस्नाताना गति यास्ये यद्यह नागमे पुन ॥५१॥
—(p 358)

[ च चि (का नि ख ) P 725 L2 ○ कृ र P 547 ]

## चतुर्वर्गचिन्तामणि

### (व्रतखण्डे द्वितीयभागे)

(वराहपु०) अध्याय १३९

तथा शृणुत तत्त्वेन मे भूमि कथ्यमानथ ।
मम गाथाप्रभावेण सिद्धि प्राप्तो महौजसीम ॥३०॥

तत्रैव चाश्रमे कश्चिच्चाण्डाल कृतनिश्चय ।
दूराज्जागरणे गायेन्मम भक्तिसमन्वित ॥३१॥

एव तु गायतस्तस्य जग्मुवर्षाण्यनेकश ।
श्वपाक सुगुण सोथ मद्भक्तश्च वसु धरे ॥३२॥

कौमुदस्य तु मासस्य शुक्लपक्षस्य द्वादशीम् ।
सुसङ्गते जने याते वीणामादाय जग्गरम ॥३३॥

ततोऽद्धमार्गे चाण्डालो गृहीतो ब्रह्मराक्षसै ।
अल्पप्राण श्वपाको वै बलवान् ब्रह्मराक्षस ॥३४॥

दु खेन चैव सतप्तो न शक्नोति विचेष्टितुम् ।
स च प्रोक्त श्वपाकेन बलवान् ब्रह्मराक्षस ।
कि त्वया चेष्टित मह्य यस्त्वेव परिधावसि ॥३५॥

श्वपाकवचन श्रुत्वा तदा व ब्रह्मराक्षस ।
उवाच मधुर वाक्य मानुषोच्चारलोलुप ॥३६॥

अद्य मे दशरात्रोऽय निराहारस्य गच्छति ।
धात्रासुविहितोऽसि त्वमाहारार्थे पुर स्थित ॥३७॥

अद्य ते भक्षयिष्यामि नरमास च शोणितम् ।
पीत्वा चैव यथान्याय यथा वा तव रोचते ॥३८॥

ब्रह्मरक्षोवच श्रुत्वा श्वपाको गीतलालस ।
राक्षस छन्दयामास मम भक्त्या व्यवस्थित ॥३९॥

एवमेतन्महाभाग भक्षाय समुपागत ।
अवश्यमेव कत्तव्य धात्रा दत्त यथा तव ॥४०॥

पश्चात्खादसि मा रक्षो जागरे विनिवर्त्तिते ॥४१ef॥

विष्णो सतोषणार्थाय ममैतद व्रतमुत्तमम् ।
सरक्ष व्रतभङ्गाद्वै देवनारायण प्रति ।
जागरे विनिवृत्ते तु मां भक्षय यदिच्छसि ॥४२॥

श्वपाकस्य वच श्रुत्वा ब्रह्मरक्ष क्षुधार्दितम् ।
उवाच मधुर वाक्य श्वपाक तदनन्तरम् ॥४३॥

मिथ्या वदसि चाण्डाल त्व कथ पुनरेष्यसि ॥४४ab

को हि रक्षोमुखादभ्रष्टो मानवो विनिवर्त्तते ॥४४ef॥

राक्षसस्य वच श्रुत्वा चाण्डालो धर्ममस्थित ।
उवाच मधुर वाक्य राक्षस पिशिताशनम् ॥४५॥

यद्यप्यल हि चण्डाल पूवकमविदूषित ।
प्राप्तोऽस्मि मानुष जन्म गर्हितेनान्तरात्मना ॥४६॥

शृणु तत्समय रक्षो येन मे पुनरागम ।
दूरस्थ जागर कृत्वा लोकनाथस्य रात्रित ॥४७a d॥

सत्यमूल जगत्सव लोके सत्य प्रतिष्ठितम् ।
सत्येन लेभिरे सिद्धिमृषयो ब्रह्मवादिन ॥४८॥

ब्रह्मघ्ने च सुरापे च चौरे भग्नव्रते तथा ।
तेषा गति प्रपद्येव नागमिष्यामि यद्यहम् ॥५४॥

ब्रह्मराक्षसमुक्तस्तु श्वपाक कृतनिश्चय ।
पुनर्गायति मत्स्थ वै मम भक्त्या व्यवस्थित ॥५६॥

अथ प्रभाते विमले गीत नृत्य च जागरे ।
नाम्ना श्वपाका गायन्ति श्वपाको न निवर्त्तते ॥५७॥

तस्य तद् वचन श्रुत्वा श्वपाक सत्यसङ्कर ।
उवाच मधुर वाक्य पुरुषादस्य[1] ससदि ॥५८॥

समयो मे कृत पूवमग्रतो ब्रह्मरक्षस ।
तत्राह गन्तुमिच्छामि नात्र कार्या विचारणा ॥५९॥

ततो राक्षससान्निध्य श्वपाक इत्युवाच ह ॥६०ab॥

गच्छ चण्डाल भद्र ते गन्तु तत्र न चार्हसि ।
यत्रासौ राक्षस प्राप्त पिशितासनससद ॥६१॥

अथोवाच श्वपाकोऽसौ मरणे कृतनिश्चय ॥६२cd॥

नाहमेव करिष्यामि यथा त्व वदसेऽनघ ।
न चाह नाशये सत्यमेतन्मे निश्चित व्रतम् ॥६३॥

नाह समयमुत्सृज्य शपथांश्च कदाचन ।
सत्यमित्थ करिष्यामि गच्छ तावन्नमोऽस्तु ते ॥६५॥

एव प्रचारण तस्मिन्व श्वपाके सत्यवादिनि ।
ब्रह्मरक्षसि सत्यत्वात सत्यवाक्यप्रभाषणात् ॥६६॥

दृष्ट्वा तु राक्षस तत्र श्वपाकस्तमुवाच ह ॥६७ab॥

आगतोऽस्मि महाभाग गीत्वा गाथा यथोप्सिताम् ।
विष्णोर्वै लोकनाथस्य मम पूर्णा मनोरथा ॥६८॥

एह्येहि मम गात्राणि भक्षयस्व यथेप्सितम् ॥६९ab॥

श्वपाकस्य वच श्रुत्वा प्रोवाच ब्रह्मराक्षस ॥७१ab॥

तव तुष्टोऽस्म्यह वत्स सत्यधर्मानुपालनात ।
चाण्डालस्य विधिज्ञस्य यस्य वै बुद्धिरीदशी ॥७२॥

तत प्रोवाच रात्रौ च विष्णिवज्ये जागर कृत ।
फल गीतस्य मे देहि यदि जीवितुमिच्छसि ॥७६॥

त्वा भक्षयामीत्येवोक्त गीते पुण्य किमिच्छसि ॥८१ef॥

श्वपाकस्य वच श्रुत्वा ब्रह्मरक्षो जगाद ह ।
एकयामस्य मे देहि पुण्य शान्तस्य वै फलम् ॥८२a-d॥

त राक्षसमुवाचाथ चाण्डालो गीतलुब्धक ॥८३ab॥

न च याम्यफल दद्मि ब्रह्मराक्षसनवेप्सितम् ।
पिबस्य शोणित मेऽद्य यत्त्वया पूर्वभाषितम् ॥८४॥

श्वपाकस्य वच श्रुत्वा राक्षस प्रत्यभाषत ।
एकगीतस्य मे देहि यत्फल विष्णुससदि ॥८५ad॥

नाम्नाह सोमशर्मेति ब्राह्मणो ब्रह्मयोनिना ।
सूत्रमन्त्रपरिभ्रष्टो यज्ञकमसु निष्ठित ॥८८॥

ततोऽस्मि कृतवान यज्ञ लोभमोहप्रपीडित ॥८९ab॥

तस्य यज्ञस्य दोषेण जातोऽस्मि ब्रह्मराक्षस ॥९१ab॥

मन्त्रहीन च यद दत्त स्वरहीन च यत्कृतम् ॥९२ab॥

परिमाण च रूप च मया नात्रोपलक्षितम् ।
लाभलोभस्य दोषेण योनि प्राप्तोऽस्मि राक्षसीम् ॥९३॥

त्व तु गीतप्रदानेन मा तारयितुमर्हसि ।
मुच्येय राक्षसत्वाच्च विष्णुगीतप्रसादत ॥९४॥

ब्रह्मरक्षोवच श्रुत्वा श्वपाक सशितव्रत ।
बाढमित्येव तद् वाक्ये ब्रह्मराक्षसमब्रवीत् ॥९५॥

गीतवानस्मि यत्पश्चात स्वरमेकमनुत्तमम् ।
फलेन तस्य भद्र त्वा राक्षसत्वादमोचयम ॥९६॥

सकृद गायति सयुक्त कौशिक विष्णुसन्निधौ ।
स तारयति दुर्गाणि श्वपाको राक्षस तथा ॥९७॥

एव तत्र वर लब्ध्वा स तदा ब्रह्मराक्षस ।
जातस्तु विमलो भद्रे शरदीव निशाकर ॥९८॥

श्वपाकश्चापि सुश्रोणि मम चैवोपगायनात ।
कृत्वा सुविमल कर्म सोऽपि ब्रह्मत्वमागत ॥९९॥

एतद भूमि कथा सर्वा कथित तव सुन्दरि ॥१००ab॥
—(p 985 990)

## वीरमित्रोदय

## (भक्तिप्रकाशे)

(वराहपु०) अध्याय १३९

गायन्मम यशो नित्य भक्त्या परमया युत ॥२७cd॥

तावद् वर्षसहस्राणि इन्द्रलोके महीयते ॥२३cd॥

एतत्ते कथित देवि **गायनस्य फल महत** ।
यस्य गीतस्य शब्देन तरेत् ससारसागरम् ॥१०३॥
वादित्रस्य प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
प्राप्तवान् **मानुषो** येन **देवेभ्य समतां स्वयम्** ॥१०४॥
—(p 33)

शपातालप्रयोगेन सन्निपातेन वा पुन ।
नवर्षसहस्राणि नववर्षशतानि च ।
कुबेरभवन गत्वा मोदते वै यदच्छया ॥१०५॥
कुबेरभवनाद् भ्रष्ट स्वच्छन्दगमनालय ।
**शपादितालसपातैमम लोक स** गच्छति ॥१०६॥
नृत्यमानस्य वक्ष्यामि तच्छृणुष्व वसुन्धरे ।
मानवो येन गच्छेत्त् छित्वा ससारबन्धनम् ॥१०७॥
त्रिंशद्वर्षसहस्राणि त्रिंशद्वषशतानि च ।
पुष्करद्वीपमासाद्य स्वच्छन्दगमनालय ।
फल प्राप्नोति सुश्रोणि मम कमपरायण ॥१०८॥
रूपवान् गुणवान् शूर शीलवान् **सत्पथे** स्थित ।
मद्भक्तश्चैव जायेत ससारपरिमोचित ॥१०९॥
—(p 33-34)

## कृत्यकल्पतरु

## (तीर्थविवेचनकाण्डे)

(वराहपु०) अध्याय १४०

कोकामुखमाहात्म्यम्—

वराह उवाच ।

नास्ति कोकामुखात्क्षेत्र नास्ति कोकामुखाच्छुभम् ।
नास्ति कोकामुखात्स्नान नास्ति कोका**मुखात्**प्रियम् ॥१०॥
**शुचि** कोकामुख गत्वा **पर योगमवाप्नुयात** ।
कर्माणि **रक्त कुर्याच्चेविष्ट** भवति चात्मन ॥११॥
यानि यानि च क्षेत्राणि त्वया पृष्टो वसुन्धरे ।
कोकामुखसम **तीर्थं** न भूत न भविष्यति ॥ १२ ॥
मम **सा** परमा मूर्तिर्न ता जानन्ति मोहिता ।
**स्थिता** कोकामुखे **भूमि** एतत्ते कथित मया ॥१३॥
पञ्चयोजनविस्तारे **क्षेत्रे** कोकामुखे मम ।
**यस्तीर्थानि** विजानाति न स पापेन लिप्यते ॥९१॥

**तत्र** कोकामुखे **तीर्थे स्थितोऽह** दक्षिणामुख ॥९२cd॥
वराहरूपी **भगवांस्तिष्ठामि** पुरुषाकृति ॥९३cd॥

वामोन्नतमुख कृत्वा **पञ्चदष्ट्रासमन्वितम्** ।
पश्यामि च जगत्सव ये च भक्ता मम प्रिया ॥९४॥

यदि कोकामुख गच्छेत् कदाचित्कालपर्ययात ।
**न तत स** निवर्त्तेत यदीच्छेद **गतिमुत्तमाम** ॥९६॥

न साख्येन न योगेन सिद्धो याति महत्पदम् ।
**यदि** कोकामुख **यस्तु तवैतत्कथित** मया ॥९८॥
—(p 213 214)

[वी मि (ती प्र) P 455]

[-L2 वि मि स्थान (→स्नान) -L7 मुक्तिन (→मूर्तिन) -L8 स्थिता (→स्थिता)]

## वीरमित्रोदय

## (तीर्थप्रकाशे)

(वराहपु०) अध्याय १४१

बदरिकाश्रममाहात्म्यमधिकृत्य—

वराह उवाच—

तस्मिन् हिमवत पृष्ठे स्थान गुह्य पर मम ।
**तत्राहमग्निना भूमि** तपसा **परितोषित** ॥१॥

[**अग्निना सदशो भूत्वा** कृत्वा कम सुदुष्करम् ।]
प्राप्नुवन्ति च **मद्भक्ता बदर्यां गुह्यमुत्तमम्** ॥२॥

सुदुर्लभ च तत्क्षेत्र हिमकूटशिला**तलम** ।
यस्तु तत्प्राप्नुते क्षेत्र **हिमकूटशिलातलम्** ॥३॥

ब्रह्माण्डकुण्डेति विख्यात**मस्ति तत्र** शिलोच्चये ॥४ab॥

स्नान करोति यस्तत्र त्रिरात्रोपोषितो नर ।
अग्निष्टोमशतात्तुल्य फल प्राप्नोति मानव ॥५॥

उषित्वा तत्र कृच्छ्राणि यदि प्राणान् परित्यजेत् ।
ब्रह्मलोकमतिक्रम्य मम लोक स **गच्छति** ॥६॥

अग्निकुण्डे**ति विख्यात तत्र कुण्ड पर मम** ॥७ab॥
अस्ति सत्यपद नाम तस्मिन् क्षेत्रे पर मम ।
**तिस्र** शृङ्गात् पतन्ते **च** धारा मुसलसन्निभा ॥११॥

यस्तत्र कुरुते स्नान त्रिरात्रोपोषितो नर ।
सत्यवादी भवेद् दक्षो मम कर्मपरायण ॥१२॥

यस्तत्र मुञ्चति प्राणान् यदि कृत्वा जलाशनम् ।
सत्यलोकमतिक्रम्य मम **लोके स मोदते** ॥१३॥

अस्ति पञ्चशिख नाम बदर्य्यामाश्रमे मम ।
यत्र धारा पतेत् पञ्च पञ्चशृङ्गसमाश्रिता ॥१४॥

यस्तत्र कुरुते स्नान पञ्चस्रोते पर मम ।
मोदते नाकपृष्ठे तु सोऽश्वमेधफल लभेत् ॥१५॥

यद्यत्र मुञ्चते प्राणान् कृत्वा कर्म सुदुष्करम् ।
स्वर्गलोकमतिक्रम्य मम लोक प्रपद्यते ॥१६॥

चतु स्रोतमिति ख्यात तस्मिन् क्षेत्रे पर मम ।
**धारा पतन्ति चत्वारि** चतुरो दिशमाश्रिता ॥१७॥

यस्तत्र कुरुते स्नानमेकरात्रोषितो नर ।
मोदते नाकपृष्ठे तु मम भक्तश्च जायते ॥१८॥

अस्ति चोवशीकुण्डेति गुह्य क्षेत्र पर मम ।
यत्र चोवशी भित्त्वा दक्षि**णादूर्ध्व नि सृता** ॥५२॥

तदेतदुर्वशीकुण्डे एकरात्रोषितो नर ।
य स्नाति सर्वपापेभ्यो मुच्यते नात्र सशय ।
उर्वशीलोकमासाद्य क्रीडते कालमक्षयम् ॥६४॥

बदरीमाश्रम पुण्य यत्र तत्र स्थित स्मरेत् ।
स याति वैष्णव स्थान पुनरावृत्तिवर्जित ॥६६॥

—(p 487 489)

[कृ क P 216 L2 8 O]

[-L3 कृ क बदर्याश्रमुत्तमम -L6 कृ क यस्तु तत्प्राप्नुते अत्र कृतकृत्यो भवेन्नर -L7 कृ क ब्रह्माकुण्डेति विख्यात ]

## कृत्यकल्पतरु

### (तीर्थविवेचनकाण्ड)

### (वराहपु०) अध्याय १४३

**अथात्र मुञ्चति प्राणान् कृत्वा कर्म सुदुष्करम् ।**
॥२९ab, ३२ab॥

**तत्र स्नान तु कुर्वीत अहोरात्रोषितो नर ।**
॥३१ab, ३४ab, ४६ab॥
—(p 188)

**यत्र धारा पतत्येका विन्ध्यकूटाद्विनिस्सृता ।**
॥२१d, २७d॥
—(p 191)

**तत्र स्नानं तु कुर्वीत पञ्चरात्रोषितो नर** ॥२८ab॥
—(p 192)

## कृत्यकल्पतरु

### (तीर्थविवेचनकाण्डे)

### (वराहपु०) अध्याय १४३

मन्दारमाहात्म्यम्—

वराह उवाच ।

पुनरन्यत् प्रवक्ष्यामि एकान्ते श्रृणु सुन्दरि ।
स्थान मे परम गुह्य कर्मिणा तु सुखावहम् ॥१॥

जाह्नव्या दक्षिणे कूले विन्ध्यपृष्ठसमाश्रिते ।
मन्दारेति च विख्यात सर्वभागवतप्रियम् ॥२॥

तत्र त्रेतायुगे भूमि **कामो नाग**महाद्युति ।
भविष्यति न सदेह **मर्चा** स्थापयिष्यति ॥३॥

क्रीडमानोऽस्म्यह तत्र दृष्ट्वा मन्दारपुष्पितम् ॥९ab॥

**कुण्डान्येकादशान्यत्र विद्धि मे सन्ति सुन्दरि** ॥१०cd॥

**मम चैव** प्रभावेण मन्दारश्च महाद्रुम ॥११ab॥

द्वादश्या च चतुर्दश्या स पुष्पन्ति द्रुमोत्तम ॥१३cd॥

**तीर्थे** मन्दारकुण्डे तु एकभक्तोषितो नर ।
स्नान करोति शुद्धात्मा स गच्छेत्परमा गतिम् ॥१५॥

अत्र प्राणान् प्रमुञ्चति कुण्डे मन्दार**सज्ञिते** ।
तप कृत्वा **महाभाग** मम **लोक स** गच्छति ॥१६॥

मन्दार परम गुह्य तस्मिन् **गुह्य शिलोच्चये** ॥४९cd॥

दक्षि**णाथ** स्थित चक्र वामभागे च वै गदा ।
लाङ्गल मुसल चैव शङ्ख तिष्ठति चाग्रत ॥५०॥

एतन्न **जानते केचिन्मम** माया विमोहिता ।
**मुक्ता** भागवतास्**सर्वान्** **श्वेतवाराहसज्ञितान्** ॥५२॥
**—(p 217)**

[वी मि (ती प्र) P 454]

[-L8 वी मि विन्ध्ये (→विद्धि) -L18 मम माया प्रमोहिता -L19 मुक्त्वा (→मुक्ता), श्रितान्वा नाह सज्ञितान् ]

## कृत्यकल्पतरु

### (तीर्थविवेचनकाण्डे)

### (वराहपु०) अध्याय १४४

**तत्र स्नान प्रकुर्वीत षष्ठकालोषितो नर**
॥६१ab,७५ab,८४ab॥

तत्र स्नान प्रकुर्वीत चतु कालोपित नर ॥८८ab॥
—(P 187)

तत्र स्नान तु कुर्वीत अहोरात्रोषितो नर ॥५१ab॥
—(p 188)

अथात्र मुञ्चति प्राणान् लोभमोहविवर्जित ॥७६ab॥
—(p 190)

तत्र स्नान तु कुर्वीत पञ्चरात्रोषितो नर ।
गन्धर्वभवन गत्वा मोदते विगतज्वर ॥८४॥
—(p 191)

**कृत्यकल्पतरु**

**(तीर्थविवेचनकाण्डे)**

(वराहपु०) अध्याय १४४

शालग्राममाहात्म्यम्—

वराह उवाच ।

ममैतद् रोचते स्थान गिरिकूटे शिलोच्चये ।
शालग्राम इति ख्यात भक्तससारमोक्षणम् ॥४७॥

पञ्चदशात्र गुह्यानि शालग्रामे यशस्विनि ।
अद्यापि तत्र जानन्ति मुक्ता वाराहसज्ञितान ॥४९॥

तत्र देवह्रद नाम मम क्षेत्र यशस्विनि ।
तत्र क्रान्ता मया भूमि वलियज्ञविनाशने ॥९०॥

स ह्रदो वरदश् श्रेष्ठो मनोज्ञ शुभशीतल ।
अगाधश्च सदा भूमि देवानामपि दुलभ ॥९१॥

तस्मिन् ह्रदे महाभागे सदा मम कृतोदके ।
चक्राङ्का परितो मत्स्या पयटन्ति इतस्तत ॥९२॥

तस्मिन् देवह्रदे भूमि चतुर्विंशतिद्वादशीम् ।
सौवर्णानि च पद्मानि दृश्यन्ते उदिते रवौ ।
दृश्यन्ते तावदेतानि यावन्मध्यन्दिने स्थित ॥९४॥

तत्र स्नान प्रकुर्वीत दशभक्तोषितो नर ।
दशानामश्वमेधाना फल प्राप्नोति मानव ॥९५॥

अथात्र मुञ्चति प्राणान् मम चित्तव्यवस्थित ।
अश्वमेधफल भुक्त्वा मम लोकाय गच्छति ॥९६॥

पूर्वामुखस्त्वह तत्र शालग्रामे यशस्विनि ।
भविष्यामि न सन्देहो भूमि भागवतप्रिय ॥९८॥

अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
यत्र गुह्य पर क्षेत्र न जानन्ति विमोहिता ॥९९॥

शिवो मे दक्षिणे स्थाने तिष्ठते विगतज्वर ।
लोकाना प्रवर श्रेष्ठ सवलोकधरो हर ॥१००॥

तमवन्द्य तु गोविन्द वन्दमानस्य सुन्दरि ।
वृथागमनमित्याहुरेवमेतन्न सशय ॥१०१॥

शिव देव तु वन्दित्वा भूमि मां यश्च वन्दते ।
लभते पुष्कला सिद्धि या मया च प्रकीर्त्तिता ॥१०२॥

समस्त च मम क्षेत्र दशयोजनविस्तरम् ।
मृता अत्र नरा यान्ति मा सत्कर्मानुसारिण ॥१०३॥
—(p 219 220)

[वी मि (ती प्र) P 412–493]

[–L23 वी मि सवलोकधरो हर –L29 वी मि मतात्र पुनरायान्ति ]

**वीरमित्रोदय**

**(लक्षणप्रकाशे)**

(वराहपु०) अध्याय १४४

शालग्रामशिलालक्षणमधिकृत्य—

मया देवप्रसादेन श्रुत मन्दारवणनम् ।
मन्दारात्परम स्थान विष्णोस्तद्वक्कुमहसि ॥२॥

शृणु तत्त्वेन मे देवि यन्मा त्व परिपृच्छसि ।
कथयिष्यामि ते गुह्य शालग्राममितिश्रुतम् ॥३॥
—(p 496)

अथ दीर्घेण कालेन स ऋषि सशितव्रत ।
तप्यमानो यथान्यायमपश्यच्छालमुत्तमम् ॥१८॥

अभिन्नमतुलच्छाय विशाल पुष्पित तथा ।
मनोज्ञ च सुगन्ध च देवानामपि दुलभम् ॥१९॥

ऋषिर्ज्ञानपरिश्रान्त सालङ्कायनकोद्भुतम् ।
पश्यते च पुन शाल शुभाना शुभदशनम् ॥२०॥

ततो दृष्ट्वा महाशाल परिश्रान्तो महामुनि ।
विश्राम कुरुते तत्र द्रष्टुकामोऽथ मा मुनि ॥२१॥

शालस्य तस्य पूर्वेण स्थित पश्चान्मुखो मुनि ।
मायया मम मूढात्मा शक्तो द्रष्टु न मामभूत् ॥२२॥

तत पूर्वेण पार्श्वेण तस्य शालस्य सुन्दरि ।
वैशाखमासद्वादश्या मद् दर्शनमुपागत ॥२३॥

दृष्ट्वा मा तत्र स मुनिस्तपस्वी/शसितव्रत ॥२४ab॥
ततोऽह स्तूयमानो वै ऋषिमुख्येन सुन्दरि ॥३०ab॥

**प्राप्तश्च** परमा प्रीति तमवोच **ऋषि तदा** ।
साधु ब्रह्मन् महाभाग सालङ्कायन सत्तम ॥३४॥

तपसानेन सतुष्ट स्तुत्या चैवानया तव ।
वर वरय भद्र ते ससिद्धस्तपसा भवान् ॥३५॥

एवमुक्त स तु मया सालङ्कायनको **मुनि** ।
शालवृक्ष समाश्रित्य निभृतेनान्तरात्मना ॥३६॥

ततो मा भाषते देवि स ऋषि शसितव्रत ।
तवैवाराधनार्थाय तपस्तप्त मया हरे ॥३७॥

वृक्ष दक्षिणत कृत्वा **जगाम स्वाश्रम मुनि** ॥४६cd॥

**मम तद्रोचते** स्थान गिरिकूटशिलोच्चये ।
शालग्राममिति ख्यात भक्तससारमोक्षणम् ॥४७॥

—(p 496-498)

**नाद्यापि केचिज्जानन्ति मुच्यन्ते यरिह स्थिता** ।
तत्र विल्वप्रभ नाम गुह्य **क्षेत्र** मम **प्रियम्** ॥४९c-५०b॥

चक्रस्वामीति विख्यात तस्मिन् क्षेत्रे पर मम ।
चक्राङ्कितशिलास्तत्र दृश्यन्ते **च** इतस्तत ॥५३॥

चक्राङ्कितशिला यत्र **दृश्यन्ते** वरवर्णिनि ।
**तदेतद् विद्धि** वसुधे समन्ताद् योजनत्रयम् ॥५४॥

—(p 5 01)

**कृत्यकल्पतरु**

**(तीर्थविवेचनकाण्डे)**

(वराहपु०) अध्याय १४५

तत्र स्नान **प्रकुर्वीत** षष्ठकालोषितो नर ॥३९ab॥

—(p 187)

**अथात्र मुञ्चति प्राणान् कृत्वा कर्म सुदुष्करम्** ।
२७ab, २९ab॥

—(p 188)

**तत्र स्नान तु कुर्वीत एकरात्रोषितो नर** ॥२६ab॥
३५ab॥

--(p 190)

**तत्र स्नानं तु कुर्वीत पञ्चरात्रोषितो नर** ॥२८ab,
३२ab॥

—(p. 191)

**कृत्यकल्पतरु (तीर्थविवेचनकाण्डे)**

(वराहपु०) अध्याय १४५

कौमुदस्य तु मासस्य शुक्लपक्षे तु द्वादशीम् ।
त्रयाणा वाजपेयाना यज्ञाना **स्नानमात्रत** ।
फल प्राप्नोति सुश्रोणि **धृतमात्मनि** मा नर ॥३६॥

अथात्र मुञ्चति प्राणान् मम कर्मा**नुसारत** ।
वाजपेयफल भुक्त्वा मम लोक प्रपद्यते ॥३७॥

—(p 222)

**कृत्यकल्पतरु**

**(तीर्थविवेचनकाण्डे)**

(वराहपु०) अध्याय १४९

नन्दन वनमुत्सृज्य मम लोक **प्रपद्यते** ॥४७cd॥

—(p 187)

तत्र स्नान **तु** कुर्वीत पञ्च**रात्रोषि**तो नर ॥४६ab,
५४ab, ५९ab॥

—(p 191)

स्तुतस्वामिमाहात्म्यम्—वराह उवाच ।

स्तुतस्वामीति विख्यात **मम** क्षेत्र भविष्यति ।
द्वापर युगमासाद्य तत्र स्थास्यामि सुन्दरि ॥९॥

पुत्रोह वसुदेवस्य देवक्या गर्भनिस्सृत ।
वासुदेव इति ख्यात सर्वदानवसूदन ॥१०॥

आयसी प्रतिमा तत्र **ममाभेद्या न** सशय ॥४०cd॥

ब्रुवन्ति केचित्काष्ठेति आयसीत्यपरेऽब्रुवन् ।
पाषाणीति परे **ब्रूयु परे** व्रज**मयीति** च ॥४१॥

ऊर्ध्वा वा यदि वा**ऽधस्ताद्ब्रुवन्ति मम पार्श्वत** ।
**तेषां तथेति** स्पृशन्ति **शिरो** मध्ये **तु न क्वचिद्** ॥४२॥

ये च पश्यन्ति मा भूमि मणिपूरगिरौ **स्थितम्** ।
**त्रिसन्ध्यमवसन्तस्तु** मत्प्रसादाच्च **सुन्दरि** ॥४३॥

**ते सर्वे** किल्विषान्मुक्ता यान्ति ते परमा गतिम् ॥४४cd॥

सुगुह्य पूर्वपार्श्वे **तु** मम क्षेत्रस्य सुन्दरि ।
अदूरात् त्रीणि क्रोशानि परिमाण विधीयते ॥५६a-d॥

धूतपापेति विख्यात तत्र गुह्य पर मम ।
अदूरात्पञ्चक्रोशानि मम क्षेत्रस्य **पश्चिमे** ॥५७॥
तत्र **कुण्डे** महाभागे मम यद्रोचते जलम् ॥५८ab॥

तत्र स्नान प्रकुर्वीत पञ्चरात्रोषितो नर ।
**यद वशे दुष्कृत किञ्चिद्यच्च आत्मनि सस्थितम्** ।।५९।।

तत्र कृत्वोदक भद्रे धूतपापे यशस्विनि ।।६०ab।।

इन्द्रलोक समुत्सृज्य मम लोक स गच्छति ।।६१cd।।

**कृत्यकल्पतरु**
**(तीर्थविवेचनकाण्डे)**
(वराहपु०) अध्याय १४६

तत्राश्रय महाभागे धूतपापे शृणुष्व मे ।
वर्त्तते च विशालाक्षि मणिपूरगिरौ **स्थितम्** ।।६२।।

तावन्न पतते धारा यावत्पाप न धूतये ।
धूतपापे च सुश्रोणि धाराऽत्र पतते महीम् ।।६३।।

तत्तु क्षेत्र वरारोहे समन्तात्पञ्चयोजनम् ।
**तत्र** तिष्ठाम्यह देवि पश्चिमा दिशमास्थित ।।६५।।

तत्र चामलका भद्रे अदूरादधयोजनात् ।।६६ab।।

तात्र कश्चिद्विजानाति पापकर्मा नराधम ।।६७ab।।

उपोष्य च त्रिरात्राणि श्रद्दधानो जितेन्द्रिय ।
तत्र गत्वा वरारोहे उदिते तु दिवाकरे ।।६८।।

अथ मध्याह्नवेलाया यदि वास्तगते रवौ ।
एकचित्तेन गन्तव्य धृतिं कृत्वा **सुनिश्चलाम्** ।।६९।।

यस्तत्र लभते भद्रे फलमामलक शुभम् ।
पञ्चरात्रेण **पश्येत्तु** तस्मिन् भूतगिरौ **च माम्** ।।७०।।
—(p 222 224)

[वी मि (ती प्र) P 485 487]
[–L11 वी मि त्रिसध्य मा च सन्तस्तु]

**कृत्यकल्पतरु**
**(तीर्थविवेचनकाण्डे)**
(वराहपु०) अध्याय १४७

**तत्र स्नान प्रकुर्वीत षष्ठकालोषितो नर ।।३१ab।।**

**नन्दन वनमुत्सृज्य मम लोक प्रपद्यते ।।८३cd।।**

**अथात्र मुञ्चति प्राणान् कृत्वा कर्म सुदुष्करम्**
**।।६१ab, ८३ab।।**

**दुर्लभ पापकार्याणा सुलभ पुण्यकारिणाम्**
**।।७०cd,९३cd।।**

**मोदते सूर्यलोकेषु एवमेतन्न सशय ।।६०cd।।**

अथात्र मुञ्चति प्राणान् कृत्वा **चेन्द्रियनिग्रहम्**
।।६१ab।।

**सूयलोक परित्यज्य** मम लोक **स गच्छति**
।।६१cd,९२cd।।

**गुल्मवल्लीलताकीर्णं बहुपुष्पफलोदकम** ।।७३ef।।

सोमलोक समुत्सृज्य **मोदते मा च पश्यति** ।।७६cd।।

तत्राभिषेक कुर्वीत चतु कालसमन्वित ।।९१ab।।

तत्र स्नान **तु** कुर्वीत प**ञ्चरात्रोषितो** नर
।।३७ab,६६ab।।

तत्राभिषेक कुर्वीत चतु**कालोषितो** नर
।।४९ab,६०ab।।

मोदते सप्तद्वीपेषु **स्वच्छन्दगमनालय** ।।३७cd।।

तत्राभिषेक कुर्वीत षष्ठकालोषितो नर ।।५३ab।।

दशवषसह**स्रेषु मोदते कृतनिश्चय** ।।६६cd।।
—(p 187-193)

**कृत्यकल्पतरु**
**(तीर्थविवेचनकाण्डे)**
(वराहपु०) अध्याय १४७

द्वारकामाहात्म्यम्—

वराह उवाच ।

अस्ति द्वारवती नाम **निर्मिता विश्वकमणा** ।।७cf।।

पञ्चयोजन**विस्तीर्णा** दशयोजनमायता ।
वसाम्यत्र वरारोहे **पञ्चपञ्चाशत समा** ।।८।।

भारावतरण कृत्वा **देवाना च** महत्प्रियम् ।
पुनरेष्यामि सुश्रोणि **घातयित्वा महासुरान्** ।।९।।

अस्ति पञ्च**शरो** नाम **तस्मिन् गुह्य** पर मम ।
समुद्रतीरमुत्सृज्य यत्र **भक्तसुखावहम्** ।।३०।।

**तत्र स्नान तु कुर्वीत षष्ठनक्तोषितो नर ।**
**मोदते नाकपृष्ठे तु अप्सरोगणसकुले ।।३१।।**

**अथवा मुञ्चति प्राणान् मामेव प्रतिपद्यते ।।३२ab।।**

**प्लक्षो वै तत्र सुश्रोणि शतशाखो महाद्रुम ।**
**चतुर्विशतिद्वादश्या स भवेत् फलभागसौ ।।३३।।**

**फल च लभते कश्चिन्मुक्त्वा भागवत शुचिम् ।।३४cd।।**

**लभन्ते ये फल तत्र गुह्ये पञ्चशरस्य च ।**
**ते लभन्ते परा सिद्धिमेवमेतन्न सशय ।।३५।।**

प्रभासमिति विख्यात तस्मिन् **गुह्य** पर मम ।।३३ab।।

**तत्राभिषेक कुर्वीत** पञ्चरात्रोषितो नर ।
मोदते सप्तद्वीपेषु गुह्यानि च स गच्छति ।।३७।।

**अथवा** मुञ्चति प्राणान् प्रभासे गतकिल्विष ।
सर्व**लोकान** परित्यज्य मल्लोक **प्राप्नुते नर** ।।३८।।

पञ्चकुण्डमिति ख्यात तस्मिन् गुह्य पर मम ।।४३ab।।

तत्राभिषेक कुर्वीत पञ्च**रात्रो**षितो **नर** ।।४४ab।।

चतुर्विंशतिद्वादश्या मध्याह्ने च दिवाकरे ।
रौप्य सौवणक पद्म दृश्यते नात्र सशय ।।४७।।

**कादेवक**मिति ख्यात कुण्ड क्षेत्रे पर मम ।
**अत्र** पीत्वा महाभागे **वृष्णयोपयभक्षयम्** ।।५९।।

तत्राभिषेक कुर्वीत चतु **कालसमन्वित** ।।६०ab।।

अस्ति रैवतक नाम तस्मिन् क्षेत्रे पर मम ।
सवलोकेषु विख्यात **चन्द्रमा क्रीडते यत** ।।७३ad।।

बहूदकशिलापङ्क्ता गुहाश्चात्र दिशो दश ।
वापी च **शोभना** चैव देवानामपि दुलभा ।।४७।।

तत्राभिषेक कुर्वीत षष्ठकालोषितो नर ।
गच्छते सोमलोकाय कृतकृत्यो **भवेन्नर** ।।७५।।

**विष्णु**चङ्क्रमण नाम तस्मिन् क्षेत्रे पर मम ।
विद्धोस्मि तत्र व्याधेन प्राप्तो मूर्ति स्वका **पुन** ।।८९।।

तत्र कुण्ड महाभागे मणिपूरगिरो **स्थितम्** ।।९०ab।।

तत्राभिषेक कुर्वीत **नित्यकालमतन्द्रित** ।।९१ab।।

तस्मिन् क्षेत्रे महाभागे **स्थितोहमुत्तरामुख** ।
**सर्वभागवतप्रीत्यै** समुद्रतटमाश्रित ।।९७।।

अह रामेण सहित सा च **राका स्वसा** शुभा ।
**त्रयस्तत्रैव** तिष्ठामो द्वारकाया यशस्विनि ।।९८।।

—(P 225-227)

[ वी मि (ती प्र ) P 531-533 ]

[ -L5 वी मि मूर्तिमात्मनि शाश्वती -L12 वी मि पुण्यभागसौ -L20 वी मि प्राप्यते नर -L25 वी मि कादम्बकमिति ख्यात -L26 वी मि दृष्टयोयुगपत्क्षयम् -L40, वी, मि एका (→राका) ]

**कृत्यकल्पतरु**

**(तीर्थविवेचनकाण्डे)**

(वराहपु०) अध्याय १४८

तत्र स्नान **प्र**कुर्वीत षष्ठकालोषितो नर
।।२३ab,३१ab।।

**तत्र** स्नान **प्र**कुर्वीत चतु कालोषितो नर ।।३७ab।।
—(p 187)

तत्र स्नान तु कुर्वीत एकरात्रोषितो नर ।।१६ab।।
—(p 190)

**तत्र** कुण्ड महाभागे प्रसन्नविमलोदकम् ।।२९ab।।

तत्र स्नान तु कुर्वीत पञ्च**रात्रो**षितो नर
।।४४ab,५३ab।।
—(p 192)

एतन्मरणकालेऽपि स्मत्तव्य **मनसापि च** ।।६२ab।।
—(p 193)

**कृत्यकल्पतरु**

**( तीर्थविवेचनकाण्डे )**

(वराहपु०) अध्याय १४९

तत्र स्नान **प्र**कुर्वीत षष्ठकालोषितो नर ।।५५ab।।

तत्र स्नान **प्र**कुर्वीत एकभक्तोषितो नर ।।३८ab।।

अथात्र मुञ्चति प्राणान् कृत्वा कम सुदुष्करम् ।।६९ab।।

अथात्र मुञ्चति प्राणान् **लोभमोह**विवर्जित ।।४८ab।।

तत्राभिषेक कुर्वीत एक**रात्रो**षितो नर ।।४१ab।।

तत्र तिष्ठाम्यह भद्रे **दिश पूर्वां** समाश्रित ।
हिरण्यप्रतिमा कृत्वा **बृहद्रूपश्चतुर्भुज** ।।१०।।
यदीच्छेत्परमा सिद्धि सर्वससारमोक्ष**णीम्** ।।८०cd।।
—(p 187-193)

**कृत्यकल्पतरु**

**( तीर्थविवेचनकाण्डे )**

(वराहपु०) अध्याय १४९

लोहार्गलमाहात्म्यम्—

वराह उवाच ।
गुह्यमन्यत्प्र**वक्ष्यामि** कारण **सतत शुभे** ।।६cd।।
**अह सिन्धोस्तटे** भद्रे गत्वा **वै** त्रिशयोजनम् ।
**म्लेच्छमध्ये** वरारोहे हिमवन्त समाश्रित ।।७।।

तत्र लोहागल नाम निवासो मे विधीयते ।
गुह्य च परम स्थान समन्तात्पञ्चयोजनम् ॥८॥

दुगम दुस्सह चैव धावन परिवेष्टितम् ॥९ab॥

तत्र तिष्ठाम्यह भद्रे उदीची दिशमास्थित ॥१०ab॥

तत्र कुण्डे तु सुश्रोणि स्नान कुर्वीत निश्चितम् ।
उपोष्य तु त्रिरात्राणि विधिदृष्टेन कर्मणा ॥
तत्र स्वगसहस्रेषु मोदते नात्र सशय ॥१७॥

अन्यच्च ते प्रवक्ष्यामि तत्र यत्परमाद्भुतम् ॥१९ab॥

चतुर्विशतिद्वादश्या न मासेन विना मम ।
वलिर्हि दीयते तत्र सर्वकामविशोधन ॥२०॥

अश्वो मे कल्पितस्तत्र सवरत्नविभूषित ।
श्वेत कुमुदचक्राभ शङ्खचक्रसमन्वित ॥२१॥

शार्ङ्गमेतद्धनुस्तत्र अक्षसूत्र कमण्डलु ।
आसन भूषण दिव्य दीयते चान्नमुत्तमम् ॥२२॥

अस्मिन् गुह्ये महाभागे क्षेत्रे लोहागले मम ।
सिद्धिकामेन मर्त्येन गन्तव्य नात्र सशय ॥७६॥

समन्तात्पञ्चविंश तु योजनानि वरानने ।
न तस्य कर्मविद्येत एष मे निश्चय पर ॥७७॥
—(p 228–229)

[वी मि (ती प्र) P 490]

## कृत्यकल्पतरु
## (तीथविवेचनकाण्डे)
### (वराहपु०) अध्याय १५०

मथुरामाहात्म्यम्—

वराह उवाच ।

मथुरेति च विख्यात मुक्तिक्षेत्र पर मम ॥११cd॥

भविष्यति वरारोहे द्वापरे युगसस्थिते ॥२४ab॥

सुरम्या च प्रशस्ता च जन्मभूमिमम प्रिया ॥११ef॥

तत्र गुह्यानि मे भद्रे भविष्यन्ति प्रियाणि वै ।
पुण्यानि च प्रशस्तानि नृणा ससारमोक्षिणाम् ॥२७॥

तत्राह घातयिष्यामि दानवाश्च वरानने ॥२८ab॥
(p 186)

## वीरमित्रोदय
## (तीर्थप्रकाशे)
### (वराहपु०) अध्याय १५०

मथुरामाहात्म्यमधिकृत्य—

महामाघ्यां प्रयागे च यत्फल लभते नर ।
तत्फल लभते देवि मथुराया दिने दिने ॥१३॥

कार्त्तिक्या चैव यत्पुण्य पुष्करे तु वसुन्धरे ।
तत्फल लभते देवि मथुराया दिने दिने ॥१६॥

सन्निहत्या तु यत्पुण्य राहुग्रस्ते दिवाकरे ।
तत्फल लभते देवि मथुराया जितेन्द्रिय ॥१४॥

पूर्णे वषसहस्रे तु वाराणस्या तु यत्फलम् ।
तत्फल लभते देवि मथुराया क्षणेन हि ॥१५॥
—(p 504)

पृथिव्या यानि तीर्थानि आसमद्रसरासि च ।
मथुराया गमिष्यन्ति सुप्ते चैव जनादने ॥१९॥
—(p 507)

अविमुक्ते नर स्नातो मुक्ति प्राप्नोत्यसशयम् ।
तत्राथ मुञ्चति प्राणान् मम लोक स गच्छति ॥३३॥

विश्रान्तिसज्ञक नाम तीर्थं त्रैलोक्यविश्रुतम् ।
यस्मिन् स्नातो नरो देवि मम लोके महीयते ॥३४॥

अस्ति चान्यतर गुह्य सर्वससारमोक्षणम् ।
तस्मिन् स्नातो नरो देवि मम लोके महीयते ॥३८॥

प्रयाग नाम तीथ तु देवानामपि दुर्लभम् ।
तस्मिन स्नातो नरो देवि अग्निष्टोमफल लभेत् ॥३९॥
—(p 511)

तथा कनखल तीर्थं गुह्य तीर्थं पर मम ।
स्नानमात्रेण तत्रापि नाकपृष्ठे स मोदते ॥४१॥

अस्ति क्षेत्र पर गुह्य तिन्दुक नाम नामत ।
तस्मिन्स्नातो नरो देवि मम लोके महीयते ॥४२॥

तत पर सूर्य्यतीर्थं सर्वपापप्रमोचनम् ।
वैरोचनेन बलिना सूर्य्यस्त्वाराधित पुरा ॥४९a d॥

आदित्येऽहनि सक्रान्तौ ग्रहणे चन्द्रसूययो ।
तस्मिन् स्नातो नरो देवि राजसूयफल लभेत् ॥५५॥
—(p 512)

यत्र ध्रुवेण सततमिच्छया परम तप ।
तत्र वै स्नानमात्रेण ध्रुवलोके महीयते ॥५६a d॥

ध्रुवतीर्थे तु वसुधे य श्राद्ध कुरुते नर ।
पितन्सतारयेत् सर्वान् पितृपक्षे विशेषत ॥५७॥

दक्षिणे ध्रुवतीथस्य **ऋषितीर्थं** प्रकीर्त्तितम् ।
**तत्र** स्नातो नरो देवि मम लोके महीयते ॥५८॥

तत्रैव कोटितीर्थं **तु** देवानामपि दुल्लभम् ।
तत्र स्नानेन दानेन मम लोके महीयते ॥६१॥

तत्रैव बोधितीथ तु पितणाम**तिबल्लभम्** ।
पिण्ड दत्त्वा तु वसुधे पितृलोक स गच्छति ॥६३॥

द्वादशैतानि **देवाना दुर्ल्लभानि च तानि वै** ॥६५ab॥

**तेषा** स्मरणमात्रेण सवपापै प्रमुच्यते ॥६६ab॥

—(p 512–513)

## वीरमित्रोदय
## (तीर्थप्रकाशे)

(वराहपु०) अध्याय १५१

वन **तालवन चैव** द्वितीय वनमुत्तमम् ॥३४ab॥

**यत्र** स्नात्वा नरो देवि कृतकृत्योऽभिजायते ॥३४ef॥

वन **कुमुदवन चैव तृतीय वन**मुत्तमम् ॥३५ab॥

**तत्र गत्वा** नरो देवि मम लोके **महीयते** ॥३७cd॥

विमलस्य च कुण्डे तु सवपा**पाद्विमोच्यते** ॥३८ab॥

पञ्चम बाहुलवन **वनानामुत्तम** वनम् ।
तत्र गत्वा नरो देवि अग्निस्थान स गच्छति ॥३९॥

सप्तम तु वन भूमे खादिर लोकविश्रुतम् ।
तत्र गत्वा नरो भद्रे **नाग**लोक स **गच्छति** ॥४२॥

महावन चाष्टम तु सदैव तु मम प्रियम् ।
तस्मिन् गत्वा तु मनुज इन्द्रलोके महीयते ॥४३॥

लोहजङ्घवन नाम लोहजङ्घेन रक्षितम् ।
नवम तु वन देवि **सर्व**पातकनाशनम् ॥४४॥

वन विल्ववन नाम दगम देवपूजितम् ।
तत्र गत्वा तु मनुजो ब्रह्मलोके महीयते ॥४५॥

एकादश तु भाण्डीर योगिना प्रियमुत्तमम् ।
तस्य दर्शनमात्रेण नरो गर्भं न गच्छति ॥४६॥

भाण्डीर समनुप्राप्य वनाना वनमुत्तमम् ।
वासुदेव ततो दृष्ट्वा पुनजन्म न विद्यते ॥४७॥

वृन्दावन द्वादशम वृन्दया परिरक्षितम् ।
मम चैव प्रिय भूमे सर्वपातकनाशनम् ॥४८॥

—(p 517-520)

## वीरमित्रोदय
## (तीर्थप्रकाशे)

(वराहपु०) अध्याय १५२

धारापतनके स्नात्वा नाकपृष्ठे स मोदते ।
अथात्र **मुञ्चति** प्राणान् मम लोक स गच्छति ॥९॥

अत पर नागतीर्थं तीर्थानामुत्तमोत्तमम् ।
4 **तत्र** स्नाता दिव यान्ति ये मृतास्तेऽपुनर्भवा ॥१०॥

घण्टाभरणक तीर्थं सर्वपापप्रमोचनम् ।
यस्मिन् स्नातो नरो देवि सूर्य्यलोके महीयते ॥११॥

**तीर्थानामुत्तम तीथ** ब्रह्मलो**कमिति श्रुतम्** ॥१२cd॥

**तत्र स्नात्वा च नियतो मनुजो** नियताशन ।
**ब्रह्मणा** समनुज्ञातो विष्णुलोक स गच्छति ॥१३॥

सोमतीर्थे तु वसुधे पवित्रे यमुनाम्भसि ॥१४ab॥

तत्राभिषेक कुर्वीत स्वस्वकम**प्रतिष्ठित** ।
योगत सोमलोके तु एवमेव न सशय ॥१५॥

सरस्वत्याश्च पतन सवपापहर शुभम् ।
तत्र स्नात्वा नरो देवि अवर्णोऽपि यतिर्भवेत् ॥१६॥

**चक्रतीर्थं तु** विख्यात माथुरे मम मण्डले ।
यस्तत्र कुरुते स्नान त्रिरात्रोपोषितो नर ॥१७॥

स्नानमात्रेण मनुजो मुच्यते ब्रह्महत्यया ॥१८ab॥

दशाश्वमेधमृषिभि पूजित सर्वदा पुरा ।
तत्र ये स्नान्ति निरता तेषा स्वर्गो न दुर्लभ ॥१९॥

तीथ तु विघ्नराजस्य पुण्य पापहर शुभम् ।
**तत्र** स्नात **तु मनुज विघ्नराजो न** पीडयेत् ॥२२॥

तत पर कोटितीथ **त्रैलोक्ये** परम शुभम् ।
**तत्र वै** स्नानमात्रेण गवा कोटिफल लभेत् ॥२५॥

—(p 513-514)

## कृत्यकल्पतरु
## (तीर्थविवेचनकाण्डे)

(वराहपु०) अध्याय १५४

**अस्ति वृन्दावन नाम तस्मिन क्षेत्रे पर मम ।**
तत्राह क्रीडयिष्यामि गोभिर्गोपालकै सह ॥६a–d॥

**तत्र कुण्ड** महाभागे लतागुल्म**शतावृतम्** ।
तत्र स्नान प्रकुर्वीत **चतु कालो**षितो नर ॥७॥

—(p 187)

**तत्र** स्नान **तु** कुर्वीत एकरात्रोषितो नर ॥७cd॥

—(p 190)

## वीरमित्रोदय
## (तीर्थप्रकाशे)

(वराहपु०) अध्याय १५४

केशितीर्थमधिकृत्य—

गङ्गाशतगुण पुण्य यत्र केशी निपातित ॥१०ab॥

तत्रापि च विशेषोऽस्ति केशितीर्थे वसुन्धरे।
तस्मिन् पिण्डप्रदानेन गयापिण्डफल लभेत् ॥११॥

कालियह्रदमधिकृत्य—

कालियस्य ह्रद गत्वा क्रीडा कृत्वा वसुन्धरे।
स्नानमात्रेण तत्रैव सर्वपापै प्रमुच्यते।
अथात्र मुञ्चति प्राणान् मम लोक स गच्छति ॥२१॥

द्वादशादित्यमधिकृत्य—

सूर्य्यतीर्थे नर स्नातो दृष्ट्वादित्यान वसुन्धरे।
आदित्यभवन प्राप्य कृतकृत्य स मोदते ॥२०a d॥

तस्मिन् भाण्डीरके स्नातो नियतो नियताशन।
सवपापविनिर्मुक्त इन्द्रलोक स गच्छति ॥५a-d॥

तत्राह क्रीडयिष्यामि गोपीगोपालकै सह।
सुरम्य सुप्रतीत च देवदानवदुल्लभम् ॥६c-f॥
—(p 520)

## कृत्यकल्पतरु
## (तीर्थविवेचनकाण्डे)

(वराहपु०) अध्याय १५५

तत्र वीरस्थल नाम ज्येष्ठ गुह्य पर मम ॥१५ab॥
(p 189)

तत्र कुण्ड विशालाक्षि प्रसन्न विमलोदकम ॥३९cd॥

तत्र स्नान प्रकुर्वीत एकरात्रोषितो नर।
अग्निष्टोमस्य यज्ञस्य फल प्राप्नोति मानव ॥४०a-d॥

मथुरापश्चिमे भागे अदूरादर्धयोजनात ॥३७cd ४१ab॥
(p 190)

दक्षिणे गच्छत पार्श्वे कूपोऽत्र विमलोदक।
सप्तसामुद्रिक नाम यत्र सतिष्ठते जलम ॥१३॥
(p 193)

## वीरमित्रोदय
## (तीर्थप्रकाशे)

(वराहपु०) अध्याय १५५

यमलार्जुनतीर्थ च कुण्ड तत्र च वर्त्तते ॥१cd॥

पर्य्यस्त यत्र शकट भिन्नभाण्डकुटीवटम्।
तत्र स्नानोपवासेन अनन्त फलमाप्नुयात ॥२॥

तत्र गोपीश्वरो नाम महापातकनाशन ॥२०ab॥

सप्तसामुद्रिक नाम कूप तु विमलोदकम्।
देवस्याग्रे तु वसुधे गोपीशस्य महात्मन।
पितरश्चाभिनन्दन्ति पानीय पिण्डमेव च ॥२६॥

सोमवारे त्वमावस्या पिण्डदान करोति य।
गयाया पिण्डदान च कृत नास्त्यत्र सशय ॥२८॥
—(p 519)

## कृत्यकल्पतरु
## (तीर्थविवेचनकाण्डे)

(वराहपु०) अध्याय १५६

तत्राभिषेक कुर्वीत एकरात्रोषितो नर ॥२०ab॥
—(p 190)

मुचुकुन्द स्वपित्यत्र दानवासुरशातन ॥२८cd॥
—(p 193)

## वीरमित्रोदय
## (तीर्थप्रकाशे)

(वराहपु०) अध्याय १५६

मथुराया पुरे यस्तु प्रासाद पुरवासिनाम्।
कारयित्वा तु मनुजो जायते स चतुर्भुज ॥१८॥
—(p 516)

मथुरामाहात्म्यमधिकृत्य—

विंशतिर्योजनाना तु माथुर मम मण्डलम्।
यत्र तत्र नर स्नातो मुच्यते सर्वपातकै ॥१॥

पदे पदे तीर्थफल मथुराया वसुन्धरे।
यत्र तत्र नर स्नातो मुच्यते घोरकिल्विषै ॥२५॥
—(p 503)

तत्रैव कालविशेषमधिकृत्य—

मथुराया गमिष्यन्ति **मयि सुप्ते वसुन्धरे** ॥३cd॥
सप्तद्वीपेषु तीर्थानि पुण्यान्यायतनानि च ॥३ab॥
—(p 507)

श्रीकेशवमाहात्म्यमधिकृत्य—

प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा ।
प्रदक्षिणी कृता येन मथुराया तु केशवे ॥७॥

इह जन्मकृत पापमन्यजन्मकृत च यत् ।
तत्सर्वं नश्यते शीघ्र कीर्त्तने केशवस्य च ॥३०॥

मथुरावासिनो लोका सर्वे ते सिद्धिभाजना ॥५ef॥

मथुरा समनुप्राप्य दृष्ट्वा देव तु केशवम् ।
स्नात्वा पुनस्तु कालिन्द्या यो मा पश्यति सवदा ।
स तत्फलमवाप्नोति राजसूयाश्वमेधयो ॥६॥
—(p 509)

## वीरमित्रोदय
## (तीर्थप्रकाशे)

(वराहपु०) अध्याय १५९

सवधमविहीनाना पुरुषाणा दुरात्मनाम् ।
नरकार्त्तिहरा देवी मथुरा पापनाशिनी ॥३॥
—(p 503)

## वीरमित्रोदय
## (तीर्थप्रकाशे)

(वराहपु०) अध्याय १६१

मथुरामाहात्म्ये मरणफलमधिकृत्य—

इद पद्म महाभागे सर्वेषा मुक्तिदायकम् ।
कर्णिकाया स्थितो देवि केशव क्लेशनाशन ॥१४c-१५b॥

कर्णिकाया मृता ये तु ते नरा मुक्तिभागिन ।
यत्र मध्ये मृता ये च तेषा मुक्तिवसुन्धरे ॥१६॥

पश्चिमेन हरि देव गोवर्द्धननिवासिनम् ।
दृष्ट्वा व देवदेवेश किं मन परितप्यते ॥१७॥

उत्तरेण तु गोविन्द दृष्ट्वा देव पर शुभम् ।
नासौ पतति ससारे यावदाभूतसप्लवम् ॥१८॥

विश्रान्तिसज्ञक देव पूवपत्रे व्यवस्थितम् ।
य दृष्ट्वा तु नरो याति मुक्तिं नास्त्यत्र सशय ॥१९॥

दक्षिणेन तु मा विद्धि प्रतिमा दिव्यरूपिणीम् ।
महाकाया सुरूपा च केशवाकारसन्निभाम् ।
ता दृष्ट्वा मनुजो देवि ब्रह्मणा सह मोदते ॥२०॥
—(p 506)

वैकुण्ठतीथमधिकृत्य—

वैकुण्ठतीर्थे य स्नाति मुच्यते सवपातकै ।
सवपापविनिर्मुक्तो ब्रह्मलोक स गच्छति ॥११cf॥

## कृत्यकल्पतरु
## (तीर्थविवेचनकाण्डे)

(वराहपु०) अध्याय १६२

**राधे कुण्डेति विख्यात तस्मिन् क्षेत्रे पर मम** ॥३३ef॥
—(p 190)

अस्ति **गोवधन** नाम क्षेत्र **गुह्य पर मम** ।
**अदूरादष्टकाशानि मथुरायाश्च पश्चिमे** ॥१॥

ह्रद तत्र महाभागे द्रुमगुल्मलतावृतम् ॥२ab॥

तत्र मध्ये स्थितो भद्रे क्रीडितोऽस्य यदृच्छया ॥२ef॥
—(p 192)

## वीरमित्रोदय
## (तीर्थप्रकाशे)

(वराहपु०) अध्याय १६२

गोवधनतीथमधिकृत्य—

अस्ति गोवर्द्धन नाम क्षेत्र परमदुलभम् ।
मथुरापश्चिमे भागे अदूराद् योजनद्वयम् ॥१॥

अन्नकूट तत प्राप्य तस्य कुर्यात् प्रदक्षिणम् ।
न तस्य पुनरावृत्तिद्व सत्य ब्रवीमि ते ॥११॥

स्नात्वा मानसगङ्गाया दृष्ट्वा गोवर्द्धन हरिम् ।
अन्नकूट परिक्रम्य किं मन परितप्यसे ॥१२॥

मासि भाद्रपदे शुक्ला कृष्णा चैकादशी शुभा ।
गोवर्द्धने सोपवास कुर्य्यात्तत्र प्रदक्षिणम् ॥१७॥

राधाकुण्डमधिकृत्य—

अरिष्टराधाकुण्डाभ्या स्नानात्फलमवाप्यते ।
राजसूयाश्वमेधाभ्या नात्र कार्य्या विचारणा ॥३४॥
—(p. 516)

## वीरमित्रोदय
### (तीर्थप्रकाशे)

(वराहपु०) अध्याय १६३

मथुरामाहात्म्यमधिकृत्य—

कृतघ्नश्च सुरापश्च चौरो भग्नव्रतस्तथा।
मथुरा प्राप्य मनुजो मुच्यते सर्वकिल्विषैः ॥५१॥
—(p 503)

अन्यत्र हि कृतं पापं तीर्थमासाद्य नश्यति।
तीर्थे तु यत्कृतं पापं वज्रलेपो **भवेदिति** ॥४८॥

मथुरायां कृतं पापं **मथुरायां प्रणश्यति** ॥५०ab॥
—(p 504)

मथुरायां ये वसन्ति विष्णुरूपा हि ते खलु।
अज्ञानास्तान्न पश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥५९॥
—(p 516)

## वीरमित्रोदय
### (तीर्थप्रकाशे)

(वराहपु०) अध्याय १६६

भूतेश्वरमहिमानमधिकृत्य—

मथुरायां च देव त्वं क्षेत्रपालो भविष्यसि।
त्वयि दृष्टे महादेव मम क्षेत्रफलं **भवेत्** ॥५८ cb॥

दृष्ट्वा भूतपतिं देवं वरदं पापनाशनम्।
**तेन** दृष्टेन वसुधे माथुरं फलमाप्नुयात् ॥२॥
—(p 510)

## वीरमित्रोदय
### (तीर्थप्रकाशे)

(वराहपु०) अध्याय १६७

विश्रान्तिसञ्ज्ञकं दृष्ट्वा दीर्घविष्णुं च केशवम्।
**एतेषां** दर्शनं पुण्य**मेभिर्दृष्टैः** फलं भवेत् ॥३९c-f॥

एकानंशां ततो देवीं यशोदां देवकीं तथा।
महाविद्येश्वरीं **दृष्ट्वा** मुच्यते ब्रह्महत्यया ॥३७॥
—(p 510)

## वीरमित्रोदय
### (तीर्थप्रकाशे)

(वराहपु०) अध्याय १७४

पञ्चतीर्थाभिषेकाच्च यत् फलं लभते नरः।
**कृष्णगङ्गा**दशगुणं **विशते** तु दिने दिने ॥५९॥
—(p 515)

## कृत्यकल्पतरु
### (तीर्थविवेचनकाण्डे)

(वराहपु०) अध्याय १७८

एतत्ते कथितं भद्रे **माहात्म्यं मथुरागतम्** ॥१२०ab॥
—(p 193)

## नित्याचारप्रदीप

(वराहपु०) अध्याय १७९

अथानुलेपनम्—

कर्पूरं कुङ्कुमं चैव **शुक्लं तगरमेव** च ॥११cd॥

रसञ्च चन्दनं चैव **अगुरुं गुग्गुलं तथा**।
एतैर्विलेपनं दद्यात् **सुरभिञ्च** विचक्षण ॥१२॥
—(p 603,606)

[वी मि (पू प्र) P 40]

## निर्णयसिन्धु

(वराहपु०) अध्याय १७९

तत्र काष्ठेषु मधुकमानीय च वसुन्धरे।
कृत्वा तत्प्रतिमां चैव प्रतिष्ठाविधिनार्चयेत् ॥१०॥
—(p 422)

## हारलता

(वराहपु०) अध्याय १८५

कण्ठस्थानगतो जीवो भीतो विभ्रान्तमानसः।
ज्ञात्वा तु विह्वलस्तत्र शीघ्रं **निस्सार्यते** गृहात् ॥९४॥

कुशास्तरणशायी च दिशः सर्वाणि पश्यति ॥९५ab॥

**दापयेत** स्नेहभावेन भूमिं **द्वेधा द्विजातिषु**।
**सुवर्णं वा** हिरण्यं **वा यथोत्पन्नं तु** माधवि ॥
**तत्र तस्य** हितार्थाय **सम्प्रदानं** विशिष्यते ॥९६॥

**तथैव दीपदानेन क्षिप्रं** मुच्येत् किल्विषात् ॥९७ef॥

**तथा** श्रुतिपथं दिव्यमुच्चैः कर्णे च श्रावयेत् ॥९८ab॥

दृष्ट्वा सुविह्वलं ह्येतं **यममार्गानुसारिणम्**।
प्रयाणकाले **च ततो** मन्त्रेण विधिपूर्वकम् ॥९९॥

मद्भक्तेनैव **दातव्यं** सर्वं संसारमोक्षणम्।
मधुपर्कं ततो गृह्य इमं मन्त्रमुदीरयेत् ॥१००॥
ततः एतेन मन्त्रेण मधुपर्कोत्तमं **दद्यात्**।
पुरुषो मृत्युकाले **तद् दत्त्वा** संसारमोक्षणम् ॥१०२॥

एव विनि सृत प्राण ससारस न गच्छति ॥१०३ab॥
**मज्जावनस्पति** गत्वा गन्धानि विविधानि च ॥१०३ef॥
घृततैलसमायुक्त कृत्वा **देहविशाधनम्** ॥१०४ab॥
**दक्षिणाशिरस कृत्वा सचेल तु शव तथा ।**
तीथस्यावाहन कृत्वा स्नापन तत्र कारयेत् ॥१०५॥
**गयादीनि च** तीर्थानि ये च पुण्या शिलोच्चया ।
कुरुक्षेत्र च गङ्गा च यमुना च सरिद्वराम् ॥१०६॥
कौशिकी **चन्द्रभागा च** सवपापप्रणाशिनीम् ।
**भद्रावकाशा** गण्डक्या **शतद्रु पनस** तथा ॥१०७॥
**वणव च** वराह च तीथ पिण्डारक तथा ।
पृथिव्या यानि तीर्थानि **चतुर** सागरास्तथा ॥
**ध्यात्वा तु** मनसा **सर्वे कृतस्नान** गतायुषम् ॥१०८॥
देवाश्चाग्निमुखा सर्वे गृहीत्वा **तु** हुताशनम् ।
गृहीत्वा पाणिना चैव **मन्त्रमेव**मुदीरयेत् ॥११०॥
कृत्वा तु दुष्कर कम जानता वाप्यजानता ।
मृत्युकालवश प्राप्य **नर** पञ्चत्वमागतम् ॥१११॥
धर्माधमसमायुक्त लोभमोहसमावृ**तम** ।
दहेय सवगात्राणि दिव्या**न** लोका**न स** गच्छतु ॥११२॥
एवमुक्त्वा नत शीघ्र कृत्वा चैव प्रदक्षिणम् ।
ज्वलमान तथा वह्नि शिर स्थाने प्रदापयेत् ॥११३॥
चातुवर्णेषु **सस्थान**मेव भवति पुत्रिके ॥११४ab॥
—(p 128)

[ शु कौ P 107, 109 110 L4-7, 10 14 16 24, नि सिं P 733, 740 L 9 10, 12-14, 29-32, 34 35 ]

[ –L5 शु कौ सुपर्णं (→सुवण) –L6 शु कौ तत्र तस्य हितार्थायगोप्रदान विशिष्यते –L10 नि सि तु नरो (→च ततो) –L12 नि सिं त्वरन (→ततो), उदाहरेत् (→उदीरयेत) –L13 14 नि सि अनेनैव तु मन्त्रेण दद्याच्च मधुपककम तस्य मृत्युकाले तु परलोकसुखावहम –L23 शु कौ सरयू गण्डकी (→गण्डक्या शतद्रु) –L24 नि सि महा (→तथा) –L35 नि सि पुत्रके (→पुत्रिके)

L12, 13 मध्ये नि सि ग्रन्थे अधिकम—

ॐ एतद गहाण रुचिर मधुपकमाद्य
ससारनाशनकर ह्यमृतेन तुल्यम् ।
नारायणेन रचित भगवत्प्रियाणा
दाहे च शान्तिकरण सुरलोकपूज्यम । ]

## कृत्यकल्पतरु

### (श्राद्धकाण्डे)

(वराहपु०) अध्याय १८६

श्व करिष्य इति **ज्ञात्वा** ब्राह्मणान्मन्त्र**णक्रिया** ॥८ab॥
स्नात्वा चैव शुचिभूत्वा प्रेत विप्रेषु योजयेत् ॥५ab॥
गतोऽसि दिव्यलो**क** त्व कृतान्त**विहितात्पथ ।**
मनसा वायुभूतेन विप्रे **त्वाह** नियोजये ॥८c f॥
अस्तगते तथादित्ये गत्वा विप्रनिवेशनम् ।
दत्त्वा तु पाद्य विधिवन्नमस्कृत्य द्विजोत्तमम् ॥९॥
पा**दौ प्रक्षाल्य** तैलेन प्रेतस्य हितकाम्यया ॥१०ab॥
प्रभाताया तु शवर्यामुदिते च दिवाकरे ।
श्मश्रु**कर्म कारयित्वा** नखच्छेद **तत परम्** ॥१२॥
स्नपनाभ्यञ्जन दद्याद्विप्राय विधिपूर्वकम् ।
गृह्णीयाद् भूमिभाग **च** स्थण्डिल तदनन्तरम् ॥१३॥
**निवापदेश सगृह्य कतव्य स्थण्डिल महत** ।
नदीकूले निवासे वा प्रेतभूमि विनिर्दिशेत् ॥१४॥
अकृत्वा पृथिवीभाग **निवाप ये तु** कुर्वते ।
**तदधीन** जगद्भद्रे **तदुच्छिष्ट कृत** भवेत् ॥२०c-f॥
न देवा पितरस्तस्य गृह्णन्तीह कदाचन ।
पतन्ति **निरये** घोरे तेनोच्छिष्टेन सुन्दरि ॥२१॥
**स चैलस्नपन कृत्वा गत्वा चैव महानदीम्** ॥२५cd॥
तीर्थानि मनसा **ध्यात्वा तै स्वमभ्यु**क्षयेद्बुध ।
एव शुद्धि तत कृत्वा ब्राह्मण शीघ्रमानयेत् ।
आगत च द्विज दृष्ट्वा कतव्या स्वागतक्रिया ॥२६॥
अर्घ्यं पाद्य **तत कृत्वा दष्टतुष्टेन** माधवि ।
आसन चोपकल्पेत मन्त्रेण विधिपूर्वकम् ॥२७॥
उपवेश्यासने भद्रे छत्र **तत्र प्रकल्पयेत्** ॥२९ab॥
**आवरणार्थं छत्र तद** ब्राह्मणाय **प्रदीयते** ॥३१ef॥
पश्चादुपानहौ दद्यात् पादस्पशकरे **उभे** ॥३६cd॥
**सन्तप्तवालुका भूमिमसि कण्टकितां तथा ।**
सतारयति दुर्गाणि **प्रेत ददद्युपानहौ** ॥४०॥
तिलोपचार कृत्वा तु वि**प्रस्य** नियता**त्मना** ॥४२cd॥
नाम गोत्रमुदाहृत्य प्रेताय तदनन्तरम् ।
शीघ्रमाह्वा**नयेद्भूमि दर्भहस्तोऽथ** भूतले ॥४३॥

इह लोक परित्यज्य गतोऽसि परमा गतिम् ॥४४ab॥

ततो वस्त्राणि विप्राय सर्वाण्याभरणानि च ।
पुन पक्वानक चैव कल्पयेच्च वसुन्धरे ॥४५॥

त्रिषु वणषु कत्तव्य पाक भोजनमेव च ।
शुश्रूषामभिपन्नाना शूद्राणा च वरानने ॥६॥

दिने त्रयोदशे प्राप्ते पाकेन भोजयेद् द्विजान् ॥७ab॥

एव विधि प्रयोक्तव्या शूद्राणा मन्त्रवर्जित ।
अमन्त्रस्य च शूद्रस्य विप्रो मन्त्रेण गह्यते ॥४८a d॥

भुज्यमानस्य विप्रेण प्रेतभागस्य सवश ।
ज्ञातिवर्गेषु मित्रेषु सबन्धिस्वजनेषु च ॥५३।

भागस्तस्य प्रदातव्यो येनार्थो यस्य विद्यते ॥५४ab॥

शुचिभूत्वा तु विधिवत् कृत्वा शान्त्युदकानि च ।
प्रणम्य शिरसा देवि निवापस्थानमागतम ॥६२a d॥

नमो नमो मेदिनि लोकधात्रि
उर्वि महि शैलगिरिधारिणि धरणे नम ।
धरणि काश्यपि जगत्प्रतिष्ठे
वसुधे नमोस्तु वैष्णविभूतधात्रि ॥६३॥

दद्यात्तिलोदक तस्य नामगोत्रमुदाहरन ॥६४cd॥

सवाह्य चरणौ तस्य नमस्कृत्य द्विजोत्तमम् ।
सगृह्य पाणिना पाणि मन्त्रेणोत्थापयेद् द्विजम ।
दद्याच्छय्यासन देवि तथैवाञ्जनकाङ्कतम ॥६५॥

अञ्जन कङ्कत गृह्य शय्यामाक्रम्य स द्विज ।
मुहूर्त्त तत्र विश्रम्य पावनस्थानमागतम् ॥६६a-d॥

गवा लाङ्गूलमुद्धृत्य ब्राह्मणो हस्तमादधत ॥६६ef॥

पात्र औदुम्बरे तत्र कृत्वा चैव तिलोदकम् ।
उपाहरन्ति मन्त्रेण सामवेदाद् द्विजातय ॥६७॥

मन्त्रै पूर्वं तदा तोय सर्वपापप्रणाशनम् ॥५८ab॥
—(p 247 249)

[ अ टी P 525-526, L2, 25, 32 55 ○, च चि (प ख, श्रा क) P 1204, 1588, 1607 1609, 1613 L36-40, 42-55 ○, म पा P 611 L1, 3-4 अस्ति, प्रा वि P 505 L 36 अस्ति, का सा P 211 L35 36 अस्ति, श्रा कौ P 75, 81 377 380 381, 382, 395 L2, 11 20, 24 25, 33 34, 37-39, 47 55 ○, शु कौ P 171, 177 L1, 3 7, 25 28 अस्ति, दा कौ P 99 L1 3 7 अस्ति, शू शि P 49 L35 36 अस्ति, त्रि से ना P 19 L 35 36 अस्ति, त्रि से सा P 19 L35 36 अस्ति, नि सिं P 750 758, 759 L3 4, 24, 32 36 अस्ति वी मि P 123 L36 अस्ति ]

[ -L3 च चि लाकान (→लोक) -L4 शु कौ विप्रेषु स्व नियोजय -L5 गत्वा विप्रस्यमन्दिरम -L7 च चि पादौ सम्प्रक्ष्य तलेन श्रा कौ पादप्रक्षण तैलेन विप्रस्य हितकाम्यया -L9 च चि श्मश्रुकम तु कतव्य नखच्छेदस्तथैव च -L 11 च चि गृहीत्वा (→गह्णीयाद) -L12 निपान (→निवाप) -L15 अ टी तदध्वनि (→तदधीन) -L18 अ टी स तैल (→स चैल) -L21 अ टी आनीत (→आगत) -L25 शु कौ आतपाथ ततश्छत्र -L27 श्रा कौ सुतप्त (→सतप्त) शु कौ पत्रवन (→कण्टकिता) -L28 च चि दद्याद (→ददद) -L29 च चि विप्राय नियतात्मवान -L34 च चि तत पक्वानक चव कल्पयेच्चैव सुन्दरि -L38 श्रा कौ, शू शि, त्रि से सा, वी मि अयमेव विधि प्रोक्त -L44 श्रा कौ देव (→देवि) -L46 श्रा कौ नम (→धरणे नम ) -L48 श्रा कौ निवापनावीचि नमो नमोस्तु ते अत पर श्राद्ध कौमुद्या अधिकम एव स्तुत्वा ह्यभिष्टाय तव भक्त्या च सुन्दरि -L51 च चि पाणौ (→पाणि) -L52 च चि चैव (→देवि), कङ्कतीम (→काङ्कतम) -L53 च चि अञ्जनकङ्कती गृह्य -L54 निवाप (→पावन) -L55 च चि आश्रित्य (→उदधत्य), ब्राह्म हस्त समाददेत ]

## कृत्यकल्पतरु

### (श्राद्धकाण्डे)

### (वराहपु०) अध्याय १८७

गृह्य चौदुम्बर पात्र विप्रेण नियतात्मना ॥१०cd॥

मन्त्रेणाभ्युक्षयेत्सव स्वगृहे यत्तु तिष्ठति ॥१०ef॥

देवांश्चाग्निमुखान्सर्वास्तर्पयित्वा विभागश ।
भूताना च बलि दद्याद् ब्राह्मणेभ्यश्च भोजनम् ॥११॥

प्रेतभागेन दत्तेन पूजयित्वा द्विजातय ।
मृतस्य नामतोद्दिश्य ह्यक्षयं चोपकल्पयेत् ॥१२॥

स्वस्ति वाचय च विप्राय दद्यात्प्रेतविसजनम् ।
प्राशयेत् पञ्चगव्य च मधुपर्केण सयुतम् ॥१३॥
—(p 249)

## कृत्यकल्पतरु

### (श्राद्धकाण्डे)

(वराहपु०) अध्याय १८८

**स्थानो**पलेपन भूमि कृत्वा **विप्र** निमन्त्रयेत् ।
दन्तकाष्ठ च विसृ**जेद** ब्रह्मचारी शुचिभवेत् ॥१०३॥
—(p 104)

उद्धरेद्यदि पात्र तु ब्राह्मणो ज्ञान**दुबल** ।
**हरन्ति राक्षसास्तस्य** भुञ्जतोऽन्न **वसुन्धरे** ॥१२२॥
—(p 188)

## चतुर्वर्गचिन्तामणि

### (परिशेषखण्डेश्राद्धकल्पे)

(वराहपु०) अध्याय १८८

स्नानोपलेपन भूमि कृत्वा विप्रान्निमन्त्रयेत् ॥१०३ab॥
—(p 1150)

प्रभाताया तु शर्व्वर्य्यामुदिते च दिवाकरे ।
दिवाकीर्त्ति **समानीय** विप्राय विधि पूवश ।
श्मश्रुकम च कर्त्तव्य **नखच्छेदस्तथैव च** ॥१०६॥

स्नापनाभ्यञ्जन दद्यात् पितृभ**क्तस्तु** सु दरि ॥१०७ab॥
—(p 1167)

प्रणम्य **शिरसा भूमि** निवापस्य च धारिणीम् ।
वैष्णवी काश्यपी चेति अक्षयेति **व** नामत ॥११७॥
• —(p 1204)

**जुहुते** प्रथम **स्वग्नौ** पत्न्यै देय तु मध्य**मम्** ।
तृतीयमुदके दद्याच्छे**ष वा** लेहयेत्स्व**यम** ॥११८॥
—(p 1505)

**विप्रोच्छिष्टानि यावन्ति** यावत्तिष्ठति भूतले ।
अप्यायमाना पितरस्तावत्तिष्ठन्ति **ते** गृहे ॥११६॥
—(p 1510)

श्राद्ध कृत्वा तु सुश्रोणि **तपणीया** द्विजातय ।
दत्त्वा तिलोदक पिण्ड पितृपैतामहे**षु** च ॥३९c-४०b॥
—(p 1623)

नरा ये **चात्र** तिष्ठन्ति **पतिता** पितृबान्धवा ।
तेषा **भवलय त्राता नीलमुक्तो यथाविधि** ॥४१॥

गृहीत्**वोदुम्बर** पात्र कृत्वा कृष्णतिलोदकम् ॥४२ab॥
—(p 1630 1631)

विप्राणा वचन कृत्वा यथाशक्त्या **च दक्षिणम्** ॥४२cd॥
—(p 1633)

[अ टी P 456, 498 L1 4, स्म च P 180 L1 2, प मा P 697 L1-2, नि प P 63 L2, म पा P 561 L1 2, का सा P 510,553 L1 4, शु कौ P 180 L1 2, स्मृ मु P 776 L1 2, नि सिं P 407,765 L1 2, L8 9, वी मि (ती प्र) P 59 L8 ]

[–L2 स्मृ च, शु कौ दन्तकाष्ठानि –L8 वी मि कारयित्वा (→च कतव्य), अनन्तर (→तथैव च) –L9 नि सिं स्नपनाभ्यञ्जन **दद्या**द विप्राय विधिपूवकम ]

## कालमाधव

(वराहपु०) अध्याय २००

व्यभिचारिणी प्रति—

तत शुनी भवेत्पश्चात् सूकरी च तत परम् ।
कर्मक्षये तत पश्चात् मानुषी कुत्सिता भवेत् ।
न च सौख्यमवाप्नोति तेन दु खेन दु खिता ॥६७॥
—(p 520)

## दानसागर

(वराहपु०) अध्याय २०३

तरुणी क्षीरसपन्ना गौ सुवर्ण**मयी** शुभा ।
सवत्सा **क्षौमवासाश्च [स्वर्गं याति महामना ]** ॥२३॥

अस्य लेख मया दृष्ट तिस्र कोट्यस्त्रिविष्टपे ।
[ऋषीणा प्रच्युतश्चैव समृद्धे] जायते कुले ॥२४॥
—(p 276)

क्षितिप्रदो द्विजातिभ्यो **ह्यय [याति त्रि]** विष्टप**म्** ।
तत्रैव [**तिष्ठते** धीरो] ब्रह्मलोके सहानुग ॥२९॥

विविधै कामभोगैश्च सेव्यमानो नरोत्तम ॥३०ab॥
—(p 327)

## दानसागर

(वराहपु०) अध्याय २०४

दधि क्षीर घृत चैव येन दत्त द्विजातिषु ।
एष [आयातु न पार्श्वे **अस्मिन्**] पूजा **करोम्यहम्** ॥१६॥

नीयता नीयता शीघ्र [यत्र **यत्र न** चालयेत्] ।
गोरसस्य तु पूर्णानि भाजनानि सहस्रश ॥१७॥

तत्र दत्त्वा च पीत्वा च बान्धवेभ्यो विभागश ।
तत पश्चादय यातु यत्र लोकोऽनसूयक ॥१८॥

**तत्रैव वसतां वीरो** बहुवषशतान्ययम् ।
**बहुसुन्दरनारीभि** सेव्यमानो महातपा ।
अमराख्यो भवेत्तत्र गोलोके सुसमाहित ॥१९॥

—(p 380)

उपानहौ **महच्छत्र** जलभाजनमेव **च** ।
असकृद् येन दत्तानि तस्मै पूजा प्रयच्छथ ॥१३a-d॥

—(p 535)

भूतानुकम्पको ह्येष क्रियतामस्य चाचनम् ।
वर्षाणामयुत **चार्धं दिवि** तिष्ठेत देववत् ।
[जायते **च** तत ] पश्चा**न्मानुष सव**पूजित ॥१२॥

—(p 564)

## दानसागर

(वराहपु०) अध्याय २०५

तिलान् गाश्च हिरण्य च पृथिवी चापि शाश्वतीम् ।
ब्राह्मणेभ्य प्रयच्छन्ति न गच्छन्ति न सशय ॥२४॥

—(p 294)

धुयप्रदानेन **तथा** गवा च लोकानवाप्नोति **तथा** वसूनाम् ।
[**राज्य** तथा गोवृषभ प्र**दाने** स्वग] शुभ शाश्वतमाप्नु**वन्ति** ॥४८॥

—(p 307)

फलैस्तु लभते पुत्रम् ॥५०c॥

—(p 391)

फलैस्तु लभते पुत्र पुष्पै सौभाग्यमेव **च** ॥५०cd॥

—(p 405)

दीपप्रदा**नेन** द्युति **लभन्ते** घृतेन तेज सुकुमारता च ।
**प्राण**द्युति स्निग्ध**ता** चापि **तैलै द्र**वैर्नानारसतृप्तता च ॥४९॥

—(p 459)

## कृत्यकल्पतरु

### (नियतकालकाण्डे)

(वराहपु०) अध्याय २०८

वामन ब्राह्मण दृष्ट्वा वराह च जलोत्थितम् ॥६४ab॥
नमस्ये**च्चैव यो भक्त्या** स पापेभ्य प्रमुच्यते ॥६५ab॥

—(p 31)

[ग र P 186 L1 2 वी मि (आ प्र) P 150 L1 2]

## कालविवेक

(वराहपु०) अध्याय २०९

एकादश्या न भुञ्जीत पक्षयोरुभयोरपि ॥४९cd॥

—(p 436)

तस्यामाराध्य **गोविन्द** जगतामीश्**वर परम** ॥५५ab॥

—(p 455)

## कृत्यकल्पतरु

### (नियतकालकाण्डम्)

(वराहपु०) अध्याय २०९

उदयान्नि सूत सूर्यं यस्तु भक्त्या नरो द्विज ।
दध्यक्षताञ्जलीभिस्तु तिसृभि पूजयेच्छुचि ॥१४॥
तस्य **भावप्रपन्नस्य चा**शुभ यत्समर्जितम् ।
तत्क्षणादेव निदग्ध भस्मीभवति **काष्ठवत्** ॥१५॥

—(p 24)

दक्षिणावतशङ्खेन तिलमिश्रोदकेन तु ।
उदके नाभि**मात्रे** तु य कुर्यादभि**षेचनम्** ॥२३॥
प्राक्**स्रोतसि** तु वै नद्या **नरस्त्वेकाग्रमानस** ।
यावज्जीवकृत पाप तत्क्षणादेव नश्यति ॥२४॥
अच्छिन्नपद्मपत्रेण सर्वरत्नोदकेन **च** ।
**स्रोतसो व** नर स्नात्वा सवपापै प्रमुच्यते ॥२५॥
दक्षिणावतशङ्खेन पात्र **औदुम्बरे** स्थितम् ।
उदक य प्रतीच्छेत शिरसा हृष्टमानस ।
तस्य जन्मकृत पाप तत्क्षणादेव नश्यति ॥२६॥

—( p 56)

## चतुर्वर्गचिन्तामणि

## (दानखण्डे)

(वराहपु०) अध्याय २०९

यम उवाच ।

गाव पवित्र माङ्गल्या देवानामपि देवता ।
यस्ता शुश्रूषते भक्त्या स पापेभ्य प्रमुच्यते ॥८॥

यावज्जीव कृत पाप तत्क्षणादेव **नश्यति** ॥९cd॥

लाङगूलेनोद्धृत तोय मूर्ध्ना गह्णाति यो नर ।
**शरस्तु ह्युपजातेभ्य** स **पापेभ्य** प्रमुच्यते ॥१०॥

प्रस्रवे यो गवा स्नायात् रोहिण्या मानवो भुवि ।
सवपापकृतान् दोषान् दहत्याशु न सशय ॥११॥

धेनो स्तनाद्विनिष्क्रान्ता धारा क्षीरस्य यो नर ।
शिरसा प्रतिगृह्णीयात स पापेभ्य प्रमुच्यते ॥१२॥
—(p 972)

## कृत्यरत्नाकर

(वराहपु०) अध्याय २०९

यावक दधिमिश्र तु पात्र औदुम्बरे स्थितम् ।
सोमाय पौणमास्या **वा** दत्त्वा पापै प्रमुच्यते ॥१६॥

अरुन्धती ध्रुव चैव तथा सप्तमहामुनीन् ।
अभ्यर्च्य विधिना रात्रौ **तथा** दत्त्वा च यावकम् ॥१७॥

एकाग्रमानसो भूत्वा यो नमस्येत् कृताञ्जलि ।
किल्विष तस्य वै सव तत्क्षणादेव नश्यति ॥१८॥
—(p 549)

## जयसिंहकल्पद्रुम

(वराहपु०) अध्याय २०९

एकादशी सोमयुता कार्तिके मासि भामिनि ।
उत्तराभाद्रसयोगे **अनन्तो** सा प्रकीर्तिता ॥६२॥

तस्या यत्क्रियते भद्रे सर्वमानन्त्यमश्नुते ।
अनन्तपुण्यफलदा तेनानन्ता स्मृता प्रिये ॥६३॥
—(p 516)

[ अ टी P 126, 202 L3 6, गृ र P 183, 205 L3 6, 7 12 नि प्र P 490 L3 6, का सा P 607 L2, नि सि P 261 L31 33 वी मि P 148 201 L3 6, 7 15 ]

[ –L3 नि प्र भक्ति परो (→भक्त्या नरो) –L4 गृ र त (→तु) –L5 अ टी ह्यशुभ, ग र, नि प, वी मि अशभ (→चाशुभ) –L6 अ टी यस्य तत (→काष्ठवत) –L7 गृ र तोयेन (→शङ्खेन) –L11 वी मि पत्रपद्मन (→पद्मपत्रेण) –L32 नि सि उत्तराषाढ सयोगे ]

## कृत्यकल्पतरु

## (तीर्थविवेचनकाण्डे)

(वराहपु०) अध्याय २१३

तत्राभिषेक कुर्वीत उपस्पृश्य **यथाविधि** ॥६१ab॥
—(p 191)

## नित्याचारप्रदीप

(वराहपु०) अध्याय २१३

यस्तु दद्यात् प्रदीप **च सवत** श्रद्धयान्वित ।
**स्वय** प्रमेषु देवेषु तस्योत्पत्तिर्विधीयते ॥७३॥
—(p 650)

## तीर्थचिन्तामणि

(वराहपु०) अध्याय २१३

ब्रह्महा गुरुहा गोघ्न स्पृष्टो **वा** सवपातकै ॥८१ab॥

**तस्यास्तोयैर्नर** स्पृष्ट सर्वपापै प्रमुच्यते ॥८२cd॥
—(p 203)

[व कौ P 535 L1-2]
[—L2 व कौ गङ्गातोयेन सस्पष्ट ]

## APPEDDIX 1-B (परिशिष्ट 1-B)

### UN IDENTIFIED VARĀHA PURĀNA QUOTATIONS IN THE NIBANDHAS

( वत्तमानवराहपुराणपाठेऽनुलब्धानि निबन्धेषूद्धृतानि वराहपुराणवचनानि)

1 कालविवेक 2 कृत्यकल्पतरु 3 अपराकटीका 4 स्मृतिचन्द्रिका 5 चतुर्वर्गचिन्तामणि 6 कृत्य रत्नाकर 7 गृहस्थरत्नाकर 8 पराशरमाधव 9 दानक्रियाकौमुदी 10 शुद्धिक्रियाकौमुदी 11 कालमाधव 12 स्मतिरत्नाकर 13 नित्याचारपद्धति 14 मदनपारिजात 15 नित्याचारप्रदीप 16 कालसार 17 वष क्रियाकोमुदी 18 श्राद्धक्रियाकौमुदी 19 शूद्राचारशिरोमणि 20 विधानमाला 21 त्रिस्थलीसेतु 22 स्मति मुक्ताफल 23 दानमयूख 24 श्राद्धमयख 25 समयमयूख 26 आचारमयूख 27 निणयसिन्धु 28 वीर मित्रोदय 29 कालतत्त्वविवेचन 30 विधानपारिजात 31 जयसिंहकल्पद्रुम 32 पुरुषार्थचिन्तामणि 33 आचारभूषण 34 विधानपारिजात

### कालविवेक

देवशयनचिन्तनमधिकृत्य—

द्वादश्या सन्धिसमये नक्षत्राणामसभवे।
आभा कासित पक्षेषु शयनावत्तनादिकम्॥
—(p 183)

अगस्त्योदयास्तमयकालमधिकृत्य—

सख्याविधानात् प्रतिदेशमस्य
4 विज्ञाय सदशनमादिदेश।
तथोज्जयिन्यामगतस्य कन्या-
न्भगे स्मरारयै स्फुटभास्करस्य॥
—(p 291)

शक्रोत्थापनमधिकृत्य—

गुडपूपपायसाद्यैर्विप्रानभ्यर्च्य दक्षिणाभि।
8 श्रवणेन द्वादश्यामुत्थाप्योऽन्यत्र वा श्रवणे॥

द्वादश्या तु सिते पक्षे मासि प्रौष्ठपदे तथा।
शक्रमुत्थापयेद्राजा विश्वश्रवणवासरे॥
—(p 294)

अथोत्थापन दशयति—

भाद्रपदशुक्लपक्षेऽष्टम्या नागरजनैर्वृतो राजा।
12 दैवज्ञसचिवकञ्चुकिविप्रप्रमुखै सुवेशधरै॥

अहतासुरसखी ता यष्टि पौरन्दरी सपौरजनै।
स्रग्गन्धमाल्ययुक्ता प्रवेशयेच्छङ्खतूर्यरवै॥
—(p 298)

महानवम्या प्रथम कृतस्नानविधिर्नर।
16 गृह्णीयात्परमञ्चैतद् यथाकामप्रद व्रतम्॥
—(p 424)

दशमीयुक्तानामेकादशीना निषेधवचनानि—

दशम्या नारभेन्नैव त्रयोदश्या समापयेत्॥
—(p 441)

एकादशी विलुप्ता चेत्परतो द्वादशी स्थिता।
20 उपोष्या द्वादशी तत्र यदीच्छेत्परम पदम्।
द्वादश्यामुपवासोऽत्र त्रयोदश्या तु पारणम्।
निषिद्धमपि कत्तव्यमाज्ञेय पारमेश्वरी॥
यदाक्रान्ता दशम्या तु एकादश्यासमन्तत।
24 तदा ह्येकादशी त्यक्त्वा द्वादशी समुपावसेत्॥

एकादशी यत्र लुप्ता परतो द्वादशी भवेत्।
उपोष्या द्वादशी तत्र यदीच्छेत्परमा गतिम्॥
त्रयोदश्या तु शुद्धाया पारणे पृथिवीफलम्।
28 शतमभ्यधिक वापि नर प्राप्नोत्यसशयम्॥
एकादशी यदा न स्यादुपोष्या द्वादशी तदा।
—(p 445 447)

गृहीत द्वादशीव्रत न त्याज्यमित्यधिकृत्य—

पूवसकल्पित यत्तु व्रत सनियमव्रतै॥

तत्कत्तव्य नरैस्तद्वद्दानाध्ययनवर्जितम्।
32 बहुकालिकसकल्पो गृहीतश्च पुरा यदि॥

सूतके मृतके चैव व्रत तन्नैव दुष्यति।
सूतके मृतके चैव हर्षे वा समुपस्थिते॥

परचक्रागमे रागे न त्याज्य द्वादशीव्रतम् ।
36 सूतके मतके स्नात्वा प्रणम्य मनसा हरिम् ।।
एकादश्या न भुञ्जीत व्रतमेत न लुप्यते ।
द्वादश्या च तथा भुक्त्वा मृतकान्ते जनादनम् ।।
पूजयित्वा विधानेन भोजयद्द्विजोत्तमान् ।
40 पूर्वोक्ते तु व्रते चीर्णे यथोक्तफलभागभवेत् ।।
व्रतभङ्गान्महद् दु ख प्राप्नोति नरक तथा ।
तस्मात्प्रमादे दु खे वा सूतके मतकेऽपि वा ।
स्नात्वा कायव्रत कुर्याद्दानार्चनविवर्जितम् ।।
—(p 449)

उपवासाशक्तौ पुनराह—

44 असामर्थ्ये शरीरस्य व्रते च समुपस्थिते ।
कारयेद्धमपत्नी वा पुत्र वा विनयान्वितम् ।।
भार्य्या भर्त्तुव्रत कुर्य्याद् भार्यायास्तु पतिस्तथा ।
असामर्थ्ये तयोस्ताभ्या व्रतभङ्गो न जायते ।।
—(p 450)

इतिकर्त्तव्यतामधिकृत्य—

48 एकादश्या सिते पक्षे यदृक्षन्तु पुनर्वसु ।
नाम्ना सा विजया ख्याता तिथीनामुत्तमा तिथि ।।
यो ददाति तिलप्रस्थ त्रिकाल वत्सर नर ।
उपवास च यस्तस्या करोत्येतत् सम स्मृतम् ।।
52 तस्या जगपतिर्देव सवदेवेश्वरो हरि ।
प्रत्यक्षता प्रयात्याशु तदनन्तफल स्मृतम् ।।
—(p 455)

सकल्पमधिकृत्य—

एकादश्या निराहारो भूत्वा चैव परेऽहनि ।
भक्ष्येऽह पुण्डरीकाक्ष शरण मे भवाच्युत ।।
56 प्रात सकल्पयेद् विद्वानुपवासव्रतादिकम् ।
अह्नश्च पञ्चमो भाग प्रातश्च घटिकात्रयम् ।।
—(p 456)

दुर्गोत्सवकार्य्यमधिकृत्य—

द्वादश्यामष्टम्या कार्त्तिकशुक्लस्य पञ्चदश्या वा ।
आश्वयुजे वा कुर्य्यान्नीराजनसञ्ज्ञिता शान्तिम् ।।
60 नीराजने निवृत्ते यया दिशा खञ्जन नृपोऽय तम् ।
पश्येत्तथा तस्य क्षिप्रमरातिवशमुपैति ।।
खञ्जनको नामाय यो विहगस्तस्य दर्शने प्रथमे ।
प्राकृतानि मुनिभि फलानि तानि प्रवक्ष्यामि ।।

64 नृपतिरपि शुभ शुभप्रदेशे खगमवलोक्य महीतले विदध्यात् ।
सुरभिकुसुमधूपयुक्तमर्घ्य शुभमभिनन्दिनमेवमेति वृद्धिम् ।
देवदानवयक्षाणा नराणा पुष्टिवर्धनम् ।
दर्शन तव भद्रस्य खञ्जरीट नमोऽस्तु ते ।।

शुभखञ्जनमाह—

68 स्थूलोऽभ्युन्नतकण्ठ कृष्णगलो भद्रकारको भद्र ।
आकण्ठमुखात्कृष्ण सपूर्ण पूरयत्याशा ।।

शुभदेशमाह—

अथ मधुसुरभिफलकुसुमतरुषु सलिलाशयेषु पुण्येषु ।
करितुरगभुजगमूर्ध्नि प्रसादोद्यानहर्म्येषु ।।
72 गोगोष्ठसत्समागमयज्ञोत्सवपार्थिवद्विजसमीपे ।
हस्तितुरङ्गमशालाच्छत्रध्वजचामराद्येषु ।।
हेमसमीपसिताम्बरकमलोत्पलपूजितोपलिप्तेषु ।
दधिपात्रधान्यकूटेषु च श्रिय खञ्जन कुरुते ।
76 पङ्के स्वाद्वन्नाप्तिर्गोरसपच्च गोमयेऽपि गते ।।
शाद्वले वस्त्राप्ति शकटस्थे देशविभ्रश —

अशुभलक्षणमाह—

कृष्णो गलेऽस्य विन्दु सितकरटान्त स रिक्तकृद् रिक्त ।
पीतो गोपीत इति क्लेशकर खञ्जनो दृष्ट ।।
शुभेऽपि देशकाले क्रियाप्राप्त्या अशुभता याति ।
80 गृहपटलेऽर्थभ्रश श्वभ्रेबन्धोऽशुची भवति रोग ।।
पृष्ठे त्वजाविकाना प्रियसङ्गममावहत्याशु ।
महिशोष्ट्रगद् भास्थि श्मशानगृहकोणशकराद्रिस्थ ।
प्राकारभस्मकेशेषु चाशुभा मरणरुग्भयद ।।
84 पक्षी धुन्वन्नशुभ शुभ पिबन् वारिवाहस्थ ।
सूर्योदये प्रशस्तो नेष्टफल खञ्जनोऽस्तमये ।।
मृतविकलभिन्नरोगित स्वतनुसमानफलप्रद खग ।
धनकृदभिनिलीयमानको वियात च बन्धुसमागमप्रद ।
88 अब्जेषु गोषु गजवाजिमहोरगेषु
वास्तुप्रद कुशलद शुचिशाद्वलेषु ।
भस्मास्थिकाष्ठतुषकेशतृणेषु दृष्टा
दु ख करोति खलु खञ्जनकोऽब्दमेकम् ।।

अशुभदर्शनेप्रतिक्रिया—

92 अशुभमपि विलोक्य खञ्जन
द्विजगुरुसाधु सुरार्चने रत ।
न नृपतिरशुभ समाप्नुयात्
न यदि दिनानि सप्तमासभुक् ।।
—(p 517—519)

## कृत्यकल्पतरु

### (नियतकालकाण्डे)

यज्वा मिष्ठान्नद सत्री शतायुर्धार्मिक शुचि ।
ज्ञाननिष्ठास्तप सिद्धान् दृष्ट्वा पापात् प्रमुच्यते ।
—(P 31)

अष्टम्या च चतुदश्या षष्ठ्या च द्वादशी तथा ।
4 अमावास्या चतुर्थ्या च मैथुन योऽधिगच्छति ।
तिर्यग्योनि स गच्छेच्च मम लोक न गच्छति ।
—(P 359)

### (दानकाण्डे)

तिलधेनु तदा दत्त्वा द्वादश्या नियत शुचि ।
आत्मान तारयेद् दुर्गान्निरकात् कामदा भवेत् ।
—(p 146)

### (गृहस्थकाण्डे)

8 पूवभुक्ता स्त्रिय यस्तु निन्देत् सवाङ्गसुन्दरीम् ।
निन्दते योवनभ्रष्टा तेन पापेन लिप्यताम् ।
भुक्त्वा परस्य चान्नानि यस्तु निन्दति निघृण ।
तेन पापेन लिप्येह यद्यह नागमे पुन ।
12 श्रुत्वा परस्य वाक्यानि भवेद्यन्मन्त्रभेदनात् ।
तेन पापेन लिप्येह यद्यह नागमे पुन ।[1]
—(p 349)

### (व्रतकाण्डे)

सदाचारयुते दद्यादल्पवित्तेपि भूतले ।
—(p 75)

एव कृते यान्ति विनाशमाशु
16 विघ्नाश्च कार्याणि च यान्ति सिद्धिम् ।
—(p 82)

भवन्ति पुण्यानि यतो मृत्तिकामालभेत्तत ।
चतुर्भिस्तिलपात्रैस्तु स्थगितान् रत्नगर्भितान् ।
—(p 312)

वत्सनामा तु तत्तेऽह प्रवक्ष्यामि महामुने ।
—(p 323)

20 निष्काम एतद्व्रतमेव चीर्त्वा प्राप्नोति निर्वाणपद
स्थिर तत् ॥
—(p 327)

1 Cf extra verses in critical Apparatus of ch 139 verse 50

कथयामास धमज्ञो देवकी वसुदेवयो ॥
तावप्येतद्विधि भक्त्या चक्रतु श्रद्धयान्वितौ ।
तयोस्तुष्ट स्वय विष्णु पुत्रत्व प्रजगाम ह ॥

24 एवमेषा पापहरा द्वादशी पुत्रदा स्मृता ।
इमामुपोष्य तु सुतान् विद्या वित्त लभेत च ॥

राज्य च भ्रष्टराज्यस्तु पापिन पापसक्षयम् ।
यथा भावोपनीतस्तु धरण्या केशवेन वै ।
28 मृतो विष्णुपुरे रम्ये मोदते कालमक्षयम् ।
मन्वन्तराणि षटत्रिशत्तत काललये पुन ।
इह लोके भवेद्राजा सप्तवर्षायुतानि तु ।
दाता पुत्रसमायुक्तो मृतो निर्वाणमाप्नुयात् ।[1]
—(P 330)

बुद्धद्वादशीव्रतम्—

दुर्वासा उवाच ।

32 एवमेव श्रावणे तु मासि सकल्प्य द्वादशीम् ।
अचयेत् परम देव गन्धपुष्पनिवेदनै ।
बुद्धाय पादौ सपूज्य श्रीधरायेति वै कटिम् ।
मनोभवाय जठरमुर सवत्सराय च ।
36 सुग्रीवायेति च कटि भुजौ वै विश्ववाहन ।

प्राग्वच्छस्त्राणि सम्पूज्य शिरो वै परमात्मने ।
एवमभ्यच्य मेधावी घट च स्थापयेत्तत ।
त सौवणमय बुद्ध कृत्वा चेव विचक्षण ।
40 तमप्येव तु सम्पूज्य ब्राह्मणाय निवेदयेत् ।

अनेन विधिना पूव द्वादशी समुपोषिता ।
शुद्धोदनेन बुद्धोऽभूत् स्वय पुत्रो जनादन ।
महती च श्रिय प्राप्त पुत्रपौत्रसमन्वित ।

44 भुक्त्वा राज्यश्रिय सोऽथ गति परमिका गत ।[2]
—(p 331-332)

इय व्युष्टि परा जाता भक्तियुक्तस्य ते पुरा ।

शृणुष्व भक्तितो राजन् कार्तिककादशी तथा ।
कि पुनर्द्वादशैतास्तु येनेन्द्रत्व ददु पुरा ।
—(p 338)

1 Cf Ch 46 extra verses after verse 16 in Critical Apparatus

2 Cf extra verses in critical Apparatus of ch 47 verse 6

48 अकृत्वा मत्प्रणाम तु पश्च गर्वेण यद्व्रतम् ।
—(p 340)

नशवेति हरि पूज्य दद्यात्तत्प्रीतय तिर्वन ।
—(p 341)

यथाविभवसारेण ततो गा सप्रदापयत् ।
तथैव तस्या द्वादश्या कृत्वा कम यथाविधि ।
—(p 343)

## (तीर्थविवेचनकाण्डे)

52 समागतस्तीर्थवर द्विजेश
गयामिमा तद्गतमानसस्सन ॥
—(p 164)

मूर्त्तीश्चतस्र आदाय उत्पत्स्यामि वरानन ।
नदी तत्र वरारोहे शुभा पुण्यतरोदका ।
56 विवस्वत सुता रम्या यमुना व भविष्यति ।
सा प्रयागे तु सुश्रोणि ब्रह्मक्षेत्रे तथा शुभा ।
भविष्यति न सन्देहो गङ्गायास्तदनन्तरम् ।
लभन्ते मनुजा सिद्धिमात्मकमसु भाविता ।
60 मम क्षेत्रप्रभावेण भूमि ससारमोक्षणम् ।
असिकुण्ड पर नाम सुरम्य यमुनाम्भसि ।
कूले च दक्षिणे तत्र मथुराया सुमध्यमे ।
तत्र यो मुञ्चति प्राणान् सतत कृतनिश्चय ।
64 गन्धवपुरमुत्सृत्य मम लोक स गच्छति ।
तत्र भाण्डीरक नाम गुह्य क्षेत्र पर मम ।
देवा अपि न जानन्ति नाना यक्षा महासुरा ।
मोदते नागलोकेषु एवमेतन्न सशय ।
68 नागलोक समुत्सृज्य मम लोक प्रपद्यते ।
तत्र कुण्ड महाभागे द्रुमगुल्मलतावृतम् ।
तत्र पूर्वेण पार्श्वेण तस्मिस्तीर्थे सुधार्मिकम् ।
चम्पकै पाटलैश्चैव नानापुष्पैश्च शोभितम् ।
72 लोक वैद्याधर गत्वा मोदते कृतनिश्चय ।
अथात्र मुञ्चति प्राणान् मल्लोक प्रतिपद्यते ।
यमलार्जुनकुण्डेति क्षेत्र कुण्ड पर मम ।
तच्च कुण्ड महाभागे वृक्षगुल्मलतावृतम् ।
76 अप्सरो भवन गत्वा मोदते गतकिल्विष ।
अथात्र मुञ्चति प्राणान् कृत्वा कम सुनिश्चय ।
अप्सरो भवन गत्वा मल्लोक प्रतिपद्यते ।
तथैवार्कस्थल नाम तस्मिन् क्षेत्रे पर मम ।
80 दृश्यते तत्र चादित्यो द्वादशात्मा व्यवस्थित ।
कूपस्तत्र महाभागे प्रसन्नसलिलोदक ।
अथात्र स्नान कुर्वीत एकरात्रोषितो नर ।
स्नान तत्रैव कुर्वीत पञ्चरात्रोषितो नर ।
84 ममैव स प्रसादेन वीरलोकेषु मोदते ।
अथात्र मुञ्चति प्राणानेकचित्तो दृढव्रत ।
वीरलोक समुत्सृज्य मम लोक प्रपद्यते ।
अपर कनक नाम गुह्य क्षेत्र पर मम ।
88 विन्ध्यपृष्ठ महाभागे कूपस्तत्र विधीयते ।
मोदते नाकपृष्ठे स कृतकृत्यो न सशय ।
अथात्र मुञ्चति प्राणान् याति दिव्या परा गतिम् ।
नाम्ना प्रकीतन नाम गुह्य क्षेत्र पर मम ।
92 तत्र चैक शिलापट्ट रक्तचन्दनसन्निभम् ।
मनोज्ञ रमणीय च मम भक्तसुखावहम् ।
यस्तत्र तिष्ठत भूमिमेकरात्रोषितो नर ।
स वायुभवन गत्वा मोदते कृतनिश्चय ।
96 अथात्र मुञ्चति प्राणान् याति लोक ममाक्षयम् ।
सोमकुण्डेति विख्यात तस्मिन् क्षेत्रे पर मम ।
तत्र स्नान तु कुर्वीत सोमलोके स मोदते ।
स्नाने दक्षिणकूले तु शुद्धे तु यमुनाम्भसि ।
100 याति पुण्यकृता लोक मेरुशृङ्गसमाश्रितम् ।
जम्बीर चम्पक नाम तस्मिन् क्षेत्रे पर मम ।
कर्मावरोहण नाम तस्मिन् क्षेत्रे पर मम ।
तत्राभिषेक कुर्वीत विन्ध्यप्रमुखत शुभे ।
104 नाम्ना वितानक क्षेत्र तत्र गुह्य पर मम ।
ततो वल्लभक नाम क्षेत्र गुह्य पर मम ।
अथात्र मुञ्चति प्राणास्तीर्थे वल्लभके मम ।
स्वगलोक परित्यज्य मम लोके महीयते ।
108 ऊषभञ्जनक नाम तस्मिन् गुह्य पर मम ।
अथात्र मुञ्चति प्राणान् शीघ्र याति परा गतिम् ।
अस्ति विन्दुप्रभ नाम तस्मिन् गुह्य पर मम ।
विन्दुरेक पतत्यत्र पवताद्दूरतिक्रमात् ।
112 अस्ति अस्तमन नाम तस्मिन् गुह्य पर मम ।
धाराऽत्र पतते चैका विन्ध्यपर्वतनि सृता ।
अस्ति ताम्रप्रभ नाम तस्य क्षेत्रस्य दक्षिणे ।
अथ दूरात् पञ्चक्रोशात् तत्र कुण्ड पर महत् ।
116 वत्सप्रक्रीडन नाम तस्मिन् गुह्य पर मम ।
—(p 186-191)

